ISSN : 2277-4416

# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका



## 'पद्मश्री'-पण्डितश्रीरघुनाथशर्मस्मृतिविशेषाङ्कः

ISSN : 2277-4416

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

## 'पद्मश्री'-पण्डितश्रीरघुनाथशर्मस्मृतिविशेषाङ्कः

प्रधानसम्पादकः

**प्रो. बिन्दाप्रसादमिश्रः**

कुलपतिः

सम्पादकौ

**प्रो. रामकिशोरत्रिपाठी**
निदेशकः
अनुसन्धानसंस्थानस्य

**डॉ. पद्माकरमिश्रः**
निदेशकः
शिक्षण-शोध-प्रकाशन-संस्थानस्य




६४ वर्षे | वार्षिकं मूल्यम् - १०० रूप्यकाणि

१-४ अङ्काः | जून-सितम्बर-दिसम्बर-मार्च, २००९-१० ई.




*प्रकाशकः —*

**डॉ. पद्माकरमिश्रः**
निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*

**श्रीजी प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००२

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# प्रधानसम्पादकीयम्

शास्त्रतत्त्वस्य सम्वेत्ता पण्डितेषु बृहस्पतिः ।
भासते रघुनाथोऽसौ शर्मोपाधिविभूषितः ।।१।।
विश्वविश्रुतकीर्तीनां स्वाध्यायाध्यापनादिना ।
विहितबहुशिष्याणामद्यापि राजते यशः ।।२।।
महतां सुयशोगाथाप्रकाशनपरो महान् ।
सुषमाया विशेषाङ्को राजतां शास्त्रदीपकः ।।३।।
येषां तपःप्रभावेन शिष्याः शास्त्रविशारदाः ।
लोके सत्ख्यातिमापन्ना राजन्ते ज्ञानवर्द्धकाः ।।४।।
यदि विद्यावतां वृत्तं सुषमापत्रिकाऽन्वितम् ।
प्रकाशते तदा न्यूनं गौरवाय भविष्यति ।।५।।

शास्त्रतत्त्वानुशीलनेन विहितनूतनराद्धान्तानां शास्त्राध्यापनेन विहितानेकशिष्याणां ग्रन्थरचनामाध्यमेन संस्कृतसाहित्यस्य विहितोपकाराणां शमदमादिसाधनेन कृतात्मसाक्षात्काराणां पण्डितश्रीरघुनाथशर्ममहाशयानां वृत्तमभिलक्ष्य सारस्वतीसुषमाया विशेषाङ्कः प्रकाश्यते, इति महाप्रमोदस्य विषयः। एतादृशमहापुरुषाणां यशोबोधकविशेषाङ्कप्रकाशनेन सुषमापत्रिकाया गौरववृद्धिर्भविष्यति। अस्य ग्रन्थस्य सफलप्रसाराय मङ्गलं कामयमानो विरमामि।

वाराणस्याम्
माघकृष्णएकादश्याम्
२०६९ तमे वैक्रमाब्दे

(प्रो. बिन्दाप्रसादमिश्रः)
कुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

# सम्पादकीयम्

ग्रन्थग्रन्थिनिवारणेऽतिकुशलो विद्यावतां भाष्करः
विद्वन्मण्डलमण्डितो बुधवरः शास्त्रार्थचिन्तापरः ।
काशीनाथसुतः प्रसस्ततपसा ब्रह्मप्रमोदान्वितः
सुख्यातो रघुनाथशर्मवचनैस्तस्यैव गाथापरः ।।
ग्रन्थोऽयं स्मृतिपालनेऽतिविमलः श्रद्धावतां प्रज्ञया
शास्त्राणां सुनिबन्धवाक्यकुसुमै रम्यैर्नु मालीकृतः ।
विन्यस्तः सुषमासुकण्ठभरणो माङ्गल्यभावान्वितो
लोके ख्यातिमवाप्य सारसरितो ज्ञानप्रदो राजताम् ।।

संस्कृतवाङ्मये धवलयशसा भाष्कर इव भासते, स्वनामधन्यः सौभद्रेयः पण्डितप्रवरकाशीनाथसुतः श्रीरघुनाथशर्ममहाशयः। संस्कृतसाहित्ये प्रसिद्धेषु सर्वेष्वपि शास्त्रेष्वप्रतिमगतितया गाभीरं पाण्डित्यमादधाना रघुनाथशर्मगुरुचरणाः शास्त्रेषूक्तानुक्तविचारशीला आसन्। तेषां शास्त्राणामध्यनमतिविलक्षणमासीत्। शास्त्रे किं न्यूनं किमधिकं लिखितमस्तीति विचारकुशलास्तेऽभूवन्। एतन्मात्रकथनेनैव तत्त्वावबोधस्य सम्भवे शास्त्रकारेणेदमधिकं लिखितम्, अथ च एतन्मात्रकथनेन सम्यक् तत्त्वावबोधो न सम्भवति, अतस्तत्त्वबोधायैतद्वाक्यं शास्त्रे संयोजनीयमिति तेषामासीद् विचारपद्धतिः। शास्त्रतात्पर्यबोधने दक्षत्वादेवान्ये पण्डितपदभाजोऽभवन्।

शास्त्राध्यापनकौशल्यं तैरध्यापिताः तत्तच्छास्त्रनिष्णाता व्याकरणेऽभिनव-पाणिनिरित्युपाधिभूषिताः पण्डितरामप्रसादत्रिपाठिनो वेदान्ते पण्डितदेवस्वरूप-मिश्रनिभाश्छात्राः ख्यापयन्ति। ग्रन्थरचनानैपुण्यं वाक्यपदीयग्रन्थे अम्बाकर्त्रीदृशो ग्रन्था ज्ञापयन्ति। तैर्नैके ग्रन्था विचरितास्तेषां नामग्रहणमत्र नोचितं विस्तारतो ज्ञानाय तत्तनुजैः पण्डितप्रवरैः प्रो.नरेन्द्रनाथपाण्डेयमहाशयैर्लिखितः 'श्रीरघुनाथशर्मतातपादानां जीवनवृत्तम्' इति निबन्धोऽवलोकनीयः। साधनापद्धतिरपि तेषामतिविलक्षणाऽसीत्। भक्त्या ते कृतरामसाक्षात्कारा योगेन च कृतात्मसाक्षात्कारा आसन्। शमादिसाधनाविषये किञ्चित् स्मरणम्—

पं.श्रीरामप्रसादत्रिपाठि-पं.देवस्वरूपमिश्रप्रभृतिभ्यस्तच्छिष्येभ्योऽस्मद्गुरुभ्योऽधिगत-प.रघुनाथशर्मकीर्तिरहं तान् द्रष्टुकामस्तद्वसतिं बलियाजनपदस्थं छात्राग्राममाप्नुवम्। तत्र मच्छ्रुतगुणतोऽतिगुणान् मच्छ्रुतसाधनातोऽधिक-साधनासम्पन्नान् गुरुचरणानालोक्य तृप्तान्तःकरणोऽहं समवर्ते। तद्रात्रौ ते मां चिरकालमुपदिदिशुः। प्रातः प्रस्थानकालिक उपदेशस्तावत्, यो ब्राह्मणः सुरापानादिदोषवर्जितः परस्त्रीगामी नास्ति। प्रातः सायं गायत्रीं जपति, सन्ध्याञ्चोपासते, दुर्गासप्तशतीं प्रतिदिनं सविधि पठति, तत्कृते किञ्चिदपि ऐहलौकिकं पारलौकिकं प्राप्यमप्राप्यं न भवति। स सर्वमाप्नोति चान्ते ब्रह्मपदं समश्नुते। स्वविषये तैरुक्तमद्यावधि स्वप्नेऽपि परस्त्री कामधिया मया न दृष्टा।

ईदृक्तपःस्वाध्यायनिरतानाम् अधीतबोधाचरणप्रचारैः, इत्युक्तिं सनाथयतां विश्वविश्रुतकीर्तीनां पण्डितप्रवराणां श्रीरघुनाथशर्ममहाशयानां जीवनवृत्तमभिलक्ष्य सारस्वतीसुषमाया विशेषाङ्कः प्रकाशत इति महत्प्रमोदास्पदम्। शास्त्रमर्मज्ञानां पण्डितप्रवरश्रीरघुनाथशर्मसदृशानां पवित्रचारित्र्यसंवृतोऽयं लोके ख्यातिं गमिष्यतीति मन्मतिः। एतद्विशेषाङ्कपाठका अपि माङ्गिलजीवनवृत्ताध्ययनेन मङ्गलयुता भविष्यन्ति।

अन्तेऽस्य ग्रन्थस्य प्रचारप्रसाराय भवानीविश्वनाथौ वन्दमानौ यज्जीवनवृत्तमभिलक्ष्य प्रवृत्तोऽयं विशेषाङ्कस्तेषां चरणयोर्नतिं समर्पयन्तौ विरमावः।

विदुषां वशंवदौ

रामकिशोर त्रिपाठी | पद्माकर मिश्र

(प्रो. रामकिशोरत्रिपाठी) | (डॉ. पद्माकरमिश्रः)

# विषयानुक्रमणी



काशीनाथपदारविन्दयुगलोन्मत्तद्विरेफोपमः
काशीनाथकृपासमाढ्यसकलाम्नायादिचिन्ताधनः।
काशीनाथपुरीनिवासविलसत्पुण्यप्रतापोज्ज्वलः
काशीनाथशुभाभिधोऽस्य जनको वर्वर्ति सर्वोपरि।।





एतद्राष्ट्रप्रधानमन्त्रियुगलाम्भोजाभपाण्युल्लसत्-
श्रीमत्संस्कृतविश्वभारतिपुरस्कारैकसम्मानभाक्।
श्रीमद्वाक्यपदीयपुस्तकगताम्बाकर्त्रिसँल्लेखकः
स श्रीमान् रघुनाथशर्मबुधराड् भात्यत्र लेखव्रतः।।



सारस्वती सुषमा
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ६४ वर्षे | ज्येष्ठ-भाद्र.-मार्ग.-फा.पू., वि.सं. २०६६ | १-४ अङ्काः |
|---|---|---|

# तं नौमि पण्डितवरं रघुनाथसंज्ञम्

**मिश्रोऽभिराजराजेन्द्रः**
पूर्वकुलपतिः
वाराणसीस्थ-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❋ ❋ ❋

यच्छास्त्रसंविदुदधिं परितोऽप्यगाधं
विद्याधराः परिजिगाहिषवः कियन्तः।
संस्पर्धिनस्समयुगाः शनकैर्निमग्ना-
स्तं नौमि पण्डितवरं रघुनाथसंज्ञम्।।१।।

यत्पाण्डितीरसकथाश्चलसूरिगोष्ठी-
हृद्याऽनुरञ्जनकृतेऽप्यभवन्नुपायाः।
अद्यापि यस्य समुदाह्रियते निसर्ग-
स्तं देशिकेन्द्ररघुनाथमहं नमामि।।२।।

गङ्गातटस्थबलियाजनमण्डलीये
विद्वद्धुरीणसरणीद्धलसत्समज्ञे।
छाताह्वये विशदभूमिसुराग्रहारे
लेभे जनिं स रघुनाथ उदारवृत्तः।।३।।

श्रीपुण्यराजपदवीमनुवर्तमानो
यो वै हरेर्विमलवाक्यपदीयनाम्नि।
टीकाञ्चकार गिरिजाकृपयैव योऽम्बा-
कर्त्रीं जयेत्स विबुधो रघुनाथशर्मा।।४।।

वाराणसीपरिसरे बुधशिष्यगोष्ठ्यां
रम्या यदार्जवकथाः कुतुकं सृजन्ति।
सारस्वतं तमिह जङ्गमपारिजातं
वन्दे परोक्षवपुषं रघुनाथपादम्॥५॥

मानापमानयुगलं ननु लाभहानी
मत्वा समं सदसि वा प्रथिते समाजे।
यो वै जिजीव निजजीवनमात्ततोषो
वन्द्यस्स मुक्त इह दैन्यपलायनाभ्याम्॥६॥

जीवन्ति ये जगति मुष्टिमितोपलब्ध्या
क्षीणायुषस्सपदि ते प्रसभं म्रियन्ते।
ये सन्ति हन्त रघुनाथसमा बुधेन्द्रा-
स्तेषां जरामरणजं क्व भयं जगत्याम्॥७॥

मिश्रोऽभिराजपदभाङ्निजविश्वविद्या-
गेहस्य भास्वरमणिं रघुनाथसूरिम्।
राजेन्द्र एष बहुमानभराऽवनम्रः
संस्तौति तद्गुणचयाऽऽहृतचित्रचित्तः॥८॥

विश्वविद्यालये पूर्वं सम्पूर्णानन्दसंज्ञके।
सेवमानो द्युसद्वाणीं श्रीरघुनाथमण्डिते॥९॥

मिश्रोऽभिराजराजेन्द्रः प्रेक्षावतां कुले पतिः।
विद्यावंशमणिं स्तौति रघुनाथं बुधोत्तमम्॥१०॥

॥इति श्रीमदभिराजराजेन्द्रविरचितं रघुनाथाष्टकम्॥







नानापण्डितमण्डलोद्भटरटद्वादीभपञ्चाननो
व्याख्याटिप्पणिकाप्रकाशनविधिव्यापारलीलाधनः।
तत्तच्छिष्यप्रशिष्यसञ्चयलसच्चर्चासमर्चान्वितः
प्राग्भिः श्रीरघुनाथशर्मसुमतिस्तोष्टूयतेऽहर्निशम्।।



# श्रीरघुनाथवैभवामृतशतकम्

**पण्डितश्रीमनुदेवभट्टाचार्यः**
प्राध्यापकचरः, व्याकरणविभागः,
वेदवेदाङ्गसङ्कायः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी।



आलोहितार्कनवमण्डलरश्मिभिन्न-
सम्वर्तिकाऽनुपमकोकनदाद्भुतश्रि।
सद्भक्तसिद्धगणचित्तसरोमरालं
देव्याः पदद्वयमहो ननु नन्नमीमि॥१॥

एतत्सुन्दरहेमकोकनदभाभास्वत्प्रभाभासुरं
किं वा पल्लवतल्लजालिदललालित्यैकलीलागृहम्।
आहो नन्दनरक्तचन्दनगलद्धाराप्रवाहाद्भुतं
देव्याः पादसरोरुहं निरुपमं वन्दामहेऽहर्निशम्॥२॥

गाढालक्तकरागरञ्जितमहो यद्वामपादाम्बुजं
मञ्जीरोऽपि तत्र शिञ्जितधनो यो राजहंसायते।
वक्षोजैकघटोऽपि कञ्चुकपटः प्रेमप्रवाहाम्बुधिः
कौशेयार्धवृतो मतिं वितनुतां देवोऽर्धनारीश्वरः॥३॥

यो रत्नाकरकन्यकाभुजलतापाशैकदीक्षापटु-
र्यो भोगीश्वरमौलिरत्नविसरप्रोद्भासिदिव्यद्युतिः।
यः शश्वद् श्वशुरालयोचितमहानन्दैकसम्भोगवान्
आनन्दं वितरीतरीतु भगवान् वस्सर्वदो माधवः॥४॥

शास्त्रं नाम रहस्यचिन्तनकृतामेकास्पदं सुन्दरं
यत् सत्पात्रविवेकभूमिविलसच्छाखोपशाखान्वितम्।
एतत्तत्त्वपयोनिधौ मतिमतां सम्मजतां धीमता-
मानन्दातिशयस्सदा ह्यनुभवस्यैवास्ति सिद्धं पदम्॥५॥

संस्काराङ्कुरसम्भवा स्वगुरुपत्सेवालवालोदया
सद्वैदुष्यदला यशःफलबला याऽऽस्तिक्यकन्दालभृत्।
श्रौताचारविचारसौरभभरैः सम्वासयन्ती दिशः
सा विद्याव्रततिर्द्विजेन्द्रविसरैराश्रीयतां सन्ततम्।।६।।

तत्त्वाम्भोनिधिमन्थनोद्भवसुधाभाण्डं कराब्जे वहन्
संसारोषरभूमिपान्थनिकरानाश्वासयन् सन्ततम्।
प्रत्यक्षानुमितिश्रुतित्रिनयनैर्द्रष्टा पदार्थानहो
सत्पात्रस्थित एष शास्त्रपुरुषो बोबुध्यते धीधनैः।।७।।

शब्दाशब्दविचारबीजजननस्फोटालवालोदयो
धातुप्रत्ययकाण्डयुग्मलसितः सन्ध्यादिशाखान्वितः।
भूयः साधवशब्दपत्रमहितो वाक्यैः फलैर्मण्डितो
जीयाद् व्याकरणाभिधः सुरतरू रम्यो द्विजैरन्वितः।।८।।

रिङ्गत्तुङ्गहिमालयावलिलता भात्युत्तरस्यां दिशि
दीपद्वीपसमुज्ज्वला विजयते यस्याश्च दिग्दक्षिणा।
कृष्णासिन्धुसरस्वतीत्रिपथगाकावेरिकानर्मदा-
स्रोतःक्षालितदिक्तटा विजयते सा भारती मेदिनी।।९।।

श्रीमद्भारतभूमिरत्नवलये विद्वत्समाराधिते
भात्येवात्र समाजकार्यविभजल्लोकव्यवस्था तु या।
कर्तव्यादधिकारतः प्रतिकुलं निष्ठामयी जन्मतो
सा वर्णाश्रमनामतस्त्रिजगतीभाण्डे प्रसिद्धास्त्यहो।।१०।।

श्रौतस्मार्तमहाविधानविलसत्पारम्परीपूजिता
द्रव्याद्यर्जननिश्चितार्यसरणीशङ्काविहीना सदा।
नो निर्वृत्तिकतापिशाचपटलीदुस्पर्शनैर्दूषिता
सा वर्णाश्रमधर्मसंस्थितिरियं वर्वर्ति सर्वोपरि।।११।।

श्रीमद्भारतवर्ष एव नितरां सद्ब्राह्मणानां कुलं
प्राचीनात् समयादभूदिदमहो द्वेधा विभक्तं महत्।
पञ्चद्राविडपञ्चगौडपदतो यत्तत् प्रसिद्धिं गतं
सिद्धान्ते तु समं समं द्विविधता क्षेत्रात्मिकेति स्थितिः।।१२।।

सृष्ट्यारम्भत एव यस्समभवद्भेदः प्रजानां महान्
सर्वं तत्तु चतुष्टयात्मकमहो यद् शास्त्रसिद्धं सदा।
कश्चिद् वक्त्रज एष बाहुज इतो यश्चोरुजः पादजः
नूनं वैदिकसंस्कृतिर्ध्रुवमियं तत्रैव लीनास्ति सा।।१३।।

तत्र ब्राह्मणसञ्चयस्य महतो भागौ तु यौ कीर्तिता-
वौदीच्योऽन्यतरस्तु तस्य नितरां भूम्यां प्रसिद्धिं गतः।
योऽयं सम्प्रति पञ्चगौडपदतो विख्यातमास्ते मुदा
श्रीमद्विन्ध्यहिमालयान्तरगतो राराज्यतेऽहर्निशम्।।१४।।

भूयो भाति तु पुण्यभूमिरिति यच्छब्देन शास्त्रेष्वहो
आर्यावर्त इति प्रसिद्धपदवी सर्वत्र या विश्रुता।
आर्यम्लेच्छविचारणासु बलवद् यत्पूर्वतन्त्रे स्मृतं
स्वेच्छातस्तु परिभ्रमत्यनुदिनं श्रीकृष्णसारोऽत्र सः।।१५।।

यत्रैवात्र महीधरावनिधरश्रीमद्हिमाद्रेर्गिरेः
तास्ताः पुण्यजलाः स्रवन्ति सरितो याश्चासमुद्रं गताः।
नानाशास्त्रकदम्बनिष्ठधिषणैर्विद्वद्वरैर्भूषितं
राराजीति समस्तलोकवलये पूर्वाञ्चलाख्यं महः।।१६।।

श्रीपूर्वाञ्चल एव यो जनपदः सन्मानवैकादृतो
यस्तु श्रीबलिदैत्यराजधरणीत्याख्यायते सर्वतः।
एतत्तत्कृतदानवारिसुधया सम्प्लावितोऽहर्निशं
तस्माच्छ्रीबलियेतिमञ्जुलपदव्याख्यानविख्यापितः।।१७।।

नानादर्शनकाव्यसञ्चयवनीसञ्चारपञ्चाननैः
प्रेष्ठप्रष्ठपटिष्ठपण्डितचयैर्योऽहर्निशं मण्डितः।
श्रीमन्मङ्गलमुख्यशूरनिकरैर्यो भासितस्सन्ततं
सोऽयं श्रीबलियाभिधो जनपदो वर्वर्ति सर्वोपरि।।१८।।

अस्मिञ्छ्रीबलियाभिधे जनपदे रम्ये गुणैकाकरे
नानापण्डितमण्डलीपरिवृढव्यूहप्रभूतोज्ज्वले।
तत्तच्छास्त्रजसंशयातपहरच्छत्रोपमः कश्चन
ग्रामः सम्प्रतिभाति सम्प्रति मुदा छाताभिधः सुन्दरः।।१९।।

नानादिग्गतशिष्यसञ्चयलसत्पादद्वयाम्भोरुहैः
नानाशास्त्रमहासमुद्रमथनप्रोद्दामदण्डाचलैः।
नानाम्नायमहामताम्बुधिसुधास्वादैकदीक्षाधनैः
ग्रामः कैश्चन सुन्दरो मुहुरहो छाताभिधो नम्यते॥२०॥

अस्त्येवात्र तु कश्चिदेष सुमतिः श्रीविप्रवंशो महान्
आ सृष्टेरपि सर्वशास्त्रमथनव्यापारलीलाधनः।
पण्डा या सदसद्विवेकपथिकृद्बुद्धिस्तु तद्योगतः
श्रीपाण्डेयपदोज्ज्वलः स जितवाँल्लोकद्वयं नीतितः॥२१॥

त्रेतायामवताररत्नमभवद् श्रीरामचन्द्रः प्रभुः
यल्लीलाब्धिसुधास्वहो त्रिजगती मग्ना मुदा हर्षतः।
एतच्छासन एव सर्वभुवनं रेजे मुहुर्यद्यपि
तत्राप्यन्तिकताकृपा तु बलियाख्यस्थान एवाभवत्॥२२॥

विश्वामित्रमहाऋषिः किल भविष्यद्दर्शकैकाग्रणीः
श्रद्धाभक्तिसमन्वितोऽपि नितरामध्यापकत्वं भजन्।
दिव्यास्त्रौघमशिक्षयन्निरुपमं रामं तथा लक्ष्मणं
यत्राद्यापि विभान्ति ताश्च सकला आख्यास्तदाख्यायिकाः॥२३॥

यत्रायं वहति प्रकाममधुरो वारां प्रवाहोऽद्भुतः
श्रीश्रीमद्भगवन्मुखाब्जविलसन्नेत्राब्जतः सन्ततम्।
यो नूनं सरयूनदीपदपवित्राख्यासमाख्यापितः
सीतारामपदाब्जधावनधियैवात्रागतः साग्रहम्॥२४॥

वैकुण्ठाधिपविष्णुपादकमलद्वन्द्वामृतैकास्पदं
गोत्राधीशभगीरथाद्भुततपोव्याख्यानविख्यापिता।
या लोकत्रयसर्वजन्तुपटलीमोक्षप्रदानव्रता
राराजीति समस्तभूमिवलये श्रीजाह्नवीयं सुधा॥२५॥

श्रीगङ्गासरयूप्रवाहयुगलीसम्भेदलीलास्पदं
नानादिव्यमहर्षिगोत्रकुलजप्रख्यातविप्रालयम्।
श्रौताचारपरम्परामणिमहामालासुमेरूत्सवं
पास्पर्धीति न केन हन्त बलियाख्यं मण्डलं सन्ततम्॥२६॥

एतस्मिन् बलियाभिधे जनपदे देवाङ्गनाभीप्सिते
ते ते सन्ति मनोहरा बहुविधा ग्रामा: स्वधर्माकरा:।
तेषु ग्रामचयेषु सर्वधरणीसौभाग्यवित्तेष्वहो
भात्येवैष निरन्तरायमहिमा छाताभिधानोऽनिशम्।।२७।।

नानातर्कविवादभीषणमहाशङ्काङ्कुरच्छाततो
नानापक्षविपक्षदारुणमशीलेपप्रथाच्छातत:।
नानाम्नायविनोदनोदननयप्रत्यर्थिधीच्छाततो
नानापण्डितमण्डितो विजयते ग्रामस्तु छातास्तत:।।२८।।

ग्रामेऽस्मिन् किल सन्ति सन्ति शतशस्सत्कर्मदीपोज्ज्वलत्-
सद्वंश्यान्यसमानि मानिजनतामान्यान्यमून्यादरात्।
चातुर्वर्ण्यमयानि यानि सुकुलानीमानि सर्वाण्यहो
पुञ्जीभूय इवास्ति सृष्टिरखिला नूनं त्वमुस्मिन्नियम्।।२९।।

तस्मिन् ब्राह्मणवंशवारिजसमूहाहस्करे सुन्दरे
ग्रामे ग्राम्यविधानहानिरहिते छाताभिधानेऽधुना।
श्रीमान् शाब्दिकवंश एष समभूत् सूर्यायमाणोऽनिशं
पाण्डेयोऽपि स हन्त शर्मपदभाक् स्मार्तप्रथातन्त्रत:।।३०।।

आजन्मावधि तत्र तत्र विषयेऽनेकत्र सर्वत्र ये
भूयो भूरिमहापरिश्रममहावित्तैकवित्तास्सदा।
तत्तच्छात्रपरम्परापरिलसत्पाण्डित्यप्रौढप्रभा:
ते ते पात्रपवित्रसत्रमतयो वंशे तदीयेऽभवन्।।३१।।

नूनं प्रस्तुतसंस्तुतामरवचोवल्लीमतल्लीलसन्-
नानासौरभभूषितागममहासिद्धान्तसिद्धात्मन:।
आम्नायादिसमस्तवाङ्मयमहापाथोधिमन्थाचला:
सर्वे वाङ्मयतन्मयास्तु कृतिनो जातास्तदीयेऽन्वये।।३२।।

तत्राभूत् किल कश्चिदेष सुरवाग्भागीरथीपुष्कर-
प्रात:स्नानशिवाभिषेकप्रभृतिस्मार्तप्रथाप्राञ्जल:।
नित्यं यो कवचार्गलादिविलसत्तत्सप्तशत्यादिक-
ग्रन्थाद्यध्ययनार्चनादिषु सदा तल्लीनचेता द्विज:।।३३।।

यो वैयाकरणाम्बुजाम्बरमणिस्साहित्यपाथोनिधि-
र्यो नैयायिकनायकः श्रुतिशिखाचिन्तैकचिन्तामणिः।
मीमांसामतमार्मिकोऽमितमतिर्मर्मज्ञमुक्तामणिः
काशीनाथ इति प्रसिद्धिमगमद् नाम्ना द्विजेन्द्राग्रणीः॥३४॥

आसीद् यस्तु सदा द्विजोचितविचाराचारचुञ्चुर्मुहु-
र्वेदव्याकरणागमार्हतजिनादिप्रोक्तसिद्धान्तधीः।
स्मार्ताचारमहाविधानसरणीप्राचुर्यचातुर्यभाक्
काशीनाथ इहाभवद् द्विजवरः शान्तप्रकृत्यन्वितः॥३५॥

वेदान्तोदन्तदान्तः कविकृतिसुकृती यः पुराणे पुराणः
साङ्ख्ये सङ्ख्यावदग्र्यो जिनजनजयधीर्बौद्धबोधैकबाधः।
मीमांसामार्मिकश्रीः पदविधिषु विधिर्भाष्यभाषैकभूषः
श्रीकाशीनाथशर्मा ह्यभवदयमहो सर्वविद्वद्वरेण्यः॥३६॥

यो वैशेषिकदर्शने कणचणो योगेऽपि भोगीश्वरः
यः साङ्ख्ये कपिलः पराशरसुतो वेदान्तशास्त्रे तथा।
मीमांसासु च जैमिनिःपुनरहो तर्केऽपरो गौतमः
काशीनाथ इहाभवद् द्विजवरो यः सर्वशास्त्रान्वितः॥३७॥

सूर्याचन्द्रमसौ च शङ्खलिखितौ वर्षोपवर्षौ तथा
किं वाऽगस्त्यसुतीक्ष्णकौ पुनरिमौ श्रीकृष्णनीलाम्बरौ।
आहो नारदपर्वतौ ध्रुवममू याजोपयाजौ यथा
काशीनाथबुधेश्वरादभवतां पुत्रौ तथा सुन्दरौ॥३८॥

आ बाल्यादिमकौ बभूवतुरलं विद्यावदग्रेसरौ
अभ्यासावगमप्रभूतप्रतिभाप्रोद्यत्प्रभाप्राञ्जलौ।
तत्तच्छास्त्रनिरन्तरालपठनप्राचुर्यचातुर्यतः
शास्त्रार्थध्वरवादिवादविजयप्राप्तिप्रथापण्डितौ॥३९॥

विद्वांसौ हरिनाथ एष रघुनाथोऽयं सदा बाल्यतो
ग्रन्थाभ्यासमहाश्रमैकनिरतौ लक्ष्यैकनिष्ठात्मनौ।
शुद्धाचारविचारचारुचरितप्रोद्भूतपूतप्रभौ
सर्वेषां विदुषामिमावभवतां तौ प्रीतिपात्रं मुहुः॥४०॥

श्रीश्रीमद्भगवत्स्वरूपरघुनाथोऽयं पुरा योऽभवद्
भूयो यस्तदभिन्नरूपहरिनाथोऽसौ तथैवाऽभवत्।
नूनं हन्त कलौ समस्तजनताकल्याणसम्पत्तये
तावेव प्रथितौ स्वनामलसितौ छातास्वभूतान्तमाम्।।४१।।

पाणिन्यादिमहामुनित्रयसमारब्धप्रकर्षास्पद-
श्रीमद्व्याकरणाभिधागममहापीयूषपाथोनिधेः।
रिङ्गत्तुङ्गतरङ्गरङ्गविभवव्यासङ्गसङ्गोद्भवाः
कल्लोलास्तनयौ विलोक्य सततं धन्या अभूवन्तमाम्।।४२।।

भ्रात्रोस्सोदरयोस्तयोरभययोर्जातो जवीयांस्तु य-
स्स श्रीमान् हरिनाथ एष समभून्नूनं यथार्थाभिधः।
पूर्वं यः समधीत्य सर्वविषयान् प्रेम्णा तथोत्साहतो
भ्रातर्येव लघीयसि प्रतिपदं चिक्षेपरूपं महान्।।४३।।

यत्पूर्वं प्रभुणा कृतं सुकविना श्रीशम्भुना दुर्गमं
श्रीमद्रामपदाब्जभक्तिमनिशं प्राप्त्यै तु रामायणम्।
पूर्वं हन्त समीरितं तु तुलसीदासेन काव्योत्तमं
सद्यश्श्रीरघुनाथशर्महरिनाथेन स्वयं साधितम्।।४४।।

काशीनाथपितुस्ततश्च हरिनाथादग्रजात्सोदराद्
भास्वद्भास्वरभालसत्तमपदाद्विद्यामणेराकरात्।
तत्तद्रत्नचयार्चिराढ्यविषयान्सर्वानवाप्य स्वयं
रेमे श्रीरघुनाथशर्मबुधराडध्यापकैकाग्रणीः।।४५।।

प्रामाण्यं परतस्स्वतःकिल सृती आश्रित्य तत्तिष्ठति
तत्र व्याकरणे स्वतो मतमदो निश्चित्य सर्वादृतम्।
तस्मिन् शास्त्ररणे सदैव किल यः पाण्डित्यपञ्चाननः
सोऽयं भाति निरन्तरं हि रघुनाथोऽयं महापण्डितः।।४६।।

भाषावल्लभपाणिपल्लवदलालङ्कारसल्लेखनी-
तत्तच्छास्त्रमहाविशालविषयप्रख्यापनैकव्रतः।
तत्तत्पुस्तकतल्लजप्रणयनप्रौढप्रभाप्राञ्जलो
रराजीति सदा मुदाऽत्र रघुनाथाख्यो विपश्चिद्वरः।।४७।।

आदेशागमसम्प्रसारणगुणश्लुस्थानिवद्वृत्तिमत्-
तृज्वत्-सद्-व्यपदेशिवत्-प्रकृतिवद्-वा-ष्टुत्व-णत्वादिकम्।
एतत् पाणिनितत्त्वरत्नमखिलं येनैव तज्ज्ञापितं
सोऽयं सम्प्रतिभाति हन्त रघुनाथाख्यो महान् पण्डितः॥४८॥

आसृष्टेरालयं यावदपि च सकला उच्यमानास्तथोक्ताः
शब्दास्सर्वेऽपि नित्या इति विलसति यस्य स्वसिद्धान्तपक्षः।
आवापोद्वापितप्रत्ययप्रकृतिलसत्कल्पनाकल्पवल्ली-
माश्रित्यायं विभाति ध्रुवमथ रघुनाथाभिधानो द्विरेफः॥४९॥

एषा नित्यापि या कल्पितपदनिचयैर्ज्ञायते शाब्दिकेन्द्रैः
सर्वार्थाढ्याऽपि बृद्धव्यवहरणवशान्निश्चितार्थं ब्रवीति।
इत्थं श्रीपाणिनीयागमगदितमतिर्बोधिता येन शिष्यान्
पद्मश्रीचारुकीर्तिर्जयति स रघुनाथाख्यशर्मा समन्तात्॥५०॥

श्रीमत्पाणिनिदेशिको रचितवान् यच्छब्दशास्त्रं महद्
श्रीकात्यायनकोविदः परमतो जग्रन्थ तद्वार्तिकम्।
पश्चात्तत्र पतञ्जलिः किल महाभाष्यं बभाषे ततः
सर्वं यस्य मुखाम्बुजे स रघुनाथाख्योऽनिशं राजति॥५१॥

पास्पर्धीति न येन कोऽपि विबुधः शास्त्रास्त्रतोऽप्यल्पकं
मामण्डीति च यस्सदा त्रिजगतीं कीर्त्या महत्याऽखिलाम्।
शाशासीति भवान् विपक्षनिवहाञ्छास्त्रेषुभिस्सन्ततं
साम्यं केन हि बोभवीतु भवतो भूयोऽस्तु तुभ्यं नमः॥५२॥

यस्स्वीयोदयतो विभूष्य बलियाख्यं मण्डलं सन्ततं
काशीमेत्य धियाऽप्यधीत्य नितरामध्याप्य शास्त्राण्यलम्।
तत्तत्पुस्तकसञ्चयान् रचितवान् यो हेलया लीलया
तम्वन्दे रघुनाथनामकमहं पूज्यं गुरूणाङ्गुरुम्॥५३॥

यस्याध्यापनहेमपर्वतगलद्विद्यासुधास्यन्दिनी
गङ्गा भारतवर्षशिष्यनिवहानाप्लावयन्ती मुहुः।
सर्वान् पावयति प्रकामममितः शङ्काकलङ्कादहो
सोऽयं श्रीरघुनाथशर्मबुधराड् वर्वर्ति सर्वोपरि॥५४॥

जीवब्रह्मयुगैकतां हि विदधद् शास्त्रं महद्राजति
वेदान्ताख्यमहो महोविलसितं यद्दर्शनैकाधिपम्।
श्रीमच्छङ्करदेशिकेन्द्रविवृतिव्याख्यासमाख्यापितं
सर्वं श्रीरघुनाथशर्मवदनाम्भोजे मुहू राजति।।५५।।

वेदव्यासमहामुनीन्द्ररचितश्रीब्रह्मसूत्रावली
श्रीमच्छङ्करमस्करीन्द्रविलसत्सद्भाष्यभूषावली।
श्रीवाचस्पतिभामतीपदकजक्वाणज्झणज्झङ्करी
सर्वं श्रीरघुनाथशर्मवदनाम्भोजे मुहुर्नृत्यति।।५६।।

पाराशर्यवचस्सरोजममलं यद् ब्रह्मसूत्रात्मकं
पश्चाच्छाङ्करभाष्यभूषितमहो यद् भामतीभासितम्।
यो वा कल्पतरुः पुनः परिमलो योऽद्वैतसिद्धिस्तथा
सर्वं श्रीरघुनाथपण्डितमुखे रात्रिन्दिवं भासते।।५७।।

नानादर्शनकाव्यसञ्चयवनीसञ्चारपञ्चाननः
नानानीतिविधाननूत्नसरणीशास्त्रव्यवस्थापकः।
नानावाङ्मयसञ्चयैकशरणच्छात्रव्रजैकार्चितः
स श्रीमान् रघुनाथशर्मसुमतिर्मान्यो न कैर्भूतले।।५८।।

सर्वैः शिष्यैः प्रशिष्यैरहमहमिकयैवार्चितो यस्य पादो
भूयश्चाध्यापनेऽपि क्वचिदपि न कदाचिद् यदीयो विषादः।
कुर्याच्छास्त्रे प्रवृत्तिं सपदि तु महतीमेतदीयप्रसादः
शङ्कापङ्कावसादो जयति स रघुनाथस्य शास्त्रस्यवादः।।५९।।

यच्छिष्यास्त्रिजगद्विजित्य सततं भूमण्डले मण्डिता
यद्ग्रन्थेषु समेष्वहो प्रतिपदं ते वादिनः खण्डिताः।
दुर्वादप्रतिपादिकाः कुमतयो मध्येसभं दण्डिताः
स श्रीमान् रघुनाथशर्ममतिमान् मान्यो न कैः पण्डितैः।।६०।।

सूत्राणामनुशासने पुनरहो तद्वार्तिकख्यापने
भाष्येष्ट्यादिविमर्शने तदुपसंख्यानैकसङ्ख्यापने।
एतद्वृत्त्यनुवृत्तिसत्प्रणयनेष्वाहो दरीदृश्यतां-
रूपं चाप्यदसीयबुद्धिविभवाद्भुत्यप्रभूतस्थितिः।।६१।।

एतच्छिष्यचया न तेऽत्र भुवनं जित्वैव तुष्टिं गताः
सर्वे दिक्करिणो यथैव सततं धृत्वा महीं संस्थिताः।
एतत्स्फूर्जथुभीमबृंहितमहाघोरारवन्यक्कृता
हंहो पण्डितसन्निभाः क्व नु गतास्ते ते वराका भुवि।।६२।।

अदसीयेषु समस्तशिष्यविसरेष्वाद्यो महीयानसौ
भुवने पाणिनिसम्प्रदायविलसत्पारम्परीपूजितः।
इदमीया अपि सर्वशिष्यमणयश्शास्त्रेष्वलं पण्डिता
अयकं भात्यवनीवनीषु नितरां रामप्रसादाभिधः।।६३।।

एतत्पादपयोजषट्पदसमाश्शिष्योत्तमाः सर्वतो
भूम्यां बोभुवति प्रशस्तमतयो लीनास्तु शब्दाम्बुधौ।
श्रीमत्पण्डितरामयत्न इति यो देवस्वरूपस्तथा
सर्वस्मिन्नपि भारतेऽसकृदहो आप्तप्रसिद्धी उभौ।।६४।।

एताभ्यामपि पूर्वपश्चिमदिशौ दक्षोत्तराशे इमा
जित्वा भारतभूमिचक्रवलये सत्कीर्तय स्थापिताः।
नूनं श्रीगुरुपादपद्मयुगलीकारुण्यतारुण्यतः
सर्वं सिद्ध्यति शास्त्रवागियमहो आभ्यां तु संसाधिता।।६५।।

श्रीश्रीमद्रघुनाथशर्मविदुषां छात्रेष्वमीषूत्तरे
ष्वस्मज्ज्येष्ठसहोदरोऽभवदसौ गुर्वङ्घ्रिसेवाधनः।
श्रीमत्पण्डितरामशङ्करकृती शोधाब्धिपारङ्गतो
नानापुस्तकसञ्चयाम्बुधिमये मग्नो य आजीवनम्।।६६।।

हिन्दीसंस्कृतवङ्गसाङ्ग्लभणितिव्रातेषु भूयस्तरां
तत्तत्पत्रकपत्रिकासु नितरां यल्लेखवृन्दान्यहो।
सर्वत्रैव हि सन्ति सन्ति सततं पारेसहस्रं मुहुः
नूनं शोधमयानि तानि बहुशश्श्रीविश्वविद्यालये।।६७।।

काले यत्र नहि प्रकाशितमभूद् भाष्यप्रदीपादिकं
तस्यैकत्र तु हन्त नित्यपठनं नूनं हि कष्टश्रितम्।
एवं वाक्यपदीयपुस्तकमहो टीकोपटीकान्वितं
सर्वं श्रीरघुनाथतस्स बुबुधे श्रीरामयुक्शङ्करः।।६८।।

राजारामपितामहस्य समभूज्ज्येष्ठस्तु पौत्रः खलु
　　यस्येच्छा महती ह्यधीत्य समभूच्छ्रीमुग्धबोधं हि तम्।
पाणिन्यध्ययनार्थमेष हि परस्तात्तां मुदाऽपूरयत्
　　सर्वं श्रीरघुनाथपादयुगलप्रीत्या बभूवाधिकम्।।६९।।

नो एवात्र हि भारतीयविबुधास्तेभ्योऽपठन्नातुराः
　　किन्तु श्रीरघुनाथतोऽधिभुवनं वैदेशिका देशिकाः।
ते तेऽप्यस्य पदारविन्दयुगलीमध्यास्य पारङ्गता-
　　स्तच्छास्त्रकदम्बके समभवन् राष्ट्रस्य यद् गौरवम्।।७०।।

कश्चित्तावदमेरिकावसुमतीवास्तव्य एवाभवत्
　　सोऽयं पाणिनिधातुरूपविलसल्लुङ्प्रक्रियासन्ततौ।
यश्च्ल्यादेशविधिप्रशस्तसरणीश्रित्य शोधं कृतः
　　सर्वं श्रीरघुनाथपण्डितगृहं स्थित्वा पुरा साग्रहम्।।७१।।

पूर्वं श्रीपितृदेवचारुकृपया मध्यात्ततः सोदरात्
　　ज्येष्ठाच्चापि तु रामशङ्करबुधाद्रामप्रसादादपि।
सर्वस्मात् समधीतवानहमहो शिष्यौ तदन्त्या उभौ
　　वन्देऽहं तु परं गुरुं मुहुरमुं तं श्रद्धया भक्तितः।।७२।।

रिङ्गत्तुङ्गतरङ्गरिङ्गणगणव्यासङ्गगङ्गाङ्गनाऽ-
　　पाङ्गोत्सङ्गशुभाङ्गमङ्गलगलत्सत्प्राङ्गणालिङ्गिता।
काशी नाम पुरीश्वरपुरी शम्भुत्रिशूलोपरि
　　यत्रैते रघुनाथशर्मसदृशः सन्त्येव विद्वद्वराः।।७३।।

नित्यं श्रीललितासहस्रपदवीनामावलीमल्लिका-
　　मालालीं तु समर्प्य यस्तु भगवच्छ्रीचण्डिकायै मुहुः।
रेजे तत्पदपद्मपीठमधुपो रात्रिन्दिवं सन्ततं
　　तं श्रीमद्रघुनाथनामकगुरुं भूयस्तरां नौम्यहम्।।७४।।

नानाग्रन्थकदम्बचारुरचनाप्राचुर्यचातुर्यधीः
　　नानावादसमाढ्यशास्त्रविपिनप्रोद्दामकण्ठीरवः।
नानाछात्रमुखोद्गताखिलमहाशङ्काकलङ्कापहा
　　स श्रीमान् रघुनाथशर्मसुमतिर्वन्द्यः सदा वन्दितैः।।७५।।

योऽयं श्रीबलियाख्यमण्डलमणिर्वेदान्तचूडामणिः
काशीधामसमस्तपण्डितकुलालङ्कारदीव्यन्मणिः।
विद्वद्व्रातशिखामणिः पुनरहो सर्वज्ञलीलामणिः
पृथ्व्यां श्रीरघुनाथनामकमणिर्वन्द्यो न कैर्भूसुरैः॥७६॥

पुत्रा यस्य नरेन्द्रनाथ इह यः श्रीसोमनाथः परः
पश्चाद् योऽप्यविमुक्तनाथ इति वा श्रीरामनाथस्तथा।
अन्येऽप्यस्य सुतास्समस्तजगतां नाथायमाना मुहुः
सर्वे ते रघुनाथपादकमलद्वन्द्वैकभृङ्गोपमाः॥७७॥

एतद्ग्रन्थचयास्समस्तविदुषामाहो अमी आश्रया-
स्तत्तच्छास्त्रमहासमुद्रमथनप्रामाण्यभूता मताः।
एतेषान्नु शोधकर्म निखिलं भूयश्चलत्येव तत्
कोऽन्यः पारमियादमुष्य विदुषो वैदुष्यवारांनिधेः॥७८॥

तिङन्तनिष्ठोऽप्यतिङन्तनिष्ठः सुबन्तनिष्ठोऽप्यसुबन्तनिष्ठः।
कृदन्तनिष्ठोऽप्यकृदन्तनिष्ठः चकास्तिरूपं रघुनाथशर्मा॥७९॥

स व्यासनिष्ठोऽपि समासनिष्ठः स सन्धिनिष्ठोऽपि च विग्रहेष्टः।
अजन्तनिष्ठस्तदजादिनिष्ठो विभातिरूपं रघुनाथशर्मा॥८०॥

हलादिनिष्ठो न हलादिनिष्ठो विद्वत्सभामण्डलसत्प्रतिष्ठः।
प्रेष्ठोऽभवच्छात्रकदम्बकेषु प्रष्ठो विदां श्रीरघुनाथशर्मा॥८१॥

अहर्निशं श्रीललिताङ्घ्रिदासः समस्तशास्त्रोदिततत्त्वगुप्तः।
विपक्षपक्षाक्रमणैकवर्मा विभात्यहो श्रीरघुनाथशर्मा॥८२॥

वाग्देवतादिव्यविलासहासः भूयः कृतानेकविपक्षहासः।
विराजमानस्मितशुभ्रहासः विराजते श्रीरघुनाथकाशः॥८३॥

समस्तविद्वद्गणकण्ठहीरः कथासुधास्वादनचारुकीरः।
अशेषशास्त्राम्बुधिपारतीरः मान्यः सदा श्रीरघुनाथधीरः॥८४॥

नेदिष्ठ एष यशसोऽपयशो दविष्ठः
वर्षिष्ठ एव विदुषां समितौ वरिष्ठः।
क्षोदिष्ठ एष कदने महतां महिष्ठः
प्रष्ठो विदां विजयते रघुनाथशिष्टः॥८५॥

क्लिष्टो न यस्तु ललितार्चनसिन्धुलङ्घे
प्लुष्टः कदापि नहि वाददवानलेन।
पिष्टो न हन्त किल वादिविवादशैलैः
मृष्टो महोदयमहो रघुनाथशर्मा॥८६॥

श्रीठाकुरप्रसादो मिश्रोऽभवदेव यस्य शिष्योऽसौ।
अन्वर्थनामधन्यः स तु गुरुकृपया सदा क्षितौ मान्यः॥८७॥

नाथो विदां यस्य पिताऽस्ति काशी-
नाथः सदा कोविदचक्रनाथः।
माता सुभद्रा जगदेकभद्रा
तत्पादधीप्राप्तसमस्तभद्रा॥८८॥

समस्तसद्वृत्तकलाभिरामा
जवीयसी चन्द्रकला स्वसा सा।
आसीद् द्वितीयाऽपि सदाऽद्वितीया
सा मङ्गलाख्या तनयाद्वयं तत्॥८९॥

पत्नीद्वयं सममवद् रघुनाथधाम्नः
सा केशरी परमतस्तु तथैव बच्ची।
ताभ्यां समेत इह सन्ततमृद्धिसिद्धि-
पत्नीद्वयादृततनुस्तु यथा गणेशः॥९०॥

भूयस्ततान च महाविधिसम्भवानि
सर्वप्रियाणि जगतीतलमङ्गलानि।
षड्भिस्सुतैस्स्वतनयाद्वितयेन तेन
यश्चाष्टसिद्धिभिरलं रघुनाथदेवः॥९१॥

पूर्वमेव कथितं मया तु यत् पुत्ररत्नविषये चतुष्टयम्।
नामयुग्ममवशिष्यतेऽधुना मुक्तिनाथभवनाथयामलम्॥९२॥

श्रीमद्वाक्यपदीयनामकमहाग्रन्थोऽयमाराजते
यो नूनं त्रिजगत्कटाहवलये सच्छाब्दिकानां धनम्
कामं सोऽस्ति मुनित्रयोदितमहासिद्धान्तसिद्धाञ्जनं
शर्माणं तु विनाऽत्र केन विदुषा व्याख्यायतां भूतले॥९३॥

अम्बाकर्त्रीति नाम्नीं त्रिजगदवगितां कीर्तितां रम्यटीकां
धीरेन्द्राणां समक्षं सपदि रचितवान् हेलया लीलयाऽलम्।
तच्छब्दब्रह्मवाक्यादिकगुणपदसङ्ख्यातसङ्ख्यातिभव्या
विख्याता ख्यातिभाक्षु प्रतिभुवनमहो कोऽतिशेतां भवन्तम्।।९४।।

पूर्वं वाक्यपदीयपुस्तकमिदं लब्धं कुतश्चिन्न तु
पूर्णं चांऽशत एव तत्रभवतां सद्व्याख्यया ख्यापितम्।
विश्वस्मिन्नधुना प्रकाशितमथो सं.सं.वि.विद्यालये
राराजीतितमां सदा त्रिजगतीभाण्डोदरे सर्वतः।।९५।।

इत्थं श्रीरघुनाथपादकमलद्वन्द्वैकबद्धादरो
योऽयं श्रीमनुदेवनामपदभृत्तच्छिष्यशिष्योऽस्म्यहम्।
एतस्य ह्यभिनन्दनस्मृतिमहाग्रन्थे तु सम्मुद्रितः
तत्पादाब्जयुगे मयाऽत्र शतकस्तोत्राञ्जलिश्चार्प्यते।।९६।।

राजारामस्य वैयाकरणमृगपतेरस्ति पौत्रः कनिष्ठो
वीणापाणौ तथा श्रीपशुपतिबुधतो लब्धजन्मा द्विजोऽयम्।
सम्पूर्णानन्दनामान्वितविबुधवचोविश्वविद्यालयेऽस्मि-
न्नासीत् प्राध्यापको यस्त्वकृत स रघुनाथस्तवाख्यं हि काव्यम्।।९७।।

वीणापाणिरभूत् सतीमणिरलं माता मदीया मता
वेदव्यासकृपात आविरकरोद् यो व्यासकूटामृतम्।
राराष्टि स्म यदीयचित्तकमले श्रीमन्महाभारतं
शास्त्राधीतिमहाधनः पशुपतिस्तातोऽत्र नंनम्यते।।९८।।

सत्पुत्रत्रयपाठितामरगवीश्रीगौरवैकास्पदं
वीणापणिसमन्वितः पशुपतिस्तातोऽन्वहं नम्यते।
पाराशर्यमहामुनीश्वरकृतश्रीमन्महाभारत-
श्लोकान् योऽष्टशताधिकाष्टकसहस्राणि ज्ञयाऽऽविष्करोत्।।९९।।

देवाधीश्वरमौलिरत्नविसरप्रोद्भासिदिव्यद्युति-
श्रीमद्भूधरभूधरेन्द्रतनयाविश्वेशपादाम्बुजम्।
राराजीति सदा यदीयविलसत्कारुण्यतारुण्यतः
पूर्णं श्रीरघुनाथवैभवमिदं काव्यं हि तत् प्राञ्जलम्।।१००।।

नानाऽरुन्तुदकष्टदारुणमहादुःखैकदावानल-
ज्वालाजालकरालकालरसनालीढं हि मे जीवनम्।
तत्र श्रीगुरुपादपङ्कजकृपापीयूषयूषोदयाद्
चक्रेऽहं मनुदेव एष शतकं श्रीमद्गुरोरर्चकम्।।१०१।।

भाग्ये चन्द्रबलीयदुष्कृतिवशाच्छेदस्तु वृत्तेर्मम
सञ्जातस्तु पुरा पुरारिपुरतस्स्वाध्यापकानां पुरः।
भ्रामं भ्राममथो जगत्सु विगतिर्हीनोऽन्नपानादितः
काश्यामत्र तदा गुरूक्तिकृपया वासो मदीयोऽभवत्।।१०२।।

ग्रन्थो नूनमभून्मुदा(१)गुरुमहिम्नस्तोत्रकाव्यानुजः
(२)पातिव्रत्यजयात् तथास्त्यवरज(३)श्शृङ्गारशृङ्गाटकात्।
(४) विद्वद्वैभवसोदरः पुनरहो (५)विद्वद्विनोदानुजो
भूयस्सोदरतो (६)ऽप्युदात्तबलिराजाख्याद् मुहू रूपकात्।।१०३।।

भ्राता यः किल(७)पाकशासनकृतेश्चाध्यापको योऽभवं
चक्रे हन्त(८)विशुद्धवैभवमहाकाव्यं गुरोराज्ञया।
पश्चाद्(९)वैष्णववैभवाभिधमहाकाव्यञ्च भक्त्युज्ज्वलं
(१०)श्रीमत्पण्डितराजवैभवमदः(११)सारस्वतीसौषमम्।।१०४।।

(१२)रूपालीं विरचय्य पूर्वमथ तां श्रीमद्बृहद्भूषणे
(१३)हिन्दीपुस्तकमेकमासकवितेत्याख्यं शिशिक्षूत्सवम्।
काव्यं (१४)सङ्गमवर्णनं स(१५) उकुलव्याख्यानलेखो लघू
रम्या सा लघुशेखरीयविवृतिर्या पञ्च (१६) सन्ध्यात्मिका।।१०५।।

(१७)श्रीस्याद्वादकथाविधाख्यशतकं काव्यं शताब्दोत्सवे(१८)
श्रीमत्पण्डितवासुदेवशतकं तद्वैभवाख्यं ध्रुवम्।
भूयश्चापि(१९)कबीरवैभवसमाख्यातं हि काव्योत्तमं
पश्चाच्छाङ्करवैभवाभिध(२०)महाकाव्यं तथैवादरात्।।१०६।।

श्रीमन्मारुति(२१)पद्यकाव्यशतकव्याख्याऽञ्जनाशिञ्जिता
सद्यश्चापि तु (२२) रामकृष्णचरितेत्याख्यं हि काव्यं महत्।
निर्माताऽप्यभिनन्दनाम्बुजदलं पारेशतं हेलया
हिन्दी-संस्कृतवङ्गभाषणमयाल्लँखांस्तथा तावतः।।१०७।।

भूयो वैदिकवायुयानविषयाविष्कारकः साम्प्रतं (२३)
सद्यश्चाप्यनुसंस्कृतं विहितवान् यो भौतिकं लीलया।
निर्माता खलु चैष आस मुदितो ग्रन्थांस्त्रयोविंशतिं
यः प्राध्यापकतो बभूव विरतोऽस्माद् विश्वविद्यालयात्।।१०८।।

येनाप्तं नहि तासु तासु परिषत्सु द्रव्यमेवं तथा
नासीदुत्तरपुस्तिकादिगणनाकार्ये प्रवृत्तिः क्वचित्।
निर्माणेऽप्यथ रूप्यलाभमहिते तत्प्रश्नपत्रस्य वा
नम्यो मे सुकृतीश्वरः पशुपतिस्तातस्तु लोकोत्तरः।।१०९।।

यत्पुत्रः किल मध्यमस्तु दशमीमुत्तीर्य कक्षामिमां
मेधावी विषयत्रये खलु विशिष्टां योग्यतामाप्तवान्।
किन्त्वग्रे श्रुतिपाठनार्थमखिलं पित्राज्ञयाऽसौ जहौ
गौरीशङ्करनामकः पशुपतेः पादानुगामी जयेत्।।११०।।

आस्तां मे गुरुपादपङ्कजकृपापीयूषयूषात्मता
प्राचीनार्षविमानशोधविषयाध्येतृत्वमातिष्ठतु।
स्वर्लोकच्यवमाननिर्झरधुनीकल्लोलसँल्लापिनी
मद्‌गीः श्रीजगदम्बिकापदयुगाम्भोजेषु भृङ्गायते।।१११।।

।।इति श्रीमत्सकलसतीसार्वभौमशिरोरत्नवीणापाणिदेवी-
श्रीश्रीमद्वेदव्यासकृपाविष्कृतकूटश्लोकरत्नाभिरामश्रीपण्डितपशुपतिभट्टाचार्यपादपद्मैकनिष्ठ-
कनिष्ठसुतमनुदेवभट्टाचार्यकृतश्रीरघुनाथवैभवामृताख्यं खण्डोपमं खण्डकाव्यं
सम्पूर्णम्।।श्रीः।।श्रीः।।श्रीः।।श्रीः।।

श्रीः।।रचनाकालः-फाल्गुनी कार्णी नवमी, समर्थरामदासजयन्ती, पाकशासनगुरुवारः।।







श्रौतस्मार्तपरम्परापरिलसत्प्रामाण्यपीयूषभृत्-
शिष्टाचारमहाविधानविधिधीतादात्म्यभावोज्ज्वलौ।
सद्भाग्योत्सवपुत्रपौत्रमहिमप्राप्तातिकीर्त्युच्छ्रितौ
राजेतामिह दम्पती स्वसुकृतस्तोमस्तवैकास्पदम्।।



# श्रीरघुनाथशर्मतातपादानां जीवनवृत्तम्

**प्रो. नरेन्द्रनाथपाण्डेयः**
अध्यक्षः, प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणस्याम्



गुरोः पादपद्मं प्रणम्याश्रयेऽहं शरण्यं शिवं शान्तिदं भूतिभव्यम्।
शिवासेव्यमेकं जगद्वन्द्यमीशं गणेशादिलभ्यं विभुं सर्वशेषम्॥
यतोऽभूत्प्रपञ्चो लयं यत्र सर्वो विशेषो गतः स्याज्जगद्ध्वंसकाले।
स एकोऽद्वयो विश्वमूर्तिर्नमस्यो भवो भूतये भासतान्नः पुरारिः॥

स्मृतिशेषाणां सरस्वतीसमुपासनलब्धयशस्कानां पङ्कलग्नाया हरेर्जरद्गव्या उद्धारे समर्पितजीवनानां पित्राज्ञापारवश्याद्दुःखमपि सुखत्वेनोररीकृत्याबाल्याद् व्यवहारासक्तमनसामप्यधिगतव्यवहारातीतात्मस्वरूपाणाम्—

कृषिर्वेदविनाशाय वेदः कृषिविनाशकः।
सक्तश्चेदुभयं कुर्यादसक्तश्च कृषिं त्यजेत्॥

इत्यनुशासनं शिरसोद्वहतामविदुषामपि कृष्यासक्तमनसां साक्षात्कृतविद्याविद्योभयस्वरूपाणाम्—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥

(श्रीमद्भगवद्गीता २.६९)

इति भगवदुक्तिमनुसृत्य संयमित्वं प्राप्य दिवा कर्मसु व्यापृतकरणानामपि रात्रौ सर्वकरणसंहारपूर्वकमाज्ञानोदयं ध्यानैकतत्पराणाम्, शास्त्रानुशासनपरवशानामपि स्वप्नसाक्षात्कृतगुरूपदेशानुसृत्यात्मानुशासनपराणाम्, धन्यजीवनानामपि प्रसङ्गप्राप्तपितृवियोगस्मारकक्षणेष्वात्मनोऽधन्यतां मन्यमानानाम्, मातृुपासनानुरागक्लिन्नहृदयानामपि सर्वदा पित्रनुरागाश्रुक्लिन्ननेत्राणाम् अध्यापनं

हि ब्राह्मणस्य वृत्तिरिति शिष्टोक्तिम् अध्यापनेनैव ब्राह्मणा वर्तन्ते नाध्यापनहीनं दिवसं यापयन्तीत्यर्थिकामूरीकृत्य आजीवनमध्यापनतत्पराणाम्—

अञ्जनस्य क्षयं दृष्ट्वा बल्मीकस्य च संचयम्।
अवन्ध्यं दिवसं कुर्याद् दानाध्ययनकर्मभिः।।

इति चिरन्तनोक्तिप्रेरणया शिवसायुज्यपर्यन्तम् उपासितनित्यनैमित्तिक-ध्यानादिकर्मणाम्।

एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः।
वाढमित्यनुमन्येत गौरवेण गुरोर्वचः।।

(श्रीमद्भागवत, ३.२८.१३)

इति मैत्रेयोक्त्यनुक्षणस्मरणप्रभावेणाजीवनं गुर्वाज्ञापालनव्याजेन लब्ध-पितृशुश्रूषावसराणाम्—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।।

(ईशावास्योपनिषद्)

इत्युपनिषत्तत्त्वविदामपि ब्रह्मोपासनया प्राप्तब्रह्मलोकानाम्, सर्वतो विरक्तानामपि कर्मसक्तानाम्, आत्मसाक्षात्कारतिरोहितसर्वानात्मभावानामपि अजरामरवद्विद्याचिन्तकानाम्, श्रद्धया सत्यमाप्यते इति वचनेन श्रद्धास्पदानुद्बोधकेनाऽपि प्राप्तप्रेरणया पितृश्रद्धालब्धपरापरोभयविद्यानाम् 'इह चेदवेदीदथ सत्यमस्ति नो चेदिहावेदीन्महती विनष्टीति' केनोपनिषदमनुगम्य तीव्रजिज्ञासाप्राप्तब्रह्मभावभर्जितसकलकर्मबीजानामपि कर्मानुष्ठानतत्पराणाम्, प्रत्यगब्रह्मैक्यसाक्षात्कारप्राप्तब्रह्मीभूतपितृसाम्यानामपि सशरीरत्वे तेषां प्रातिनिध्यं कुर्वतां पितृपादानां जीवनवृत्तं स्मारं स्मारं लेखनीं व्यापारयन् कतिचित् क्षणान् तेषां सन्निधौ नेतुकामेन मयाऽत्र मनोव्यापारोऽभिलषितः।

कीर्तिशेषाणां तेषां वाग्वैभवं प्रदर्शयितुं अम्बाप्रसादलब्धायाम् अम्बाकर्त्र्यां वाक्यपदीयव्याख्यायां लब्धप्रसरायां नास्ति कस्यचनापेक्षा मादृशस्य अन्यस्य वा तथापि देवस्पर्धि तेषां मानुषं जीवनं समग्रञ्च गूढं चरितं लोकसंग्रहाय शास्त्रप्रामाण्यद्रढीकरणाय च अपेक्षते कमपि प्रयासमिति धिया सत्संगार्थं स्मृत्याऽऽत्मानं पावयितुं किञ्चिदुच्यते सतां सङ्गं भेषजमिति मन्यमानेन मया।

अनुत्तरस्योत्तरप्रदेशस्यार्यावर्तैकदेशस्य भारतभुवोऽङ्गभूतस्यापूर्वभूतं बलियामण्डलं तेषां जनिभूरभूदिति नास्त्यतिरोहितं विदुषाम्, तथाऽपि वर्तते किमपि तस्य पुण्यभूत्वख्यापकमैतिह्यमिति तद् विवरीवर्तितुं कानिचन वाक्यान्यपेक्ष्यन्ते। पूर्वतो गंगासरय्वो: पावनेन सङ्गमेन निबद्धसीम्नोऽप्यस्य जनपदस्य दक्षिणत: लोकपावनी गङ्गा प्रवहन्ती स्वस्या विष्णुपादाङ्गुष्ठावनेजनत्वं, ब्रह्मकमण्डलुसम्बद्धत्वं, शिवशिरोजटाग्रथितत्वञ्च स्मारयन्ती पादाहतविष्णुवक्ष:स्थलभृगुमुन्यधिष्ठितं मण्डलमिदं दक्षिणेन परिक्रामन्तीव लक्ष्यते। यथा गङ्गाद्या: सरित: समुद्रमभिद्रवन्ति तथैवानेका: कुल्या विभिन्नेभ्य: स्रोतोभ्यो निर्गत्य गङ्गामभिद्रवन्ति मण्डलेऽस्मिन्। तासु सौरथसर:समुद्भूता अपि काश्चन कुल्या: सन्ति। सौरथसर:सुरथराज्ञ: सम्बन्धेन प्रसिद्धिं गतं सुरथस्य तलं प्रतिष्ठानमासीदिति सुरथा: इत्यस्यापभ्रंशभूतेन सुरहा ताल इति नाम्नैव सुज्ञानं वर्तते।

तौ तस्मिन् पुलिने देव्या: कृत्वा मूर्तिं महीमयीम्।
अर्हणां चक्रतुस्तस्या: पुष्पधूपाग्नितर्पणै:।।

इति मन्त्रसूचितं पुलिनवर्ति सुरथसमाध्यो: अर्हणास्थलं ब्रह्माणीदेव्या मन्दिरम् अस्य सरसो दक्षिणे तीरेऽद्यापि विद्यमानं सौरथसर:पूतत्वमस्य मण्डलस्य सूचयति। इदं सरो साम्प्रतम् 'बलिया' स्थानतो द्विक्रोशे उत्तरस्यां वर्तते। चतुर्दशक्रोशं परिसृतमिदं सर: पुण्डरीककोटिशोभितं नानाविधपक्षिक्रीडमगाध-जलं नाव्यं न कदाऽप्युपशोषं याति। छाताग्रामोऽस्य सरसो दक्षिणपूर्वकोणतोऽविदूरे पूर्वस्यां दिशि राजते। 'छाता' इतीदं नाम पिपठिषोश्छात्रसमूहस्य वाचकात् 'छात्रा:' इति बहुवचनान्तात् अपभ्रंशसरण्या प्राप्तम् इति वक्तुं शक्यते अत्रत्यां पाण्डित्यपरम्परामवलोक्य। अस्मिन्नेव ग्रामे तपोविद्यापूतपराशरगोत्रीयब्राह्मणानामभिजनभूते चित्रधर इति ख्यातनाम्नां चित्रशास्त्रधराणां षट्सु पुत्रेष्वन्यतमस्य गुणैर्वयसा च ज्येष्ठ्यं गतस्य रामटहलशर्मणो विदितसर्वविद्यस्याऽपि व्याकरणे विशेषत: पारङ्गतस्य भर्गाराधनभर्जितकर्मबीजस्योदपद्यतैकमेवापत्यं जानुपर्यन्तलम्बमानबाहुभ्यां सूचितभाग्यसम्पदं शास्त्राचारविदितसरणिनीतसर्वजीवनम्—

परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुन:।
अथाऽप्यधिकमेताभ्यां न च सत्त्यं कदाचन।। इति।

महाभारतीयभीष्मोक्तिपोषितपरिगृहीतसत्यम्, षट्शास्त्रिपदाभिधेयम्, विद्याव्यासङ्गतीर्णभवसागरम्, महामनामालवीयप्रभृतिभिर्नेतृभिर्जङ्गम-विश्वनाथेत्यभिधया जेगीयमानं काशीनाथपदाऽभिधेयम्।

'अथवा योगिनामेव कुले भवति धीमताम्' इति भगवदुक्तिसूचित-योगवैभवानां पितृपादानां रघुनाथशर्मणां प्रादुर्भाव एभ्य एव काशीनाथ-तातपादेभ्यो द्वितीयपुत्ररूपेणाभूत्। एषां ज्यायांसो भ्रातरो हरिनाथशर्माण: सकलशास्त्रपारङ्गता अभूवन्। अत एव पितृभ्यां सहैव एतेषामपि स्मरणम्, पितृपादा: सर्वदैवाम्बाकर्त्र्यां कुर्वन्तो दृश्यन्ते—

काशीनाथतनूजेन हरिनाथानुजन्मना।
सौभद्ररघुनाथेन कृतेयं कृतिरुत्तमा।। इति वदन्त:।

व्याकरणे न्याये वेदान्ते मीमांसायां सांख्ययोगयो: बौद्धदर्शने वैष्णव-दर्शनेषु च एते लब्धगतिका अभूवन् इति तेषां निबन्धसंग्रहस्य चित्रनिबन्धावलिरिति नाम्ना प्रथितस्य अम्बाकर्त्र्याश्च वाक्यपदीयव्याख्याया: सुनिपुणं निरीक्षणेन ज्ञातुं शक्यते। न केवलमेषामेव शास्त्राणाम् आयुर्वेद-शास्त्रस्याप्यासीत्तलस्पर्शिपाण्डित्यमित्येषां 'गर्भे गुणदोषसंक्रमणविमर्श:' इति निबन्धदर्शनतोऽवसीयते। अत्र हि चरकसंहिताया: शारीरस्थानमालोड्य गर्भविषये एवं सिद्धान्तितम्—अयं भाव:, यथा बालस्य युवत्वाद्यवस्था अजाता जन्यन्ते तथा नित्यत्वेनाजात एवात्मा षड्धातुकगर्भस्वरूपेणात्मानं जनयति। तथा च गर्भस्य चैतन्यं धर्माधर्महेतुक्रियानुष्ठानं चात्मजमेव, न तु भूतसंघातोत्थम्। अचेतनस्य चेतनानुपादानत्वादिति। 'वादत्रयविमर्श' इति नाम्ना प्रथितस्तेषां लेखो विज्ञानवादशून्यवादाद्वैतवादानां स्वरूपव्याकरणपरोऽतीव-गभीर: शेमुषीप्रकर्षख्यापनपरोऽत्र चित्रनिबन्धावल्यां दृश्यते।

शब्दसंज्ञाविमर्श:, शब्दाद्वैतविमर्श इति नामभ्यां ख्यातावतिगूढार्थ-विमर्शनपरौ निबन्धौ स्वोपज्ञसरणिं निर्दिशन्तावलोकनीयाविति तत्रोल्लिखितेन हार्दप्रकाशनपरेण—

प्रायेण मदुपज्ञोऽत्र विचार: सम्प्रदर्शित:।
विवेचयन्तु विवुधा: सदसन्निकषोपला:।।

इत्यानुपूर्वीकश्लोकेन वक्तुं शक्यते। शिक्षासूत्राणि सदाचारसूत्राणि च सूत्रलक्षणयुतानि प्राचीनां सूत्ररचनापद्धतिं स्मारयन्ति। ख्यातिविमर्शादयो

निबन्धाः शास्त्ररहस्योद्घाटनपरा एषां सूक्ष्मेक्षिकां ख्यापयन्ति ख्यातिञ्च विस्पष्टयन्ति। बहुश्रुता इमे बहुभ्यः शास्त्राणि श्रुतवन्तः।

अक्षराण्यारभ्य लघुकौमुदीं बलभद्रशर्मभ्यः स्वगोत्रीयेभ्यः श्रुत्वा व्याकरणेऽधीतित्वसम्पत्तये दशवर्षकल्पा इमे स्वपितॄन् हरिद्वारस्थानुपागमन्। कांगडीस्थानस्थं गुरुकुलं षड्वर्षाण्यधिवसन्त इमे स्वपितृभ्यः तत्त्वबोधिनी-टीकासहितं सिद्धान्तकौमुदीग्रन्थम्, टीकासहितं तर्कसंग्रहम्, रघुवंशमहाकाव्यादिकञ्चाधीतवन्तः।

अनन्तरं स्वपितृभिः सह काशीमागत्य विद्याध्ययनक्रममशिथिलयन्तः व्यकरणाचार्योपाधिं लब्धवन्तः। श्रीशिवशङ्करभट्टाचार्यपादेभ्यः व्युत्पत्तिवादग्रन्थं ब्रह्मसूत्रचतुःसूत्रीञ्चाधीत्य अद्वैतसिद्धिचित्सुख्यादि-वेदान्तग्रन्थान् स्वपितृभ्योऽ-धीतवन्तः। स्वश्वसुरेभ्योऽच्युतनाथत्रिपाठिवर्येभ्यः महामहोपाध्यायश्रीशिवकुमार-शास्त्रिशिष्येभ्योऽपि काँश्चन न्यायवेदान्तग्रन्थान् अधीतवन्तः। चित्रमीमांसाग्रन्थं स्वाग्रजेभ्यो श्रीहरिनाथशास्त्रिभ्यः श्रीबच्चाझाशिष्येभ्योऽधीतवन्तः।

एषां पितरो गुरवश्च श्रीकाशीनाथशर्ममहाभागा हरिद्वारे गङ्गातटे एतान् चिन्तामणिमन्त्रमुपदिष्टवन्तः, यस्य महिमोल्लेखो नैषधीयचरिते एवं मिलति—

अवामा वामार्धे सकलमुभयाकारघटना
द्विधाभूतं रूपं भगवदभिधेयं भवति यत्।
तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते सिध्यतु स ते।। (१४.८८)

मन्त्रजपप्रभाव एषां जीवने स्पष्टं दृश्यते। यतो विद्याप्रदोऽयं मन्त्रः परापरोभयविधाया विद्याया उद्भवो जातः।

अशिष्यया शिष्यपरम्परयाऽनुसृतसर्वभावा अपीमे प्राधान्येन कतिपयैः परिचेयाः सन्ति। तेषु वैयाकरणकुलगुरवो गुरुवर्या पं.रामप्रसादत्रिपाठिचरणाः, श्रीपुरुषोत्तमप्रसादत्रिपाठिवर्याश्चोभावपि व्याकरणधुरमाजीवनं वहन्तौ शिष्यप्रशिष्यशृंखलाबद्धभारतभुवौ अभूताम्। गुरुवर्याः श्रीरामप्रसादत्रिपाठि-वर्यास्तु व्याकरणदर्शने प्रमाणसमीक्षेति ग्रन्थेन प्राप्तशेमुषीप्रकर्षेण कालजयितामलभन्त। गुरवः श्रीदेवस्वरूपमिश्रवर्या अस्माभिरनुभूतप्रतिभाप्रकर्षाः अनितरसाधारणं सभाप्रागल्भ्यमुद्वहन्तो व्याकरणन्यायवेदान्तादि-शास्त्रेष्वप्रतिहतगतयो यशसा दिगन्तान् अव्याप्नुवन्। श्रीरामशङ्करभट्टाचार्याः अनेकग्रन्थप्रणेतारः—

पातञ्जलमहाभाष्योत्तानता शब्दसौष्ठवात्।
मया प्रविदिता सम्यग् यस्याध्यापनगौरवात्।।

तस्मै श्रीरघुनाथाय गुरवे शब्दचुञ्चवे।
समर्प्यते श्रद्धयेदं श्रीपातञ्जलदर्शनम्।।

इति श्लोकाभ्यां प्रदर्शितगुरुगौरवाः, गुरुकल्पाः श्रीरामयत्नशुक्लवर्याः सर्वशास्त्रनिष्णाताः त्रिपाठिचरणानां शिष्याः काश्या गौरवभूताः सन्ति। श्रीमहादेवोपाध्यायवर्याः साहित्यशास्त्रमर्मज्ञाः, श्रीरघुनाथमिश्राः आगमाध्यापकाः यैश्चिद्गगनचन्द्रिकायाः बह्व्यः कारिका व्याख्याताः पितृपादानां सन्निधौ, श्रीपण्डितश्यामनारायणदीक्षितवर्याः, श्रीठाकुरप्रसादमिश्राः मारीशसदेशवास्तव्याः, पाश्चात्त्यविद्वत्सु प्रसिद्धाः जार्जकार्डोना-महाशयाः सन्ति अग्रेसराः। अन्येऽपि बहवश्छात्राः सन्ति ज्ञाताऽज्ञाताः। श्रीधनञ्जयकुमारपाण्डेयः पितृवर्याणाम् अन्तिमः शिष्यः तदानीं वयसोऽल्पत्वात् अलब्धबह्वसरोऽपि प्राप्तप्रसादो राजते संस्कृतविद्याधर्मविज्ञानसंकाये काशीहिन्दूविश्वविद्यालये इत्युक्त्वा विरम्यते।

अध्ययनकालादेव लेखने व्यापृता इमे यान् ग्रन्थरत्नान् स्वप्रतिभालक्षकान् संस्कृतानुरागिभ्योऽस्मभ्यम् प्रायच्छन् तेषु—

१. लघुजूटिका, १९२६, चौखम्भा-प्रकाशनम्।

२. प्रत्यक्तत्त्वप्रदीपिका, (चित्सुखी) ग्रन्थस्य स्वटिप्पणविभूषितस्य संस्करणम्।

३. प्रदीपोद्योतयुतस्य व्याकरणमहाभाष्यस्य विषमस्थलटिप्पणविभूषितस्य तृतीयाध्यायपर्यन्तस्य सम्पादनम्। निर्णयसागरमुद्रणालयः, १९३५-३७।

४. पदत्रयात्मकस्य सम्पूर्णस्य वाक्यपदीयस्यार्थप्रकाशनपरा पञ्चभागेषूपलभ्यमाना अम्बाकर्त्री टीका, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९६३ तः- १९७९ यावत्।

५. वाक्यपदीयपाठभेदनिर्णयः भागत्रयात्मकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः।

६. चित्रनिबन्धावलिः, मोतीलाल बनारसीदास, १९७४।

७. धर्मपदव्याख्यानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, २००१।

अनेके स्तवाः एभिर्विरचिता एषां देवप्रवणं विशुद्धसत्त्वं मनः सूचयन्ति। तेषु—श्रीकृष्णास्तवः (सहस्रश्लोकात्मकः), श्रीरामस्तवः (सहस्रश्लोकात्मकः), सन्ततिस्तवः, मत्स्यस्तवः, कूर्मस्तवः, वाराहस्तवः, सूर्यस्तवः, नासत्यकस्तवः, लक्ष्मीस्तवः, धरणिस्तवः, भार्यावनस्तोत्रम्, नृसिंहस्तवः, वामनस्तवः, परशुरामस्तवः, बलरामस्तवः, बुद्धस्तवः, कल्किस्तवः, गणपतिस्तवः, द्वैतनिर्णयः, वायुस्तवः, रवरूमाशतकम्, अपराजिताशतकम्, शीतलाशतकम्, पार्वतीपरिणयः, सुन्दरच्छायम्। वाल्मीकीयरामायणसुन्दरकाण्डमाश्रित्य लिखितं काव्यम्। 'भागवतसारः' श्रीमद्भागवतमाश्रित्य संक्षिप्य च लिखितः। केचन प्रकाशिताः एषु अप्रकाशिताश्च केचन सन्ति। एवमाबाल्यादेकमनसोपासिता विद्या प्रणीताश्च ग्रन्थास्तान् भारतभुवोऽलङ्कारभूतान् यशसा पुरस्कृतिभिश्च सम्मानभाजोऽकार्षुः। उत्तरप्रदेशसंस्कृताकादमीतः प्राप्तकालिदासपुरस्कारा इमे १९८५ वर्षे तदानीन्तनप्रधानमन्त्रिभ्यो राजीवगान्धिमहाशयेभ्यो विश्वसंस्कृतभारती-पुरस्कारं लब्धवन्तः। १९८६ ईसवीये वर्षे भारतसर्वकार-राष्ट्रपतिभिः पद्मश्रियाऽपि सभाजिताः इमे। संस्कृतसेवार्थं संस्कृतविदुषां कृते नियतं सम्माननमपि तैर्लब्धम्। वाराणसीस्थसंस्कृतविश्वविद्यालयेन विद्यावाचस्पत्युपाधिः, काशीहिन्दूविश्वविद्यालयेन १९८२ ईशवीये वर्षे विश्वसंस्कृतसम्मेलनावसरे 'डाक्टर ऑफ लेटर्स' इत्युपाधिरपि तेभ्यः प्रदत्तः।

वाराणस्याञ्चैते मारवाडीसंस्कृतविद्यालये संन्यासिसंस्कृतमहाविद्यालये साहित्यवेदान्तशास्त्राण्यध्याप्य राजकीयसंस्कृतमहाविद्यालये लब्धाध्यापनावसराः सर्वान्ते वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्ष्यमवाप्तवन्तः।

इदानीं तेषामाध्यात्मिकं जीवनं चिन्त्यते। यस्य समीक्षणेनास्माकं लोकरुचीनां शास्त्रसिद्धान्तेषु श्रद्धा न केवलं वर्धतेऽलौकिकं किमपि सामर्थ्यं प्राप्तुं मनोऽप्युत्सहते। एषां जन्ममृत्युकालयोः साम्यम्, सम्पत्तौ च विपत्तौ च महतामेकरूपतेति वचनं कस्मिँश्चिन्नूतनेऽप्यर्थे लब्धसंगतिकं कुर्वत् तेषां महापुरुषत्वमपि ख्यापयति। जन्मकालमृत्युकालयोः सर्वसम्भवांशे साम्यं दुर्लभमपि सुलभमभूदत्रेति तेषां वैचित्र्यं सूच्यते। जन्मकालः १९५६ विक्रमाब्दे आषाढ-वद्येकादश्यां कृतिकानक्षत्रेण युतः बृहस्पतिवासरः। मृत्युकालः २०४६ वैक्रमाब्दे, ईशवीये १९८९ वर्षे, आषाढवद्येकादश्यां कृतिकानक्षत्रेण युतः बृहस्पतिवासरः। उभयत्रैकादशीमतिक्रम्याभूद्द्वादशीत्यासीत् कश्चन विलक्षणोऽयं संयोगस्तेषाम् आविर्भावतिरोभावकालयोर्मासपक्षतिथिनक्षत्रदिवसानामैक्य-सम्पादकः। अयञ्च कालः सम्पत्तौ च (जन्मकाले) विपत्तौ मरणे च

एककालसम्बद्धत्वेन ऐक्यरूप्यं बोधयति तेषाम्। केवलमनयोः कालयोरेव नासीत् साम्यम् तेषां जीवनेऽपितु हर्षशोकावसरयोरप्यनुभूतमस्माभिश्चित्तसाम्यम्। एतत्पोषणाय दृष्टान्तद्वयं प्रस्तूयते। १९७३ ईशवीये वर्षे तेषां कनीयसी कन्यका काश्यामेव प्रथमप्रसूत्यनन्तरं दिवं प्राप्ता विंशतिवर्षदेशीया। मर्मभेदिवृत्तान्तोऽयं कृतसायंसन्ध्योपासनेभ्यस्तेभ्यो मया न्यवेदि निम्नोलचति भास्करे, प्रवृत्ति श्रवणानन्तरं क्षणं वाचंयमतामाश्रित्यानन्तरं तैरुक्तं मयोपोषणेन रात्रिर्नेया। केवलमेतावदेव वचोऽस्माभिः श्रुतम् अश्रुपातादिकन्न वा वैक्लव्यं दृष्टम्। अग्रे कदाऽपि तैरेतद्विषये वागपि न व्यापारिता। मम मातुः निर्हरणावसरे बृहन्नौकायाम् शवशिविकास्थापनपूर्वकं षड्भ्रातृभिः सपितृभिरस्माभिः सकुटुम्बजनैः असिघट्टतः मणिकर्णितीर्थपर्यन्तं गङ्गायां नौसंयानं विहितम्। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पूर्वबौद्धदर्शन-विभागाध्यक्षाः आचार्य-जगन्नाथोपाध्यायवर्या पितृपादानां विद्यावंश्यास्तदानीं तत्र वर्तमानाः जिज्ञासितवन्तः 'गुरव इदानीं कथमनुभूयते भवद्भिः'? पितृपादैरुक्तम् 'उपाध्याया अतीवाभ्यन्तरः दीर्घकालिकश्च सम्बन्ध आसीत् किन्तु सोऽपि सामान्यजनान् इव न दुःखाकरोति। कीदृशमासीद् धैर्य्यं कीदृश्यासीन्नश्वरताया विचारणा जगतो यया अपत्यकलत्रयोरपि वियोगजमसह्यदुःखमपि न मूढीकृतवत् तान्।

वृत्ते स्थितानां तेषां पित्राज्ञापालनतत्पराणां कृते किमप्यलभ्यन्नासीत्। अत एव पितृसेवाप्रसन्नसर्वदेवताप्रसादात्तैर्न केवलमैहलौकिकं यश एवापितु जीवन्मुक्त्यानन्दोऽपि लब्धः।

अनेकजन्मपुण्यानां फलं दित्सति चेच्छिवः।
तदात्मज्ञानसम्पत्तिं ददात्यानन्दवारिधिम्।।

इति तथ्यं वचः तेषां जन्मान्तरसुकृतप्रचयं सूचयद् वासनाप्रचयशून्यं मनोऽपि सूचयत्यात्मज्ञानप्राप्तिसहकारिणम्। इदं सर्वं तैः पितृप्रसादात्प्राप्तमिति हेतोः तेषां पितृभक्तिसूचकं वचो विन्यसितुमिच्छामः। एकदा संवादप्रसङ्ग अस्माभिरुक्तम् 'भवद्भिः कीदृशं तपोऽनुष्ठितम् यत्प्रभावाद् विलक्षणयशो-विद्ययोरधिगम आञ्जस्येन जातः'। तेषामुत्तरं भगवतः श्रीरामस्य पितृभक्तिं स्मारयति स्म। क्षणं विरम्य तैरुक्तम् 'मया किमपि तपो नानुष्ठितम् वर्तते किन्तु अयं ममाऽस्त्यभिमतिविषयो यत् पितृपादानामाज्ञोल्लंघनं मया कदाऽपि न कृतम्। अग्रे पुनस्तैरुक्तम् 'आज्ञाविषये किं वक्तव्यम् यत्किमपि तैश्चिन्तितम् तद् विपरीतं मया नाचरितम्'। वाल्मीकीयरामायणे भगवान् श्रीरामोऽपि वदति—

'अहं हि वचनाद्राज्ञो विशेयमपि पावके' इति। ईदृश्येव भक्तिरासीत्तेषां स्वपितृपादेषु।

एतच्च प्रमाणीभवति 'गाण्डीवम्' संस्कृतपत्रसंस्थापकानां श्रीरामबालकशास्त्रिमहेच्छानां वृत्तान्तविशेषवर्णनपरेण वाक्यसमूहेन। अस्मत्-पितामहपादस्य शिष्यभूता रामबालकशास्त्रिणः लक्ष्मणपुरस्थविश्वविद्यालये प्राच्यविद्याविभागे लब्धनियोजनानां पितृपादानां हार्दं प्रापयितुं पितामहपादान् प्रत्येवमूचुः 'गुरवः! अभ्युदयं प्राप्य लक्ष्मणपुरं जिगमिषन्ति कनीयांसो गुरवः'। इदं वाक्यं हृदि शल्यमिवार्पितमभूत्तेषाम् यतो व्यथितास्ते मौना जाताः। पितृपादाः कुड्यान्तरिता सर्वं शृण्वन्तोऽभूवन्। पितामहपादानां प्रोत्सर्पत्कष्टाङ्कं मुखं वाक्स्तम्भञ्चालोक्य तै रामबालकशास्त्रिणः सङ्केतेन निषेधार्थं बोधिताः।

अनन्तरं शास्त्रिपादैरुक्तम् गुरवः! लक्ष्मणं पुरं तैर्न गंस्यत इतीदानीमेव तैर्निश्चितम्। कृच्छ्रान्मुक्तानां प्राप्तसंज्ञानां पितामहपादानामासीदियमुक्तिः 'धनार्थं मयैते संस्कृते न व्यापारिताः, यदि धनमेवाभीष्टमभविष्यत्तदाङ्ग्लभाषयेमे शिक्षिता अभविष्यन्। धनार्थं काशीत्यागस्य सङ्कल्पो न करणीयः। 'सर्वमत्रैव (काश्यामेव) भविष्यतीति ते बोधनीयाः'। इदं सर्वं रामबालकशास्त्रिभिः पश्चात् कदाचित्संवादप्रसंगे श्रावितम्। मया तु पितृभक्तिं प्रदर्शयितुमयं दृष्टान्त उपन्यस्तः।

कीदृश्यासीत् पितृभक्तिर्यया प्रेरिता वाङ्निरोधेन पितुः कष्टमनुमाय कष्टकारणं सर्वथाऽपनेतुं महापदं त्यक्तवन्त एते।

अत एव पितृभक्तिविषय उच्यते वाल्मीकीयरामायणे—

देवगन्धर्वगोलोकान् ब्रह्मलोकान् तथाऽपरान्।
प्राप्नुवन्ति महात्मानो मातापितृपरायणाः।।

(वा.रामा.अयो.काण्ड ३०।३७)

न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम्।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया।।

(वा.रामा.अयो.काण्ड. १९।२२)

भूरक्षायै भूमिसम्बन्धिनो व्यवहारान् द्रष्टुं यदा ते पितामहपादैराज्ञप्ताः, तदानीं विद्याभ्यासकालं व्याहन्यमानमवलोक्य मौनमवलम्ब्य तिष्ठतस्तान् सर्वविदित्सया पितामहपादा अप्राक्षुः 'किमपि वक्तव्यं वर्तते तव'? वाक्यमिदं श्रुत्वा मनसिकृत्य सविनयं तैरुक्तम् भवतामाज्ञा शिरसोह्यतेऽस्माभिः किन्तु

विद्या न भविष्यतीति हेतोर्मनो वैकल्यमाप्नोति। एतच्छ्रवणानन्तरं तैरुक्तम् 'विपुला विद्या लोकातिशायि च यशो भविष्यति'। इदमेव सर्वप्रदं वाक्यम् पितृपादैः प्रसङ्गप्राप्तौ श्राव्यते स्म सर्वदा। एतेनैव च प्रेरितास्त उपासनधिया आजीवनं भूव्यवहारान् अद्राक्षुः। तेषामियमुपासना तानन्ते ब्रह्मलोकं प्रापय्य सफला जातेति 'तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति' (प्र.उ. १।१६), उपनिषद्वाक्येन तेषां पश्चिमसाधुसंदेशेन च मयाऽनुमितम्। एतस्य पश्चिमस्य सन्देशस्योल्लेख अग्रे करिष्यते।

१९६५ तमे ईशवीये वर्षे अध्ययनव्यापृतचित्तेन मया रात्रौ स्वपतां तेषां कथोपकथनपराः वाचः निशीथे श्रुताः। एतेषां मुखात् 'यदि मामकमनुरोधं न स्वीकरोषि, तर्हि मम त्वं माता नासि' इति वाक्यं वारद्वयं वारत्रयं वा निश्चितकालव्यवधानानन्तरं श्रुतम् अन्यस्य उत्तरयितुर्वाणी न श्रुता। तेषां माता तदानीं पार्थिवे शरीरे नाऽसीत्। कतिचित् क्षणानन्तरं सुप्तप्रबुद्धैस्तैरुक्तम्— 'निशीथे त्वया न जागृतव्यम् शेष्व' किन्तु द्वयोः संवादविषये पृष्टैरपि तैः किमपि नोक्तम्। यतो रहस्यगोपनपरः स्वभाव एवासीत् तेषाम्।

१९५२ ईशवीये वर्षे स्वप्नेऽनुभूतः प्रसङ्गः देवसन्निधौ स्थितानां वृक्षाणां देवत्वसूचकस्तै श्रावितः। स च एवं वर्तते, कस्यचन शिवयागस्य ममाचार्यत्वे छाताग्रामपार्श्वस्थे क्षितीश्वरनाथमहादेवसन्निधावनुष्ठीयमानस्य सम्पूर्त्यवसरे तत्रत्यपुरातनवृक्षाणां शाखाश्छित्वा ताभिः शोभार्थं स्तम्भादिकं निर्मितमभूत् यजमानादिभिः। एतेन क्षुब्धो भगवान् शिवो रात्रौ स्वप्ने आत्मानं संदर्श्य एवमुक्तवान् 'त्वं तत्रैवासीः तथापि मम शिरसश्छेदो जातः'। शूली शिवश्छिन्नगल एव दृश्यमान आसीत्। अग्रे पितृपादैरुक्तं स्वप्ने कृतभगवद्-दर्शनोऽप्यहमनिष्टचिन्तया वेपमानः शिवशिरश्छेदे च कारणमनुपलभमानो व्यग्रचित्तो जाग्रदेव शेषां निशामनैषम्। प्रातर्यज्ञियस्थानं प्राप्य सावधानतया चतुर्दिगवलोकनतत्परेण मया छिन्नाः शाखा वटवृक्षस्य दृष्टाः। सान्निध्याद्भगवत्स्वरूप्यं प्राप्तानां वृक्षाणामिमाः शाखा भगवतोऽङ्गभूता जाता अतस्तासां छेदनं भगवतः शिरश्छेदनमेव भवतीति छिन्नशिरसा भगवता प्रादुर्भूतेनाहं सूचित इति मत्वा जलधाराप्रियं शिवम् प्रसादयितुं दिनत्रयं यावत् अविच्छेदेन जलधारापातो विहितोऽस्माभिः। किन्त्वनिष्टशङ्कया दक्षिणारूपेण प्राप्तं धनं समस्तं वस्तुजातं तत्रैव ब्राह्मणेभ्यो वितीर्णं मया।

१९६० ईशवीये वर्षे वृन्दावनं प्राप्य शयानैः पितृपादैः रात्रौ हासपरस्य भगवतः शिवस्य दर्शनं लब्धमिति तेभ्य एव श्रुत्वा 'एको देवः केशवो वा

शिवो वेति' भर्तृहरिवचः शिवकेशवयोरैक्यप्रतिपादनपरत्वेन देवैक्यावधारण-परत्वेन च गृहीतम् अस्माभिः। मात्रुपासनपराः पितृपादा आजीवनं पराम्बाप्रसादावाप्तये प्रायतन्त पराम्बास्तुतिकुसमाञ्जल्यादिस्तोत्ररचनाभिः दुर्गासप्तशत्याः प्रत्यहमावर्तनेन च। धृतव्रतैरेभिः मात्रुपासनं विहितम् अत एव 'सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छतीति' ऋषिवचसो मर्यादां रक्षितुमम्बयोभयमपि तेभ्यो दत्तम्। मात्रुपासनया च ते देवगुप्ता अभूवन् '[1]ध्रुववदिति तेषां जीवनचर्याया दर्शनेनावसीयते। इदानीं तेषामलौकिकत्व-ख्यापनपराः केचन वृत्तान्ताः प्रस्तूयन्ते।

पित्राज्ञापरवशतया भूमिसंरक्षणार्थं प्रायः व्यवहारप्रसङ्गे तैर्न्यायालयेषु गन्तव्यं भवति स्म। एकदा कस्मिँश्चिद् वादे सहस्रत्रयं सहस्रचतुष्टयं वा तैः समर्पितं कोषागारे राजाज्ञानुसारम् विंशशताब्द्या अदूरसप्ततेषु वर्षेषु। वर्षत्रयानन्तरं यदा राजाज्ञयैव तैरर्पितं धनं लब्धव्यं जातं तदा कोषागारे नियुक्ताधिकारिभिः तत्पत्रं दिदृक्षितम् यद् धनसमर्पणसमये प्राप्तिप्रमाणरूपेण दत्तमासीत्। प्राप्तिपत्ररूपम् एकं लघुपत्रं वर्षत्रयात्पूर्वम् अवहितैः कुत्रचित् स्थापितमपि न लब्धम् रात्रिन्दिवमन्वेषणपरैरपि तैः। अनन्तरमत्यन्तखिन्नैस्तैः न्यायालयस्थैरेव पराम्बा प्रार्थिता एकस्मिन् दिने 'मदीयं धनं मह्यं न मिलतीति कष्टकरमिदम्'। मातृस्मरणानन्तरं प्रस्थितानां तेषां सविधावागत्य कश्चन नम्रीभूय प्रणालिकातः एकपत्रम् उद्धृत्य तेभ्यो दत्तवान् 'गृह्यतां किमिदमेव भवतामपेक्षितं पत्रं वर्तते'? इति वदन्। तदेवासीत् तत् पत्रं येन धनं लब्धुं शक्यम् आसीत्। विचार्यतां किमिदं नाऽस्ति देवानुग्रहः? लघुपत्रं संरक्षितुं गृहे यत्नेन पूर्वं स्थापितम् प्रणालिकायां कथं गतम्? तत्र पतितञ्च जलादिना कथन्न नष्टम्? वर्षत्रयानन्तरं मिलत्यक्षुण्णमिति महदाश्चर्यकरं किन्न वर्तते।

प्रायः पितृपादा एवं वदन्ति स्म मां केऽपि न ज्ञातवन्तः इति। किन्तु वैशिष्ट्यजिज्ञासा मौनेनैव समाधीयते स्म। विंशशताब्द्याः कस्मिँश्चिदधिकाशीते वर्षे ते मया पृष्टाः कोऽप्येतादृशो न मिलति यो मार्गमुपदिशेत्? तेषामुत्तरमतीव विलक्षणमासीत्। तैरेवमुत्तरितम् 'मौर्ख्यसूचकानि वचांसि न प्रयोक्तव्यानि कः क्व गतो वर्तते यो न मिलति? किम् ईश्वरः कुत्रचिद् गतः यत्र सर्वं ज्ञानविज्ञानादिकं प्रतिष्ठितं वर्तते। अनन्तरमूर्ध्वमुखैराकाशं पश्यद्भिर्दक्षिण-

---

१. मा शुचः स्वतनयं देवगुप्तं महीपते। इति नारदवचनं ध्रुवस्य देवगुप्ततां सूचयति। तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत्। (श्रीमद्भाग. ४।८।६८)

बाहूद्यमनपुरःसरं तैरुक्तम् अथवा इमे सहस्रशः सिद्धा विमानैराकाशे पर्यटन्तः कुत्रचिद् गताः? येषां पर्यटनपुरस्सरमन्वेषणमेवैकम् प्रयोजनं वर्तते। कः कुत्र साधनमार्गेऽवरोधमनुभवति तस्मै मार्ग उपदेष्टव्यः। यतः साधनमार्गे शिष्यो गुरुमन्वेष्टुं समर्थो न भवति। गुरुः शिष्यमन्विष्योपदिशति। मह्यमत्रैव गुरव आगत्य स्वप्न एव वेदान्तमहावाक्यानि उपदिष्टवन्तः मया च तेषामुपदेशोऽनुसृतः। एतस्मादधिकं गुरूणां स्वरूपादिविषये मया वक्तुं न शक्यते। यन्मया उक्तम् तदपि न वक्तव्यम् आसीत् विद्याया गोप्यत्वात्। किन्तु तव प्रश्नात् असंगतात् करुणापरवशेन मया एवमुक्तम्। अनन्तरं भ्रूमध्यस्थितमाज्ञाचक्रं दर्शयद्भिस्तैरुक्तम् 'जानास्यत्राज्ञाचक्रं वर्तते यत्र द्वौ रक्षकौ पुरुषौ तिष्ठतो ययोरनुज्ञामन्तरा अन्तर्यात्रा नारभ्यते। अहमाज्ञाचक्रं साक्षात् कुर्वे, अत्रत्यौ रक्षकपुरुषावपि मया साक्षात्क्रियेते। कश्चन निपुणोऽपि शल्यचिकित्सकः शरीरं तिलशः छित्त्वाऽपि चक्रमिदं द्रष्टुं समर्थो न भविष्यति। किन्तु सामान्यतोऽनुपलब्ध्या चक्राणामभावो न वक्तव्यः साक्षात्कृतये प्रयासो विधेयः। सर्वान्ते तैरुक्तं स्वस्मिन्योग्यताऽऽनेया, काल आगते सति सर्वं मिलति। सच्छिद्रे घटे कोऽपि जलं न प्रक्षिपति।

भगवतोः श्रीरामलक्ष्मणयोः स्वरूपं साक्षात्कर्तुं पितृपादैरवसरो लब्धो रामनवम्यां मध्याह्ने। स्वयं तीर्थीभूतानां पितृतर्पणादिव्याजेन गङ्गास्नानमाचरतामपि फलार्थं तीर्थाभिगमनानासक्तमतीनां शरीरार्धभूतायाः पत्न्याः प्रेरणया सरयूस्नानार्थं प्रस्थितानां मार्गे रयलयानम् अधितिष्ठताम् संमुखीनौ द्वौ बालकौ गौरश्यामवर्णौ द्वादशवर्षदेशीयौ चक्षुर्गोचरतां प्राप्तौ। श्यामवर्णो बालः चक्षुर्भ्यां घनं प्रकाशं विकिरन्नासीत्। चक्षुषोरुपरि पतितेन प्रकाशपुञ्जेनाकृष्टचित्ताः पितृपादा विस्मिता उन्मुखीभवन्तो जिज्ञासमाना अब्रुवन् 'को भवान्? आत्मानं परिचाययतु। अनन्तरं भगवतो रामस्य वर्णं विभ्रता, पुस्तकहस्तेन बालेन छात्रवेषेण भाषया 'अपना परिचय कोई नहीं बता सकता' इत्युक्तम्। प्रथमतया प्रयुक्तमेकमेवेदं वाक्यम् हिन्दीभाषयोच्चरितं तेन। अनन्तरम् आत्मतत्त्वं परिचिचीषति प्रष्टेति मत्वा क्षणपञ्चकं यावत् 'न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मन' इत्यादीनि श्रुतिवाक्यानि उदाहृत्य आत्मतत्त्वोपदेशो देवगिरा विहितः। तस्य देवभाषावाक्यसदृशवाक्यान्यश्रुतपूर्वाण्यदृष्टपूर्वाणि चासन् क्वाऽप्यन्यत्र पितृपादानाम्। अतो विस्मयाविष्टचेतसस्ते निर्निमेषदृष्ट्या बालस्य मुखमवलोकयन्तो स्तब्धीभूता जाताः। अत एव पितृपादा एतद्वृत्तान्तप्रसङ्गे मां बोधयन्तः पश्चादुक्तवन्तस्तादृशं संस्कृतं न मया श्रुतं न

वा भाष्यादिग्रन्थेषु कुत्राऽपि दृष्टम् आसीत्। किन्तु अस्खलद्गतिकतया संस्कृतेन व्यवहरन्नपि बालो मध्ये मध्ये एतादृशान्यशुद्धानि वाक्यानि उच्चारयति स्म। येन श्रोतुर्मम तस्य योग्यताविषये स्वरूपविषये च 'अयं बाल एव नाऽन्य' इति भ्रमो भवेत्। किन्तु मम मनसि अन्यथाभावो न जातः। एवम् प्रवर्तमानस्यात्मविषयकस्योपदेशस्य समाप्तिसूचके वाक्प्रवाहवैरल्ये प्राप्ते, पितृपादैरुक्तम् भवद्भिः सत्यमुच्यते असंगस्यात्मनो जातिगुणक्रियादिशून्यस्य स्वरूपभूतस्य परिचायनं केनाऽपि कर्तुं न शक्यते तथाऽपि भवता परिगृहीतस्यास्य शरीरस्याभिजनपित्रादिसम्बद्धस्य विशेषास्तु वक्तुं शक्यन्ते। तान् श्रोतुकामा वयमिदानीम्। अनन्तरं बालेन सन्निकटे स्थितस्य कस्याऽपि ग्रामस्य नामग्रहणपूर्वकं तेन सह शरीरसम्बन्धः उपेक्षया सूचितः।

स्वीयां व्यथां प्रकटीकर्तुं पुनरुक्तं पितृपादैः 'मया सहस्रश्लोकात्मकः श्रीरामस्तवो यावच्छ्लोकं लिखितः। तत्र दर्शनकामनया—

अरिघ्नं सिंहसंकाशं कदा द्रक्ष्यामि राघवम्।
लक्ष्मणञ्च धनुष्पाणिं छातादृारमुपागतम्।।

इति श्लोकेनाऽऽवेदितहार्दोऽहमभीष्टपूर्तौ सन्दिहानः आत्मानमयोग्यं मत्वा।

श्लोकोच्चारणेन सहैव अश्रूण्यव्यर्तन्त कण्ठावरोधपूर्वकम्। पितृपादान् निपुणं निरीक्षमाणो बालोऽवादीत् 'साश्रु लोचने' एष भक्तिमार्गः। इदमासीद् भक्तिमार्गोपदेशसूचकं प्रथमं वाक्यम्। अनन्तरं क्षणपञ्चकं यावद् बालेन भक्त्युपदेशः कृतः भक्तिसूत्रादीनि चोदाहृतानि। अयमुपदेशोऽपूर्वसंरचनवाक्यैः क्रियमाणोऽपूर्व एवासीत् स्खलनरहितो गुरूपदेशसहितः। एवमुपदिश्योपरते बाले पुनरुक्तं पितृपादैर्न जाने सिंहसंकाशस्यारिघ्नस्य भगवतो लक्ष्मण-भ्रातुर्दर्शनार्थमुच्चरितानि वाक्यानि भगवत्सन्निधिं प्राप्तानि न वा? एतेनारुन्तुदेन वाक्येन तोत्राहत द्विप इवाकृष्टो बालोऽवादीत् 'भवतां वाक्यानि हार्दविदकानि निर्बलानि न सन्ति। अहमपि सम्मिल्य तान् अनुरोत्स्ये'।

भगवतो रामस्य वृत्तमनुसरता श्यामवर्णबालेन गौरवर्णबालमुपदेष्टुं पितृपादा अनुरुद्धाः 'एनमुपदिशन्तु भवन्त' इति वाक्योच्चारणपूर्वकम्। वाक्यश्रवणसमनन्तरं पितृपादैरुक्तमेते उपदेशाधिकारिणो न सन्ति। कथमिति? प्रश्नानन्तरं तैः पुनरुक्तम् 'एते जिज्ञासवो न सन्ति, जिज्ञासुरेव उपदेष्टव्यो भवति। अनन्तरं बालः पृष्टवान् 'भवन्त उपदेशाधिकारिणः सन्ति'?

नेत्यासीदुत्तरम्। पुनर्हेतुजिज्ञासायामुक्तं पितृपादैः इदानीं यावदशेषत आसक्ति-निवृत्तिर्न जाता। अतो नाहमुपदेशप्राप्तियोग्यः। अहन्तु कलेः पामरो जीवः। उपदेशानर्हः। एतद् वाक्योच्चारणसमकालमश्रुविन्दव उदपद्यन्त नेत्रयोः। अनन्तरन्तु भक्तिप्रवणचेतसो निष्कामभक्तस्य वैक्लव्यमसहमानेन बालरूपिणा भगवतोक्तम् एवन्नाऽस्ति भवन्तो धन्याः सन्ति भवता धरमाणेन चेयं धरित्री धन्याऽस्ति। संवादपूर्तिसमकालमेव रयलयानं विश्रामस्थानं प्रापत्। जिगमिषुं बालम् भ्रात्रा सह उत्तिष्ठासन्तमभिलक्ष्य पितृपादैरुक्तम् 'प्रणमामि भवन्तम्' 'भवन्तमपि प्रणमामीति' वदन् वालो गौरबालेन सह निष्क्रान्तः। पितृपादैः सर्ववृत्तं मह्यं श्रावितम् येन तेषां भक्तिप्रकर्षः—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः। (गीता १.२५)

इति भगवदुक्तिव्याख्यानदिशा ज्ञानार्थमवश्यमपेक्ष्यमाणः सूचितो भवति।

भक्तिप्रकर्षात् गुरूपदिष्टमार्गानुशीलनाच्च ते कृतात्मसाक्षात्कारा अभूवन्निति तेषां शरीरविमोक्षणात् प्राक् श्रुतैः कतिचन वाक्यैः स्पष्टो भवति। चतुर्षु पञ्चषु वा दिवसेषु तेषां जीवनस्यावशिष्टेषु मया तेषां चरमदर्शनस्यावसरो लब्धः। तदानीं तेऽतीवोपरताश्चिन्तामुक्ताः। संवादकाले यथावसरं मन्दहासपराश्च लक्षिताः तदानीं धर्म्मपदव्याख्यानस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः प्रकाशितस्य बौद्धोपदेशानामद्वैते तात्पर्यप्रकाशनपरस्य हस्तलेखस्तैर्मह्यं दत्तमुक्तञ्च 'लेखं गृह्णीष्व तव सम्पादकत्वे चाऽयं प्राकाश्यं गच्छतु। मम सम्पादकत्वे कस्मादस्य प्रकाशनं भविष्यति? इति मम प्रश्नमुपेक्ष्य तैरुक्तम्— 'भवतु लेखं वाराणसीं नय कथञ्चिच्चास्य प्रकाशनं त्वया कार्यम्'? आभ्यां वाक्याभ्यां तेषां जीवनकालस्याल्पता सूचिता। अतो रात्रौ पादयोस्तैलशीलनप्रसङ्गे मयोक्तम् 'काशीं जिगमिषन्ति भवन्तो न वा'? तेषामुत्तरमतीव गूढम् आत्मप्राप्तिसूचकञ्चासीत्। कार्यं -साधितम् धामाश्रयण-स्यावश्यकता नाऽस्तीत्यासीदुत्तरम्।

इदमुत्तरवाक्यम् प्रयोजनप्राप्तिम् सूचयति। मनुष्यशरीरस्य सार्थक्यं चरमप्रयोजनज्ञानप्राप्त्यैव भवति। अत एव ज्ञानप्राप्तौ सत्याम् मुक्तये धामाश्रयणमपि तैः कर्त्तव्यं नासीत्। एतदेव 'धामाश्रयणस्यावश्यकता नाऽस्तीति वाक्येन तैः सूचितम्। एतदनन्तरं शिरस उपरिविभागे ब्रह्मरन्ध्रं दर्शयद्भिस्तैरुक्तम् 'इत एव निर्गत्य ब्रह्मलोकं गमिष्यामि 'काऽपि बाधा नास्ति' नास्ति च किमप्यपेक्षितम्'।

सन्ध्याङ्गभूतप्राणायामेऽनुष्ठीयमाने प्रायः विभिन्नाकृतयः आकाशे तेषां दृष्टिगोचरतां यान्ति स्म। संवादप्रसङ्गे कतिधैतत् कथितम् आसीत् तैः। विभिन्न-जन्मसु पूर्वं शरीराणि धृतानि चरमे जन्मनीदानीं दृग्गोचरतां यान्तीत्युक्तमपि तैरेतद् विषये। अनवरतयोगाङ्गानुष्ठानेन तेषां मनोऽतीव विशुद्धं सत् समाहितं भवति स्म। अत एवैकदा गृहं प्राप्तं मामाकार्य ब्राह्मे मुहूर्ते समाधिक्रमः पृथिव्यादीनाञ्च जलादिषु स्वस्वकारणेषु लयक्रमः तेषामात्मन उत्पत्तिक्रमश्च समाधावनुभूयमानो बोधितस्तैः सार्धहोरापर्यन्तम्, उक्तञ्च त्वयेदमवहितेन श्रोतव्यं पश्चात् श्रावयिता कश्चन न मिलिष्यति।

इयमासीत्तेषां मनसः उत्कृष्टसत्त्वावस्था। किन्तु आचाराणां परम्परयाऽनुष्ठीयमानानां सर्वदानुष्ठानं कर्तव्यमिति तेषामभिमतमासीत्। अत एव विहारप्रान्तस्थान् ब्रह्मविद आत्मानन्दस्वामिपादान् साक्षात्कृत्य परावृत्तेन मया ज्ञानप्रशंसनपरेणोच्चार्यमाणानि वाक्यानि श्रुत्वा तैरुक्तम् ज्ञानन्तु प्रशस्यतमं विद्यते किन्तु आचारस्य पालनं कर्तव्यम् आचरणमन्तरा किमपि न मिलति। अनन्तरं तैरुक्तम् अत्र गृहे (छाता-ग्रामे इत्याशयः) भोजनादि व्यवस्थायाः कृते द्वयोः स्त्रियोः स्थितिरपेक्ष्यते। किन्त्वेतत् कथनेन मम भोजनादिव्यवस्थाविषये चिन्ता न कार्या अहन्तु कतिपयेषु दिवसेष्वतीतेषु श्वपचस्पृष्टमपि भोक्तुं शक्ष्यामि। ममानुसर्तव्यः पन्थाः सर्वथा नूतन एवेदानीं वर्तते, पूर्वस्माद् भिन्नः। आजीवनं अस्मदादिकृतपाकम् पुत्रवध्वादिकृतपाकम् वा प्रत्यहमभ्यवहरतां तेषां मुखाद् श्रूयमाणमिदं वाक्यं विस्मयं जनयत्यद्यापि स्मरणप्रसङ्गे, स्मारयति च 'न वर्णा न वर्णाश्रमाचारधर्माः' इत्यादिभगवत्पादवचनम्।

एकदा राजकीयसंस्कृतमहाविद्यालयेऽध्यापनसमये वर्षारम्भे प्रथमे दिने रयलयानेन वाराणसीम् प्राप्तुमुद्यतानां तेषां यानम् मार्गे अवरुद्धम् सारनाथस्थेयस्थानात् प्राक्। प्रथमदिवसे यथासमयं महाविद्यालय उपस्थितये व्याकुलास्ते एकया वृद्धया लगुडहस्तया अकस्मादागतया 'यथासमयमुपस्थितिस्तत्र भविष्यति चिन्ता न कार्येति' वचनेनोत्पादितप्रत्यया वचनानन्तरञ्च अदर्शनेन प्रतिनिवृत्तया सूचितमातृभक्तय इमे यथासमयं विद्यालयं प्राप्ता इति श्रुतमस्माभिस्तेषां मुखादेव। सा वृद्धा का आसीत्? किमर्थं तत्र यान आगता? स्पन्दितुमप्यशक्ता सा तिरोभूय क्व गता अकृतसम्वादाऽपि वैकल्यकारणं कथं ज्ञातवतीत्यादिकं विचार्यते चेत् प्रपन्नार्तिहरा सर्वस्वरूपा पराम्बैव तत्र प्रादुर्भूतेति वक्तुं शक्यते।

वाराणस्यां शिवपुरस्थः पार्श्वमार्गः द्विस्पाशः यदा निर्मितः नाऽसीत् तदानीं विमानस्थानम् यथासमयं प्राप्तुं मूर्तरययानेन (मोटरयानेन) गच्छन्तोऽस्मज्ज्येष्ठभ्रातरः रमानाथशर्माणः पितृचरणानां निषेधवचनमुल्लंघ्य सरन्तः शिवपुरे रयलपथावरोधेन विलम्बेन विमानस्थानं प्राप्ताः अलब्धविमानाः ततः प्रतिनिवृत्य छाताग्रामे यदा पितृपादानां संमुखीना यातास्तदानीं तैरुक्तम् 'त्वमागतः' भवतु त्वयागन्तव्यमासीदेव। तेषामासीदयमाशयो यत् असकृद् वार्यमाणोऽपि मामवज्ञाय विहितगमन आसीः। मया तु इतः वाराणसीं प्रति गमने यः क्लेशो जातस्तमेव वारयितुं गमननिषेधः कृत आसीत्। विदां कुर्वन्तु भवन्तः अमेरुकादेशं प्रति (अमेरिकादेशं प्रति) प्रस्थानार्थं भ्रातृवर्या अस्माकमभिजनात् छाताग्रामादेव सर्वदा आरब्धगमना भवन्ति सर्वदा। तदर्थमेव तदानीं ते पितृपादानां सन्निधिं प्राप्ताः। प्रस्थानसमयेऽनुज्ञानार्थं पितृपादान् प्रार्थितवन्तः। तैः प्रथमानुरोधः न्यक्कृतः संवादप्रसङ्गेन बहुकालान्तरितो द्वितीयोऽप्यनुरोधो न्यक्कृतः। तृतीयपर्याये 'गच्छ त्वया त्वागन्तव्यं वर्तत एवे-त्युक्त्वा तेऽन्वज्ञासिषुः। तेषां वचनं प्राप्तसंवादमभूत् भ्रातृणां प्रतिनिवर्तनेन। इदं सर्वं ज्ञात्वा मया भ्रातर उक्ताः। अनिष्टशङ्कामन्तरा पितृपादैर्निषेधः कर्तुं न शक्यते अतः तद्दिने वैमानिकैः किमपि काठिन्यमनुभूतं न वेति प्रयत्य ज्ञेयम् भवद्भिः। अनन्तरं तैरहमेवं सूचितः तद्दिने यद्विमानं प्रशान्तमहासागरोपरि उड्डीयमानम् आसीत् टोकियोस्थानं गन्तुम् तद् विरुद्धवातप्रवाहे पतितम् क्षणद्वयस्य कृतेऽनियन्त्रितं जातम्। चालकदलेन च सर्वे विमानस्थाः सूचिताः सज्जीभवत विमानाद् बहिः प्लोतुं यतो विमानं वायुवशे वर्तते। अवशा वयमिदानीम्। यद्यपि किमपि अनिष्टं नाभूद् विमानञ्च क्षणद्वयानन्तरं पूर्वस्थितिं प्रापत् तथाऽपि क्षणद्वयस्य कृतेऽपि जीवनसंशयो माभूदिति हेतोः पितृपादैः गमनमेव निषिद्धम् भ्रातृणाम् इति मन्ये।

एकदा शीतलारोगेण पीडितास्तेऽतीव दुर्बलाश्छाताग्रामे शय्यायां दिवैव स्वपन्तोऽद्राक्षुः स्त्रीपुरुषयुगलं ज्ञानवापीतो निर्गतं वाराणस्यां तेषामावासस्थानं प्रति जिगमिषद्। तत्र गत्वा च शून्यं वासस्थानमालोक्य ततः प्रतिनिवृत्य छाताग्रामे स्वावासम् प्राप्तं तद्युगलम्। अग्रे तैर्दृष्टम् पुरुषस्तु बहिस्तिष्ठति किन्तु माता भवनं प्रविश्य शय्यासन्निधावागत्य क्षणमवस्थाय प्रतिनिवर्तितुं प्रवृत्ता। तदानीं व्यपगतनिद्रैस्तैर्मातुर्दर्शनं लब्धम् गृहान्निष्क्रमितुं प्रवृत्तायाः। रुजा तत्क्षणं व्यपगता शीतलाप्रकोपजाता। किमिदं युगलमासीदिति विचारे क्रियमाणे

ज्ञानवाप्या निष्क्रमणश्रवणात् रूपान्तरेण भवानीशंकरयुगलमिदमासीदिति तर्कयितुं शक्यते।

एकदाऽवर्षणेन जना पीडिता अभूवन्। तदा कस्मिंश्चिद् दिने सायंकाले न्यायालयतः प्रतिनिवृत्ताः पितृपादाः रयलमार्गपार्श्वे स्थेयस्थाने ग्राम एव जिज्ञासुजनमध्य उपविशन्तः केनचिद् ग्रामीणेन पृष्टाः 'इदानीं कोऽपि ब्राह्मणस्तादृशोऽस्ति वा येनावर्षणत्रासाज्जना मोचिताः स्युः। स वारत्रयं वारचतुष्टयं वाऽवसरं लब्ध्वोक्तवान्। पितृपादाः शृण्वन्तोऽपि उपेक्षमाणा तूष्णीमासन्। अकस्मात् तस्य आग्रहं दृष्ट्वा तैरुक्तम् त्वयेदानीं गृहं प्रति गन्तव्यम् त्वरा कार्या। सोऽननुसृत्याज्ञां तत्रैव विरम्य विलम्बेन गृहं प्रापत्। कतिचित् क्षणानन्तरमेतादृशी वृष्टिरभूद् येन सर्वे जलाशयाः खाताः क्षेत्राणि च जलपूर्णानि जातानि। स निर्बन्धकृदिदानीमपि जीवति स्मरति च तेषां तपः सम्पत्तिम् ब्राह्मण्यञ्च।

मम तृतीयभ्रातरः सोमनाथशर्माणः प्रथमकन्यकोद्वाहार्थं शतेन वर्या कन्येत्युक्तिमनुसरन्तो भ्रमन्तोऽभूवन् वरान्वेषणे। पितृपादैः एकस्मिन् दिने तद्गृहमुक्तम् यत्र कन्यकाविवाहः पितृपादानां स्वःप्राप्त्यन्तरमभूत्।

१९८९ ईशवीयवर्षस्य आषाढमासे कृष्णैकादश्यां जन्मदिन एव प्रातः देवताः सम्पूज्योपभुज्य प्रसादमतीसारेण मरणं योगिनामपि दुर्लभमदृष्टवशात् प्राप्यालिङ्ग्य वाराणसीम् 'यत्र काश्यां शवत्वेऽपि जन्तुर्नाऽशुचितां व्रजेत्.....स्पृशामि दक्षिणे कर्णे' इति श्रीकाशीविश्वनाथवचः प्रामाण्यात्र केवलं जीवनकाल एवापितु शवत्वेऽपि अशुचितामप्राप्यैव ब्रह्मलोकं प्राप्ताः। 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति गीतासु भगवदुक्तिदिशा सर्वपवित्रज्ञानं प्राप्तास्त इति ब्रह्मविदाम् ईशानन्दसरस्वतीस्वामिपादानाम् पशुपतिबाबेति नाम्ना ख्यातानाम् वचसा प्रमितं भवति। आत्मजैर्वाराणसीं नीयमानेषु पितृपादेषु मार्गमध्ये जीवन्मुक्तानां बाबामहाशयानां सङ्गमो लब्धः सर्वैः। अवगतौ ते पितृपादानां यानं परिक्रम्य गताः सर्वांश्च प्रेरितवन्तस्त्वरया गमनाय। परेद्युः प्रातः केनचिद् पितृपादानां काशीप्राप्तिविषये कृतायाः शङ्कायाः समाधानाय प्रवृत्तैस्तैरुक्तम् 'यूयं सर्वे मूर्खाः, विदुषां कृते काश्याः मगधस्य वा वैशिष्ट्यं न भवति'। तेषामिदं वाक्यम् पितृपादानां कृतात्मसाक्षात्कारतां सूचयति।

मूर्धानं निर्भिद्य ब्रह्मलोकं गन्तुमुद्यतोऽहमस्मीति पितृपादैर्यदोक्तं ततः प्रभृत्येव मम मनसि ब्रह्मलोकप्राप्तिमार्गविषयिणी जिज्ञासाऽभूत्। सा च—

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या व्युत्क्रममाणे भवन्ति।।
(कठो. २.३.१६)

इति कठोपनिषद्व्याख्यानभूतेन शङ्करभगवत्पादभाष्येण समाहिता। पितृपादैर्मूर्धस्थानदर्शनपुरःसरम् इत एव निर्गत्य ब्रह्मलोकं गमिष्यामीत्युक्तमासीत्। सुषुम्ना नाडी मूर्धानं भित्त्वा विनिर्गता वर्तते।यया ऊर्ध्वमुपरि आगच्छन् सूर्यादिद्वारेणामृतत्वमेतीत्युच्यते 'आभूत्सम्प्लवं स्थानममृतत्वमिहोच्यत' इति वचनात् ब्रह्मलोक एवामृतत्वमुच्यते। अन्यथा मुख्यामृतत्वपरत्व ऊर्ध्वमायन् इत्यस्य वैयर्थ्यापत्तेः। अन्यनाडीभ्य उत्क्रमणे तु नानागतयो भवन्तीति मन्त्रेण सूच्यते। एवं मन्त्रार्थेन सह तेषां वचसः सम्वादो भवतीति वदन् गुणगणवर्णनपरां वाचम् उपसञ्जिहीर्षामः।



# आर्हतवाङ्मये सन्मार्गविमर्शः

मिश्रोऽभिराजराजेन्द्रः
पूर्व-कुलपतिः
वाराणसीस्थ-सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य



यद्यपि सर्वाण्यपि भारतीयदर्शनानि सद्धर्मस्थापनप्रयत्नवन्ति दृश्यन्ते, तथाप्यार्हतदर्शने वाङ्मये चावलोक्यते कश्चिद् विशेषः। चैतन्याचैतन्योभयास्तित्वमङ्गीकुर्वद् द्वैतवादि-जैनदर्शनमत्यन्तविश्वस्तपद्धत्या सरलतयाऽनुभवसंवेद्यरीत्या च सद्धर्ममार्गं व्याख्याति, स्थापयति च। जैनाभिमतसद्धर्मविमर्शे नावलोक्यते दुर्वहतर्कवितर्कप्रपञ्चः, न चापि बुद्धिक्लेशो द्राविडप्राणायामो वा।

वस्तुतः सन्मार्गविवेचनमिदं प्रारभते आर्हतदर्शने आत्मप्रसङ्गेन। तत्रेदमवधातन्तं यल्लौकायतिकान् विहाय प्रायेण सर्वेऽपि दार्शनिका आत्मास्तित्वं मन्यन्त एव। तत्र वर्तते पक्षत्रयम्—

१. एकः पक्ष आत्मास्तित्वं स्वीकुर्वन्नपि पुनर्जन्म न मन्यते।

२. द्वितीयः पक्ष आत्मान्नं पुनर्जन्म चोभयमस्वीकरोति।

३. तृतीयः पक्ष आत्मानं पुनर्जन्म चोभयं स्वीकरोति।

खिस्तमतं प्रथमपक्षपोषणपरम्। इस्लाममतमपि तदनुयाय्येव। एते सर्वे आत्मास्तित्वं त्वङ्गीकुर्वन्ति परन्तु तस्य क्रमिकं पुनरवतरणं पुनर्जन्म वा न समर्थयन्ते। यद्यपि पाश्चात्त्यजगति एतर्हि पुनर्जन्मावधारणाऽतीवदृढतयाऽभिनन्दिताऽवलोक्यते। चार्वाकदर्शनं द्वितीयपक्षधरमिति न कस्याप्यविदितम्। अन्ये सर्वेऽपि दार्शनिका आत्माभीष्टपद्धत्योभयमपि तथ्यमनुमोदन्ते। आत्मास्तित्वग्रहणे आत्मस्वरूपविमर्शे वा कामं स्यात्तेषां मतभेदः; परन्तु तदस्तित्वाङ्गीकारे समेषामेव सहर्षस्वीकृतिः परिलक्ष्यते।

आर्हतदर्शनं तावदात्मनस्त्रैकालिकमस्तित्वमुद्‌घोषयति। आचाराङ्गसूत्रे स्पष्टमुक्तम्—'जस्स नत्थिपुरा पच्छा मज्झे तत्थ कओ सिआ'। अर्थाद् यस्य

वस्तुनः पूर्वास्तित्वं परास्तित्वं न भवति तस्य मध्यास्तित्वमपि न भवति। यतो ह्यस्माकं शरीरे सम्प्रति (मध्यदशायां) आत्मनोऽस्तित्वं वर्तते। अतः एतावतैव सिद्धं यदस्माकमात्मनः प्रागप्यस्तित्वमासीत्, पश्चादपि (मृत्योरनन्तरमपि) सत्ता भविष्यत्येव। श्रीमद्भगवद्गीताऽपि[1] तदेव सत्यं निगदति।

वेदोपलब्धनासदीयसूक्ते यथा सृष्टिविषयका गहनविचाराः समुपलभ्यन्ते[2] तथैवार्हतवाङ्मयेऽपि जटिलप्रश्नाः केचिदुत्थापिताः संल्लक्ष्यन्ते। आचाराङ्गसूत्रे निगदितं क्वचित्—'अत्थि मे आया ओववाइए, अत्थि मे आया ओववाइए। के अहं आसी, के वा इओ चुओ इस्स पेच्चा भविस्सामि। रागो व दोसो वि व कम्मनीयं, कम्मं व जाइमरणं वयन्ति'।

भगवान् महावीरोऽपि सुस्पष्टमभिदधे यद् रागो द्वेषश्चेति द्वितयमेव भवति कर्मबीजम्। तत्कर्म चैव जन्ममरणयोर्मूलकारणम्। अत एव कर्मयुक्तस्यैवाऽऽत्मनः पुनर्जन्म सम्भवति, न तावत्कर्मविहीनस्य। कर्ममुक्त आत्मा तु जायत एव जन्ममरणबन्धनमुक्तः। वस्तुतो यथा वृद्धशरीरं युवशरीरस्य, युवशरीरञ्च बालशरीरस्योत्तरकालिकं रूपं भवति सर्वथा तथैव बालशरीरमपि मृत्युभावमुपेतस्य वृद्धशरीरस्योत्तरवर्ति रूपं भवति। तथाऽऽह आचार्यो जिनभद्रः—

बालं शरीरं देहन्तरपुव्वं इंदिया इमत्ताओ।
जुवदेहो बालादिव स जस्स देहो स देही ति।।

आत्मविषयकाः समानविचारा एव भगवतीसूत्रे, उत्तराध्ययनसूत्रे, आचाराङ्गसूत्रे किञ्च सर्वस्मिन्नपि प्रकीर्णजैनवाङ्मये समुपलभ्यन्ते। तदयं प्रसङ्गोऽत्रैव परिहीयते।

---

१. न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्।।
नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः।। (गीता-२.१२,१६)

२. नासदासीन्न सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन् अम्भः किमासीद् गहनं गभीरम्।।
को अद्धा वेद क इह प्रवोचत् कुत आ जाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव।। (ऋग. १०.१२९.१,९)

यद्यात्माऽस्ति तर्हि तदाश्रयभूतं शरीरमप्यस्ति। यदि पुनर्जीवविशेषसम्भृतं शरीरं वर्तते तर्हि शरीरयात्राया जीवनयापनस्य वा केचनोदात्ता आदर्शा अपि सन्त्येव। त आदर्शा एव सन्मार्गं परिभाषन्ते। यतो हि सन्मार्गाश्रयणेनैव जन्म सार्थकं भवति मानवस्य।

यथोक्तं प्रागेव यत् सर्वाण्यपि दर्शनानि प्रायेण द्वैताद्वैतवादयोर्विभक्तानि सन्ति। तत्रापि अद्वैतमतं द्विविधम्—चेतनाद्वैतम् अचेतनाद्वैतञ्च। चेतनाद्वैतमेवोच्यते ब्रह्माद्वैतमपि यत्खलु बादरायणाभिमतम्। अस्मिन्मते चैतन्यमात्रस्य प्रतिष्ठा वर्तते। चैतन्याधिष्ठानभूतं ब्रह्म एव सत्यं, जगच्च मिथ्या। लौकायतिका अचेतनाद्वैतवादिनः।

परन्तु जैनदर्शनं द्वैतवादं समर्थयते। एतन्मतानुसारेण जडचेतनयोः पृथक् सत्ता वर्तते। उभयोः स्वभावः पृथक् स्वतन्त्रश्चास्तित्वमपि। यद्यपि चेतनाचेतनयोर्मिथः अत्यन्ताभावस्तथापि तयोः परस्परं सम्बन्धो भवत्येव। अस्मिन् संसारे जीवात्मा चेतनोऽवलोक्यते, पुद्गलपदवाच्यश्च संसारस्सर्वथाऽचेतनः। उभावपि भिन्नौ। तथापि उभयोस्सहभावेनैव सम्मिश्रणेनैव संसारयात्रा प्रवर्तते। नीरक्षीरयोरिवोभयोरेकीभवनमत्र संसारे सन्दृश्यते। भगवतीसूत्रेऽपि जडचेतनयोरयमेकीभावो निरूपितो दृश्यते—

'अत्थि णं जीवा य पोग्गला या अण्णमण्णबद्धा, अण्णमण्णपुट्ठा, अण्णमण्णमोगाढा, अण्णमण्णसिणेह पडिबद्धा, अण्णमण्णघडत्ताए चिट्ठइ'। (भगवती. १.३१२.१३)

यश्चेतनः स एव जीवः, स एवात्मा, स एवामूर्तोऽपि। यश्चाचेतनः स एव पुद्गलः, स एव संसारः, स एव मूर्तोऽपि। सम्प्रति प्रश्नोऽयमुत्तिष्ठति यत्सत्यप्युभयोः पार्थक्ये, सत्यप्युभयोर्विरुद्धस्वभावे कथं कस्माद्वा सञ्जायते तयोः सामञ्जस्यम्? प्रश्नमिमं साधु समादधाति जैनदर्शनम्। वस्तुतः स्नेहमहिम्नैव भवत्युभयोर्मेलनम्। कोऽयं स्नेहो नामेति पृच्छा चेत् तर्हि जीवपुद्गलयोर्मिथस्सम्मेलनप्रायोग्यतैव समुच्यते स्नेहः। अयं स्नेहगुणो जीवपुद्गलयोरुभयोरेव समवतिष्ठते। जीवाश्रयः स्नेहस्तु समुच्यते आश्रवः। पुद्गलाश्रयस्नेहोऽप्याकर्षणार्हत्वमुच्यते। एवं हि आश्रवाऽऽकर्षणबलेनैव जीवपुद्गलयोरकारणमेव, निष्प्रयत्नमेव सम्बन्धो जायते। उभयोर्द्वैतं सहजतयैव सिद्ध्यतीति विशेषः।

भगवान् महावीरो जीवपुद्गलयोरिदं सामञ्जस्यं सम्यक्तया निरूपयति दृष्टान्तेनैकेन। संसारोऽस्ति जलमयं सरोवरम्। जीवश्चास्ति छिद्रशतयुक्ता नौका। यथा छिद्रबहुला नौर्जलसङ्कुला जायते, तथैव जीवोऽपि रागद्वेषात्मकैः कर्मभिर्निचितो जायते। आश्रवा एव भवन्ति जीवस्य च्छिद्रकल्पाः। कर्मबन्धनमेव भवति सरोजलकल्पम्[1]।

एवं हि जीवसंसारयोर्भेदमङ्गीकुर्वदप्यार्हतदर्शनमुभयोरभेदमपि स्वीकरोति। तत् कथं नायं वदतोव्याघातः?

अत्रोपपत्तिर्दीयते। वस्तुत आर्हतदर्शनं जीवशरीरयोः पारस्परिकं भेदाभेदमङ्गीकुरुते। अनेकान्तयुक्तिबलेनैव रहस्यमिदमवगन्तुं शक्यते। यद्यात्मशरीरयोः परमार्थतोऽभेदोऽभविष्यत्तर्हि द्वयोरप्येकत्वं स्यात्; परन्तु तन्न दृश्यते। किञ्च, द्वयोः सर्वथा भेदोऽपि न वर्तते। सर्वथा भेदे सति द्वयोः क्वाचित्कः कादाचित्को वाऽपि मेलनं सम्भाव्यं नाऽसीत्। तदपि नैव संघटते। उभयोर्मेलनं जायत एव। अत एव निजविशिष्टगुणमहिम्नाऽनयोर्मिथः भेदोऽप्यस्ति, सामान्यगुणमहिम्ना चानयोर्मिथोऽभेदोऽपि वर्तते। एतस्मादेव कारणाद् आत्मा शरीरादभिन्नो भिन्नश्चेत्युक्तं भगवता महावीरेण।

परन्त्वस्मिन् भेदाभेदस्वीकारप्रसङ्गे सम्भवन्त्यनेके प्रत्यवायाः। यद्यात्मशरीरयोरत्यन्तभेदः स्वीक्रियेत तर्हि कायकृतकर्मफलैरात्मनस्सम्बन्धो नोचितः प्रतिभाति। यदि पुनरुभयोरत्यन्ताभेदः स्वीक्रियते तर्हि शरीरदाहेन सहात्मदाहप्रसङ्गोऽपि प्रसज्येत। एवं हि उभावपि पक्षौ न समीचीनौ। एवं विचिकित्सिते सति भगवान् महावीरः समन्वयं संस्थापयति यौक्तिकमाध्यमेन। स कथयति यदेकान्तभेदाभेदस्वीकारेणैव दोषाः सञ्जायन्ते, परन्तु विलीयन्ते ते सर्वेऽप्युभयवादाङ्गीकारमात्रेण।

वस्तुतो जैनमतानुसारेण जीवा (आत्मानः) अपि सिद्धसंसारिभेदाभ्यां द्विविधा भवन्ति। सिद्धात्मा सर्वथाऽमूर्तो भवति। किन्तु संसारावस्थायामसौ कदाचिन्मूर्तोऽपि दृश्यते। अत एव संसारदशायां मूर्तस्यात्मनो मूर्तेन संसारेण सह सादृश्यं जायत एव। उभयोः सम्बन्धः सम्भवत्येव। एवं हि संसृतिभावापन्न

---

१. स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम्।
रागद्वेषक्लिन्नस्य कर्मबन्धो भवत्येव॥

आत्मा स्थूलेन सूक्ष्मेण चोभाभ्यां शरीराभ्यां युक्तो भवति। प्रत्यग्रजन्मतो जन्मान्तरं प्रविशतो जीवात्मनः स्थूलशरीरन्तु मुच्यते; परन्तु सूक्ष्मशरीरेणासौ मुक्तो नैव भवति। तत एवासौ शरीरान्तरं धारयति। एवं हि अमूर्तात्मा मूर्तशरीरं कथं धारयतीति प्रश्न एव नोत्तिष्ठति। यतो हि मूर्तात्मैव मूर्तं शरीरं धारयति। इयमेव हि जैनदर्शनाभिमता पुनर्जन्मप्रक्रिया।

जडचेतनयोः सम्बन्धापादनाय न्यायवैशेषिकदर्शनं कमपि ईश्वरपदवाच्यं तत्त्वं स्वीकरोति। परन्तु जैनदर्शनं यौक्तिकप्रयत्नेनैव प्रश्नमिमं समादधाति। आत्मशरीरयोर्भिन्नत्वं तु वर्तत एव। तच्च प्रमाणपुष्टं तथ्यम्। सिद्धावस्थायामात्मा भवत्येवाशरीरी। शरीरनाशानन्तरमपि तिष्ठत्येवात्मा। अत एवोभयोर्भिन्नत्वं स्वतः सिद्धम्।

परन्तु संसारदशायां शरीरात्मनोस्तादात्म्यं सन्दृश्यते नीरक्षीरवद् अग्निलोहपिण्डवद्वा। कायकृतकर्मणां फलमात्माऽपि भुङ्क्ते। अत एवोभयोर-भिन्नत्वम्।

भवतु। एवंगुणविशिष्टस्संसारी आत्मा, यो हि जीवपदवाच्यः, केन विधिना जीवयात्रां प्रवर्तयेत? अस्य प्रश्नस्य सम्पिण्डितमुत्तरमेवं दातुं शक्यते—सन्मार्गाश्रयेण। सन्मार्गाश्रयणमेव पुनर्जन्मयात्रारसिकस्य जीवस्य सर्वसौख्यहेतुः। स च सन्मार्गः केनोपायेनावाप्तव्य इत्यपि चिन्ताविषयः; परन्तु आर्हतवाङ्मये वर्ततेऽस्य सन्दर्भस्य युक्तियुक्तं विवेचनं व्याख्यानञ्च।

आर्हतमतेन समाजे द्विविधा जना वर्तन्ते—आगारिकाः अनागारिकाश्च। आगारिका एव गृहिणोऽप्युच्यन्ते। एत एवोपासकाश्चापि। अपरे वर्तन्तेऽनागारिका ये खलु समुच्यन्ते श्रमणा भगवन्तश्चापि। उभयोः कृते पालनीयः पृथग् धर्ममार्गो निरूपितो वर्तते। तत्र गृहस्थानां धर्मे द्वादशव्रतानां परिपालनमावश्यकं भवति। स एव वर्तते द्वादशाङ्गधर्मः। द्वादशव्रतपरिपालनेनैव सन्मार्गाश्रयणं सम्भवति। यद्यप्येतानि द्वादशव्रतानि जैनागमेष्वेवोपदिष्टानि, तथापि मानवमात्रकल्याणकराण्येतानीति दिक्। तानि व्रतानि सन्ति-स्थूलप्राणातिपातविरमणम्, स्थूलमृषावादविरमणम्, स्थूलाऽदत्तादानविरमणम्, स्वदारसन्तोषव्रतम्, इच्छापरिमाणव्रतम्, दिग्व्रतम्, उपभोगपरिभोगपरिमाणव्रतम्, अनर्थदण्डविरमणव्रतम्, सामयिकव्रतम्, देशावकाशिकव्रतम्, औषधोपवासव्रतम्, अतिथिसंविभागव्रतम्।

यथा श्रीमद्भगवद्गीतायां सात्त्विकराजसतामसकर्मणां भोजनानां धियाञ्च माध्यमेन योगीश्वरः कृष्णः सद्धर्मं सन्मार्गञ्चोपदिशति, तथैवार्हता आचार्या अपि द्वादशव्रतोपदेशमाध्यमेन सद्धर्ममुपदिशन्ति, येषामनुपालनमात्रेणैव मुक्तिर्जायते, जीवनं वा काञ्चनकल्पं सञ्जायते। वस्तुत एतेषां द्वादशव्रतानां पालनेषु नियमितत्वादेवार्हतधर्मो द्वादशाङ्गीत्यप्युच्यते। एतेषां व्रतानां पुष्कलं सूक्ष्मातिसूक्ष्मं लोकोपयोगि विश्वोपकारप्रवणं व्याख्यानं जैनागमेषु समवाप्यते।

तत्राऽद्यं व्रतमस्ति स्थूलप्राणातिपातस्य हिंसाया वा प्रत्याख्यानस्य व्रतम्। व्रतमेतद् जैनसम्प्रदायपर्यायभूतम्। तत्रापि क्रियायाः करणानि साधनानि त्रीणि भवन्ति—मनः, वचनं, शरीरञ्च। क्रियायाः प्रकाराश्चापि त्रिविधा एव भवन्ति—करणं (स्वयं करोतीति) कारणम् (केनाप्यन्येन कारयतीति) अनुमोदनं (समर्थनम्) च।

एवं हि स्थूलप्राणातिपातप्रत्याख्यानव्रतस्य स्वरूपमतीवजटिलं जायते। जीवनपर्यन्तं मनसा, वचसा, कायेन च कस्यापि स्थूलप्राणिनः (द्विविधस्य—स्थावरस्य, त्रस्तजीवस्य) यो न हिंसां करोति, न कारयति, न चापि तादृशीं हिंसां समर्थयते, स पालयति वस्तुतो व्रतमिदम्। पृथ्वीजल-वायुवनस्पत्यग्निप्रमुखाः सन्ति स्थावरप्राणिनः। एते त्रासकारणे समुपस्थिते सत्यपि स्थावरा एव तिष्ठन्ति, न पलायन्ते। पलायितुं वाऽक्षमा भवन्ति। अपरे भवन्ति त्रस्तकोटिका जीवा ये भयकारणे समुपस्थिते सति पलायितुमात्मानं त्रातुं स्वस्थानमन्तरयितुं वा क्षमन्ते।

अनया व्याख्यया प्राणातिपातस्य हिंसाया वा क्षेत्रमतिपृथुलं सञ्जायते। मृषावादप्रत्याख्यानव्रतं सन्मार्गस्य द्वितीयं सोपानम्। कन्यापशु-भूमिन्याससाक्ष्यप्रसङ्गेषु मिथ्याभाषणमेव मृषावादः समुच्यते। अत्रापि क्रियायाः पूर्वोल्लिखिताः प्रकाराः (करणं कारणम् अनुमोदनञ्च) हेतवश्च (मनोवाक्कायाः) चरितार्था भवन्ति।

क्रियायाः त्रिप्रकारेषु जैनदर्शनं प्रकारद्वयमेव गृह्णाति—करणं कारणञ्च। यतो हि प्रकारद्वयेऽस्मिन् मानवस्य साक्षात्सहयोगोऽवलोक्यते। अनुमोदने तावन्मानवस्य साक्षादुत्तरदायित्वं न सिद्ध्यति। गार्हस्थ्यवृत्तौ तु कामं कोऽपि पापं न कुर्यान्न वा कारयेत्तथापि पापानि भवन्त्येव। भूमिमार्जने कीटा म्रियन्ते एव। वृन्ताकगर्भस्था कीटा अग्निपाके सति दह्यन्त एव। पर्यटने सति

पदत्राणदलिता पिपीलिकादयो म्रियन्त एव। एतादृंशि खलु कर्माणि मानवं न बध्नन्ति पातकेनेत्यार्हति समुदारा दृष्टिः।

अदत्तादानस्य प्रत्याख्यानं तृतीयं व्रतम्। किम्पुनरदत्तादानम्? तदुच्यते। अर्गलां भञ्जयित्वा, ग्रन्थिं कर्तित्वा, सन्धिं विधाय, लुण्ठनादिकं वाऽचरित्वा परद्रव्यापहरणं चौरकर्मनिष्पादनं वा समुच्यतेऽदत्तादानम्। अस्यापि मनसा वाचा कर्मणा च करणं कारणं हि अदत्तादानं भवति। ततोऽपि विरमणमिच्छति जैनमतम्। जगतस्सर्वाः स्त्रियस्त्यक्त्वा स्वभार्यामात्रमैथुनेन परितोषोऽभिधीयते स्वदारसन्तोषव्रतम्।

इच्छाविधिपरिमाणव्रतं नामाऽपरिग्रहव्रतम्। वस्तुतो जैनधर्मस्य द्वितीयोऽयं सुदृढस्तम्भः। अहिंसाऽपरिग्रहश्चेत्युभयमपि जीवनाधारभूतं तत्त्वम्। अस्याऽपरिग्रहस्यापि पञ्चप्रकारा व्याख्याताः। क्षेत्रं वास्तु (गृहं) च, हिरण्यम्, द्विपदचतुष्पदाः पशुपक्षिणश्च, धनं धान्यमाभूषणादिकञ्च, कुप्यधातुः गृहसामग्री च। एतेषां समेषामपरिग्रह एवेच्छापरिमाणव्रतमुच्यते।

दिक्परिमाणव्रतं नाम षष्ठं व्रतम्। अनेन व्रतेन दिक्पर्यटन-नियमोऽङ्गीक्रियते। सप्तमेनोपभोगपरिभोगव्रतेनापि विविधानां परिभोगानां नियमनं विधीयते। अङ्गप्रक्षालनविधिः, दन्तधावनविधिः, फलग्रहणविधिः, अभ्यङ्गविधिः, उद्वर्तन-मज्जन-वस्त्रविलेपन-पुष्पाभरण-धूप-भक्ष्यपेयौदनसूप-घृतशाकरसजलमुखवासविधिश्चेति सर्वमपि परिभोगान्तर्गतमेव गण्यते। एतेषां समेषां नामग्राहपूर्वकं विस्तृतं व्याख्यानमुपलभ्यते जैनागमेषु।

अनर्थदण्डप्रत्याख्यानव्रते चत्वारि तत्त्वानि वर्तन्ते। तत्र प्रथमं दुर्ध्यानाचरणम् (कस्याप्यहितचिन्तनम्), प्रमादाचरितम्, हिंस्रप्रदानम्, पापकर्मोपदेशनञ्च। सामयिकव्रतं नाम पापप्रवृत्तिप्रत्याख्यानं पूर्वाचरितपापप्रवृत्ति-गर्हणं तत्प्रतिक्रमणमात्मपर्युपासनञ्च। देशावकाशिकव्रतं नाम दिङ्मर्यादासंक्षिप्तीकरणं समुच्यते। एकादशे औषधोपवासव्रते निर्जलोपवासस्य नियमोऽङ्गीकृतः। अस्य निर्जलोपवासस्यापि विस्तृतविधिस्समुपदिष्टो वर्तते जैनागमेषु। ततश्चान्तिमेऽतिथिसंविभागव्रतेऽवलोक्यतेऽतिथिचर्याया विस्तृतं व्याख्यानम्। ये खलु निर्ग्रन्थाः श्रमणाः सन्ति तेषामशनपानाहार-वस्त्रकम्बलपादपीठसंस्तरौषधभैषज्यादिभिः परिसेवनमेव यथासंविभागव्रतमुच्यते।

ततश्च समायाति अतिचाराणां प्रसङ्गः। यानि खलु द्वादशव्रतानि पूर्वं निरूपितानि तेषां समेषां प्रतिव्रतं पञ्चातिचाराः सम्भवन्ति। तेषां समेषामतिचाराणां परिहारोऽपि सन्मार्गपरिपालनायाऽनिवार्यः प्रतीयते। अतीव-विस्तृतोऽयं सन्दर्भः संक्षिप्तेऽस्मिन्नालेखे साङ्गोपाङ्गं निरूपयितुं न शक्यते। अत एव मूलग्रन्थैरेव तत्सर्वमध्येतव्यम्। वस्तुतो धर्ममार्गनिर्धारणे आर्हताचार्याणामवदानं सर्वथाऽप्रतिमं विलक्षणं चैव प्रतीयते। नात्र कापि संशीतिः।



# प्रातिशाख्यकारः कात्यायनस्तस्य पाणिनिपूर्वभावित्वञ्च

**प्रो. युगलकिशोरमिश्रः**
कुलपतिचरः, राजस्थान-संस्कृत-विश्वविद्यालयस्य
आचार्योऽध्यक्षश्च, वेद-विभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये, वाराणस्याम्



वाजसनेयिप्रातिशाख्यविरचयितुः कात्यायनस्य सम्बन्धे प्राच्यप्रतीच्यविद्वद्भिः बहु समालोचितमस्ति। अथापि तेषु मतभेदा दृश्यन्ते। कात्यायनाचार्यविषये यानि तथ्यानि विचारकैः प्रस्तुतानि तान्येवं सन्ति—

'त्रिकाण्डशेषकोशः' इति ग्रन्थस्य कर्त्रा पुरुषोत्तमदेवेन कात्यायनस्य पञ्चनामानि-मेधाजित्, कात्यः, कात्यायनः, पुनर्वसुः, वररुचिश्चेति प्रतिपादितानि[१]। महाभाष्यकारेण पतञ्जलिनाऽपि कात्य-कात्यायन-वररुचीत्यभिधानानामुल्लेखः कृतो वर्तते[२]। भाषावृत्तौ पुनर्वसु-वररुचिनामनी समानसंज्ञात्वेनोक्ते[३]। 'कथासरित्सागर'-ग्रन्थे 'श्रुतधर' इत्याख्या वररुचिकात्यायनस्य कृते व्यवहृता वर्तते[४]। हेमचन्द्रकृते कोशग्रन्थे कात्यायननामसु मेधाजित्, वररुचिः, पुनर्वसुरिति नामानि पठितानि सन्ति[५]। अत्रेदमवधेयम्भवति यत् यथा आचार्यवर्यस्य कौटिल्यस्य कृते 'वात्स्यायन' इति संज्ञा व्यवह्रियते, यथा च भगवतः पाणिनेः कृते 'शालातुरीय' इति संज्ञा प्रयुज्यते, तथैव कात्यायनाचार्यस्य कृते उपर्युक्तानि नामानि

---

१. मेधावी वाथ मेधाजित् कात्यः कात्यायनश्च सः।
पुनर्वसुर्वररुचिर्गोनर्दीयः पतञ्जलिः।। (त्रिकाण्डशेषकोषः २.२५)

२. प्रोवाच भगवान् कात्यः.....। (महाभाष्यम् ३.२.३)

३. पुनर्वसुर्वररुचिः ४.३.३४।

४. 'एष श्रुतधरो जातो विद्यां वर्षादवाप्स्यति'। (१.२.६९-७०)

५: 'कात्यायनो वररुचिर्मेधाजिच्च पुनर्वसुः'। (अभिधानचिन्तामणिः ३.८५२)

ग्रन्थकृद्भिरुद्धृतानि सन्ति। श्रीपाददामोदरसातवलेकरमहोदयेन 'पारस्कर' इत्याख्यापि कात्यायनस्य कृते साधिता वर्तते[१]।

कश्मीराभिजनेन सोमदेवेन स्वकीयकथासरित्सागरग्रन्थे कात्यायन-विषयिणी एका आख्यायिका उद्धृता वर्तते। तदनुसारं वररुचि:कात्यायनः कुशाग्रबुद्धिः मेधावी बालकः आसीत्।

तेन व्याडिसकाशात् प्रातिशाख्यशास्त्रमधीत्य सद्य एवानुपूर्वीक्रमेण तच्छास्त्रस्य श्रावणं विहितम्। गूढशास्त्रेषु गभीरविषयेषु च सपदि तेन अधिकारो लब्धः। एवञ्च एकदा शब्दशास्त्रचर्चायां पाणिनिं पराजितवान्। परं शिवस्यानुग्रहेणान्ततः पाणिनिना विजयश्रीर्लब्धा। तदनन्तरमुग्रतपःप्रभावेण कात्यायनः भगवन्तमाशुतोषं तोषयन् शब्दशास्त्रस्योपदेशं गृहीतवान्। स्वप्रतिभया कालान्तरे कात्यायनेन पाणिनिव्याकरणस्य पूर्णं परिष्कृतञ्च स्वरूपं प्रकाशितम्। एवञ्च महाराजस्य नन्दस्य, तदुत्तराधिकारिणः योगनन्दस्य च मन्त्रिता कृता। कथासरित्सागरग्रन्थानुसारं कात्यायनोऽयं शिवगणेषु प्रामुख्यं भजमानस्य पुष्पदन्त इत्यभिधेयस्यावतारभूतः आसीत्[२]।

ऋक्सर्वानुक्रमणीग्रन्थभाष्यकृता षड्गुरुशिष्येण स्वकीयपद्यभूमिकायां कात्यायनस्य शौनकाचार्यशिष्यत्वम् आश्वलायनसतीर्थ्यत्वञ्च उक्तम्। कात्यायनेन वाजिसूत्रम्, उपग्रन्थाः, स्मृतिः, भ्राजमानश्लोकाः, ब्राह्मकारिका, पाणिनीयव्याकरणे महावार्तिकम्, ऋक्सर्वानुक्रमणी-प्रभृतयो ग्रन्थाः व्यरचीत्यपि उल्लिखितम्[३]। श्रीकृष्णचरितकाव्यप्रारम्भे स्कन्दगुप्तेन लिखितमस्ति यत्

---

१. 'याज्ञवल्क्यस्य पुत्रः कात्यायनीसजातः कात्यायनः परासां शाखानां ग्रन्थनिर्माणकरणात् पारस्कर इति नाम्ना प्रसिद्धः'। (का.सं.भू., पृ. १६)

२. 'ततः स मर्त्यवपुषा पुष्पदन्तः परिभ्रमन्। नाम्ना वररुचिः किञ्च कात्यान इति श्रुतः। ....जिज्ञासार्थम् मे प्रातिशाख्यमपठ्यत। तथैव तन्मया सर्व पठितं पश्यतोस्तयोः।। .....एवं व्याडीन्द्रदत्ताभ्यां तत्र वसन्क्रमात्। प्राप्तोऽहं सर्वविद्यानां पारमुत्क्रान्तशैशवः।। .....अष्टमेह्नि मया तस्मान्जिते तत्समनन्तरम्। नभस्थेन महाघोरो हुंकारः शम्भुना कृतः। तेन प्रणष्टमैन्द्रन्तदस्मद् व्याकरणं भुवि। जिता पाणिनिना सर्वे मूर्खीभूता वयं पुनः।। .....अत्रान्तरे तुषाराद्रौ कृत्वा तीव्रतरं तपः। आराधितो मया देवो वरदः पार्वतीपतिः। तदैव तेन शास्त्रं मे पाणिनीयं प्रकाशितम्। तदिच्छानुग्रहादेव मया पूर्णीकृतं च तत्। .....पारं सम्प्राप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम्। .....इत्युक्त्वैव गते व्याडी दातुं तां गुरुदक्षिणाम्। तदैवानीय दत्ता मे योगनन्देन मन्त्रिणे'। (कथासरित्सागरः १.२ एवं १.४)

३. 'शौनकस्य तु शिष्योऽभूद् भगवानाश्वलायनः। .....शौनकस्य प्रसादेन कर्मज्ञः समपद्यत। कात्यायनमुनिः.....वाजिनां सूत्रकृत् साम्नामुपग्रन्थस्य कारकः। स्मृतेश्च कर्त्ता श्लोकानां

कात्यायन: स्वेरितवार्तिकैर्यथा व्याकरणशास्त्रं पुपोष, तथैव स्वर्गारोहणकाव्यं निर्माय तेन कविकर्मदक्षताऽपि प्रदर्शिता[1]।

प्रतिज्ञापरिशिष्टग्रन्थभाष्यकृता अनन्तदेवयाज्ञिकेन कात्यायनस्य स्मरणमष्टादशपरिशिष्टग्रन्थैस्सकल्पसूत्रकाररूपेण कृतम्[2]।

स्कन्दपुराणस्य नागरखण्डान्तर्गत १३०-३१ अध्यायानुसारं कात्यायन्यां जातो महर्षिकात्यायन: याज्ञवल्क्यपुत्र: यज्ञविद्याविचक्षण: वैदिककल्पसूत्रग्रन्थ-कारश्चासीत्। अस्य वररुचिर्नामा एक: पुत्रो बभूव[3]।

वृत्तजातिसमुच्चयनामकप्राकृतच्छन्दोग्रन्थस्य टीकाकारेण चक्रपालात्मजेन गोपालेन स्वकीयोपोद्घाते छन्द:शास्त्ररचयितृषु पिङ्गलादिवत् कात्यायन-स्योल्लेख: सनमस्कृति कृत:। अमरकोषस्य एकस्मिन्हस्तलेखे अष्टादशकोश-कारगणनाप्रसङ्गे वररुचिकात्यायनयो: पृथक्-पृथक् कोशकाररूपेण निर्देश: कृतो विद्यते। कातन्त्रव्याकरणवृत्तिकारदुर्गसिंहलेखेन ज्ञायते यत् षट्पादीयकृत्-प्रकरणस्य रचयिता कात्यायनो वर्तते।

**पाश्चात्त्यविदुषां मतम्**

मैक्समूलर-वेबर-गोल्डस्टुकरप्रभृतिभिर्विद्वद्भि: कात्यायनविषये स्वकीयमतानि प्रतिपादितानि। परं त्रयोऽपि परस्परं विवदन्ते। कथासरित्सागरस्य सोमदेवलेखाधारेण मैक्समूलरमहोदयस्य मतमस्ति यत् शौनकाश्वलायन-कात्यायन-पतञ्जलि-व्यासरूपात्मिका पाञ्चपौरुषी गुरु-शिष्य-परम्परा

---

भ्राजमानां च कारक:। अथर्वणां निर्ममे य: सम्बन्धे ब्राह्मकारिका:। महावर्त्तिकनौकार: पाणिनीयमहार्णवे। यत्प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलि:। व्याख्यञ्छान्तनवीयेन महाभाष्येण हर्षित:। तपोयोगान्निर्ममे य: सर्वानुक्रमणीमिमाम्'।

(ऋक्सर्वानुक्रमणी, षड्गुरुशिष्यकृतायां भूमिकायाम्)

१. 'य: स्वर्गारोहणं कृत्वा स्वर्गमानीतवान्भुवि। भाष्येण रुचिरेणैव ख्यातो वररुचि: कवि:। न केवलं व्याकरणं पुपोष दाक्षीसुतस्वेरितवार्त्तिकैर्य:। काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्ष:'।

२. 'कल्पानष्टादशपरिशिष्टानि च प्रणीतवतो भगवत: कात्यायनस्य' प्र.परि. १.१।

३. 'एवं सिद्धिसमापन्नो याज्ञवल्क्यो द्विजोत्तम:। .....जनकाय नरेन्द्राय व्याख्याय च तत: परम्। कात्यायनसुतं प्राप्य वेदसूत्रस्य कारकम्।। (स्क.पु., ना.खं., १३०.७०-७१) कात्यायनाभिधं च यज्ञविद्याविचक्षणम्। पुत्रो वररुचिर्यस्य बभूव गुणसागर:'।

(स्क.पु., ना.खं., १३१.४८-४९)

काचिदासीत्[१]। तत्र कात्यायनापरपर्यायो वररुचिः पाणिनिसमकालिकः आसीत्[२]। परं समेऽपि प्रातिशाख्यग्रन्थाः पाणिनि-अष्टाध्यायीतः पूर्वमेव विरचिताः[३]। मैक्समूलरानुसारं ग्रन्थरचनायाः क्रमः इत्थं विद्यते—

(अ) कात्यायनप्रातिशाख्यम्।

(आ) पाणिनीयव्याकरणम्।

(स) कात्यायनीयं वार्तिकम्।

कथासरित्सागराधारेण मैक्समूलरमहोदयेन कात्यायनस्य कालः ईशातः पूर्व चतुर्थशताब्द्याः उत्तरार्द्धः (३५० ई.पू.) स्थिरीकृतः[४]।

आटोबोथलिङ्गमहोदयानुसारमपि कात्यायनस्य समयः ई. पूर्वचतुर्थशताब्द्याः मध्योऽस्ति। राजतरंगिणीग्रन्थस्य सन्दर्भानुसारेण अभिमन्युनामकेन केनापि राज्ञा चन्द्रप्रभृतयो वैयाकरणाः कश्मीरदेशेषु पातञ्जलमहाभाष्यपाठनार्थमादिष्टाः। ओटोबोधलिङ्गमहोदयः अभिमन्युराजस्य कालं ई. पूर्व १०० अनुमिनोति। एतेनाधारेण च तेन पाणिनेः कालः ई.पू. ३५० निर्धारितः[५]। एवमपि कात्यायनस्य कालः ई.पू. चतुर्थशतीमध्यः सिध्यति। 'लैसेन' महोदयः उपर्युक्तं कालनिर्धारणं खण्डयन् पाणिनिकालः ई.पू. द्वितीयशताब्दीति साधितवान्[६]।

वेबर-मैक्डानलमहोदयौ मैक्समूलरदृष्टिकोणविरुद्धौ द्वौ पृथक्-पृथक् कात्यायनौ मन्येते[७]। परमुभावपि वाजसनेयिप्रातिशाख्यस्य रचना पाणिनिकालात्प्राग् जातेत्यत्र मैक्समूलरेण साकं संवदतः। मैक्डानल-महोदयस्याभिमतं विद्यते यत् एकः कात्यायनः परिशिष्टादि-ग्रन्थानां वाजसनेयप्रातिशाख्यस्य च निर्माताऽऽसीत्। अपरश्च कश्चन कात्यायनः

---

१. द्र. History of Ancient Sanskrit Literature, p. 125.

२. द्र. History of Ancient Sanskrit Literature, p. 71.

३. द्र. History of Ancient Sanskrit Literature, p. 62.

४. 'Katyayana may be placed, according to the interpretation of the Somdeva's story, in the second half of the Fourth Century, B.C., History of Ancient Sanskrit Literature', p. 127.

५. द्र. Commentary on Panini by Otto Bothti ngk, p. 17-18.

६. Insidche Alterthumskunde, Vol. II, p. 413.

७. द्र. Preface of Katyayana Pratisakhya Edited by A. Weber.

पाणिनिव्याकरणस्य वार्तिककारः आसीत्। यतो हि वैदिकभाषायाः कानिचिद् विशिष्टरूपाणि यानि पाणिनिव्याकरणद्वारा न साधितुं शक्यन्ते तानि परिशिष्टादिग्रन्थेषु समुपलभ्यन्ते। तानि पाणिनीयव्याकरणेन साधितुमशक्यानीति मैक्डोनलमहोदयस्य तर्को विद्यते।

गोल्डस्टुकरमहोदयस्य मतमस्ति यद् वाजसनेयिप्रातिशाख्यस्य रचयिता, वार्तिककारश्च कात्यायनः समान एव। कात्यायनेन पूर्वं महावार्तिकस्य रचना कृता तदनन्तरं च वाजसनेयिप्रातिशाख्यस्येति असौ मन्यते। वैदिकभाषायां पाणिनिवर्यस्य नियमा अपूर्णा आसन् इति कृत्वा कात्यायनः तन्न्यूनतापूर्त्यर्थं प्रातिशाख्यं व्यरचयत्[१]। एवं गोल्डस्टुकरमहोदयः एककात्यायनपक्षे मैक्समूलरेण साकं संवदति।

परं केचन प्रातिशाख्यग्रन्थाः पाणिनिपश्चात्-कालिका इति उद्घोषयद्भिः मैक्समूलर-वेबर-राथ-बर्नेल-लाइबिच-प्रभृतिभिर्विद्वद्भिः पृथक्तया कश्चन तृतीयः पन्थाः समासादितः। रॉथमहोदयेन पाणिनिव्याकरणस्य मार्गदर्शकतया अग्रगाम्यादर्शरूपेण प्रातिशाख्यानामवस्थितिः स्वीकृता वर्तते[२]। बर्नेलमहाशयोऽपि प्रातिशाख्यानि पाणिनिव्याकरणात्पूर्वकालिकानि मनुते। लाइबिचमहोदयोऽपि वाजसनेयिप्रातिशाख्यस्य पाणिनेः पूर्वभावित्वं स्वीकरोति।

**वाजसनेयप्रातिशाख्यस्य पाणिनिपूर्वभावित्वविचारः**

प्रातिशाख्यसूत्रैस्सह पाणिनिसूत्राणां तुलनात्मकेनाध्ययनेनेदं स्पष्टं प्रतीयते यत् प्रातिशाख्यसूत्राणां रचनाशैली शिथिला विस्तृता च वर्तते। एतदपेक्षया पाणिनीयव्याकरणस्य शैली सुसंगठिता, वैज्ञानिकी, लघीयसी, आदर्शभूता च विद्यते। उदाहरणार्थम्—वाजसनेयिप्रातिशाख्ये गुणविधानं सूत्रद्वये विद्यते[३]। परं पाणिनीयव्याकरणे एकस्मिन्नेव सूत्रे इदमस्ति[२२]। यदि प्रातिशाख्यकाराणां समक्षं पाणिनिव्याकरणस्य सूत्राणि आदर्शरूपेण अभविष्यँस्तर्हि ते प्रातिशाख्यग्रन्थानां निर्माणे श्लथशैल्याः अवलम्बनं कथमकरिष्यन्। अतश्चेदं निश्चीयते यत् प्रातिशाख्यानां रचना पाणिनिकालात् प्रागेव जाता। पाणिनिवर्यस्य कालं जी.आर. भण्डारकर-गोल्डस्टुकरमहोदयौ

---

१. द्र. Panini and his place in Sanskrit Literature, p. 200,205,212,217.

२. द्र. Preface of the Nirukta, p. XLIII, Edited by Roth.

३. 'कण्ठ्यादिवर्णं एकारम्। उवर्णं ओकारम्'। (वा.प्रा. ४.५४-५५)

ई.पू. सप्तमशताब्दीरूपं साधयतः। ग्रियर्सन-लसेन-बोथलिङ्ग-कीथ-प्रभृतयो विद्वांसः पाणिनिमहोदयस्य ई.पू. चतुर्थशताब्दीकालं स्थिरीकुर्वन्ति। वासुदेवशरणअग्रवालमहाशयस्तु पाणिनिं ई.पू. पञ्चमशताब्द्यां स्थापयति। युधिष्ठिरमीमांसकमहोदयानुसारं पाणिनेः समयः विक्रमतः पूर्वं २८०० वर्षाणि वर्तते। एवं प्रातिशाख्यकारस्य कात्यायनस्य निम्नतमकालसीमा ई.पू. चतुर्थशताब्दी वर्तते। आचार्यकात्यायनस्य रचनारूपेण वाजसनेयप्रातिशाख्येन साकम् अष्टादशपरिशिष्टानि, कात्यायनश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, सर्वानुक्रमणीग्रन्थः, क्रमसन्धानसूत्रम्, प्रतिज्ञापरिशिष्टसूत्रम्, गृह्यसूत्रस्यानेक-परिशिष्टसूत्राणि च सन्तीति शम्।



# ऋग्वेदीयदार्शनिकसूक्तानां लोकोपकारकत्वम्

**डॉ. राममूर्तिचतुर्वेदी**
उपाचार्यः, संस्कृतविभागस्य
महात्मागान्धिकाशीविद्यापीठे
वाराणस्याम्



वैश्विकवाङ्मये सर्वप्रथमपरिगणित ऋग्वेदे यद्यपि प्राच्यप्रतीच्योभयविध-दार्शनिकमतसिद्धान्तानां स्रोतांसि समधिगम्यन्ते, तथापि तत्र मुख्यतया वाक्पुरुषप्रजापतिनासदीयाभिधानैः समाम्नातं दार्शनिकसूक्तचतुष्टयं विश्वोत्पत्त्यादिहेतुभूतं तत्त्वमेव प्राधान्येन प्रतिपाद्य तदीयाभिप्रायेण जगतो वैविध्यं सृष्टिरहस्यञ्चाधिगमय्य समग्रं लोकं विशेषतो मनीषिमण्डलं भृशमुपकरोतीति मे द्रढीयान् विश्वासः।

तत्र जीवजगद्ब्रह्मेति तत्त्वत्रयमधिकृत्य भारतीयदर्शनानां प्रवृत्तिरिति न तिरोहितं विदुषां तत्रापि जीवब्रह्मणोरैक्यमित्यद्वैतवेदान्तराद्धान्तं प्रति सर्वेषां दार्शनिकानामादरभावो नूनं वैदिकमेकेश्वरवादं पुष्णाति।

तदेवमृग्वेदीयदार्शनिकसूक्तेषु प्रतिपादितमेकेश्वरवादमुपजीव्य लोकोपकारकत्वन्निरूपयिष्यत इति दिक्।

**सूक्तसन्दर्भोपन्यासः**

ऋग्वेदे यद्यपि दार्शनिकसूक्तसन्दर्भा नैकविधाः प्राप्यन्ते तथापि तत्र प्रामुख्येण परिगणितानां पूर्वोक्तदार्शनिकसूक्तानां सन्दर्भोपन्यासः यथाक्रममत्रोपस्थाप्यते, तत्र सर्वतः प्रथमं पुरुषसूक्तं, ततः परं द्वितीयं प्रजापति-सूक्तं तदुत्तरं तृतीयं वाक्सूक्तं तथा परमं तुरीयं नासदीयं सूक्तमिति क्रमः। इमानि चत्वारि सूक्तानि ऋग्वेदीयदशममण्डले पूर्वापरक्रमेण पठितानि सन्ति, तत्र पुरुषसूक्तं दशममण्डलस्य नवतितमं, प्रजापतिसूक्तं दशममण्डलस्य एक-विंशत्यधिकशततमं, वाक्सूक्तं दशममण्डलस्य पञ्चविंशत्यधिकशततमं, नासदीयसूक्तञ्च दशममण्डलस्य एकोनविंशत्यधिकशततमं सूक्तं विद्यते।

**दार्शनिकसूक्तानां प्रतिपाद्यानि**

ऋग्वेदीयदार्शनिकसूक्तचतुष्टयस्य परमं प्रतिपाद्यमेकमेव परं तत्त्वं विद्यते, तस्यैवाभिधानं क्वचित् पुरुषरूपेण, कुत्रचित् प्रजापतिरूपेण, क्वचित् वाग्रूपेण क्वचिच्च सर्वनाम'तत्'रूपेण प्राप्यते। परमप्रतिपाद्याभिप्रायेणैव सूक्तस्याप्यभिधानं तथैव क्रियते पुरुषसूक्तं प्रजापतिसूक्तं, वाक्सूक्तमिति तथा। सूक्तगत-प्रथममन्त्रवर्णानुरोधेन नासदीयं सूक्तमिति। सूक्तचतुष्टयस्य परमप्रतिपाद्यैकत्वेऽपि सूक्तर्षिणां प्रतिपादनदृष्टिः विभिन्ना दृश्यते, तत्र सूक्तेषु सृष्टेः प्राक् पश्चाच्च सृष्टिकर्तुरवस्थानात् तस्य च क्वचित् पुरुष, प्रजापति, वाक्, तत् रूपेणाभिधानात् सृष्टिप्रक्रियोपक्रमेणैव सूक्तारम्भः परिदृश्यते। तदेवमत्र सूक्तप्रतिपाद्यानुरोधेन किञ्चिद् विमृश्यते।

**पुरुषसूक्तप्रतिपाद्यम्**

पुरुषसूक्ते पुरुष एव परमः प्रतिपाद्यो निरूप्यते, तत्र पुरुषः पूर्णत्वात् पुरिशयनाद्वा सर्वभूतान्तरात्मा परमेश्वर उच्यते स एकः सन्नपि जीवरूपेण बहुधा जायते, तद्यथा कठोपनिषदि—

एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीराः
तेषां सुखं शाश्वतं नेतरेषाम्[१]।।

स एव परमात्मा 'तत्सृष्ट्वा तदेवानुप्राविशत्'[२] इति श्रुत्या जगदिदं सृष्ट्वा जीवात्मरूपेण विभिन्नेषु भोगायतनशरीरेषु शयनत्वात् पुरुष उच्यते, अत्र पुरुषशब्दनिर्वचनेन क्वचित् परमेश्वरः क्वचित् जीवः क्वचित् मनुष्यो व्यपदिश्यते। अत्र भगवत्पादैराद्यशङ्कराचार्यैः स्वकीये भाष्ये[३] पुरुषशब्दो बहुधा विवेचितः, तद्यथा—पुरं शरीरं तस्मिन् शेते पुरुषः इति। अत्र महाभारतीयं प्रामाण्यमपि निर्दिष्टं प्रोच्यते, तद्यथा—

नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्।
व्याप्य शेते महात्मा यस्तत्तत् पुरुष उच्यते।।
(म.शा.पर्व. २१०.३७)

---

१. कठोपनिषद् २.२.१२; २. तै.उप. २.६।
३. विष्णुसहस्रनामभाष्ये, श्लो. १५।

यद्वा अस्तेर्व्यत्यस्ताक्षरयोगाद् आसीत् पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः पुरुषः। पूर्वमेवाहमिहासमिति तत् पुरुषस्य पुरुषत्वमिति श्रुतेः।

अथवा पुरुषु भूरिषु उत्कर्षशालिषु सत्वेषु सीदतीति, पुरूणि फलानि सनोति ददातीति वा पुरूणि भुवनानि संहारसमये स्यति अन्तङ्करोतीति वा पूर्णत्वात् पूरणाद्वा सदनाद्वा पुरुषः 'पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः' इति पञ्चमवेदे। (उद्योगपर्व. ७०.११)

त्वमादिदेवः पुरुषः पुराणः[१], 'सनातनस्त्वं पुरुषो मतो मे'[२] 'परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः'[३] 'तमेव चाद्यं पुरुषं प्रपद्ये'[४] इत्यादिगीतोक्तवचनैः पुरुषशब्देन परमात्मा व्यपदिष्टः। अपरत्र—'तैस्तैरतुष्टहृदयः पुरुषं विधाय'[५] इति भागवतोक्तेः मनुष्यापरपर्यायभूतः पुरुष उच्यते, अपि च 'पुरुषः सर्वदुःखानां भोक्तृत्वे हेतुरुच्यते'[६] तथा 'पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्'[७] इत्यादि गीतोक्तवचनैः जीवात्मा पुरुषशब्देनोच्यते। एतावता प्रतिपादनेनायं निष्कर्षो जायते, यत् पुरुषः क्वचित् परमात्मारूपेण क्वचिच्च जीवात्मारूपेण वर्णितः। पुनश्च जीवात्मनो यद् भोगायतनं शरीरं तदपि क्षररूपो पुरुष उच्यते कूटस्थपुरुषाधिष्ठानत्वात्। अपि चापरः जीवात्मारूपेण अक्षरपुरुषस्तत्राधिष्ठीयते, क्षराक्षरपुरुषयोरधीश्वर एकोऽन्यः पुरुषः प्रधानपुरुषेश्वर इत्युच्यते अयमेव पुराणपुरुषः, सनातनपुरुषः, पुरुषोत्तम इत्यादि नामपदैरभिधीयते। अत एव गीतायामुच्यते—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।।

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।।

(गीता १५.१६-१८)

---

१. भगवद्गीता ११.३८; २. तत्रैव, ११.१८।
३. तत्रैव, १३.२२; ४. तत्रैव, १५.४।
५. श्रीमद्भागवते एकादशस्कन्धे; ६. भगवद्गीता १३.२०।
७. तत्रैव, १३.२१।

पुरुषसूक्ते स एवाव्ययः पुरुषः 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'[१] इत्यादिना समाम्नातः। सहस्रशब्दोऽत्रानन्तसंख्यापरः, अतः अनन्तशिरोभिः, अनन्तपादैः, अनन्तनैत्रैः युक्तो विराडाख्यो विश्वात्मा पुरुषः ब्रह्माण्डदेहं सर्वतोऽभिव्याप्यापि दशाङ्गुलपरिमितं स्थानं ब्रह्माण्डाद्बहिरपि व्याप्नोतीति मन्त्राशयः। पुनः 'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्य'[२]मित्यादिना मन्त्रेण विश्वात्मरूपेण यदिदं वर्तमानं जगत् यच्चातीतं यच्च भविष्यत् तत्सर्वं पुरुष एवेति प्रतिपाद्यते, परन्तु नैतावदेव रूपमस्ति पुरुषस्येति सुवचं भवति, यतो हि अग्रिमे मन्त्रे जगद्रूपं पुरुषस्य चतुर्थांशमेकपादरूपमुक्तम्[३], अवशिष्टं त्रिपात्स्वरूपन्तु स्वप्रकाशस्वरूपे व्यवतिष्ठते, अत्र यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म'[४] इति श्रुत्या सत्यात्मकस्य पुरुषस्य इयत्ताभावात् पादचतुष्टयं नोपपद्यते, तथापि जगदिदं परमपुरुषस्य वास्तवस्वरूपापेक्षया अत्यल्पमस्तीति प्रतिपादने श्रुतेस्तात्पर्यमस्ति।

**विराडोत्पत्तिः**

विविधानि वस्तूनि राजन्तेऽत्रेति विराट् नाम विश्वमिदं चराचरं जगत्, अयं हि विराट् ब्रह्माण्डदेहः तस्मादेवादिपुरुषादुत्पन्नः। परमात्मा आदिपुरुषः स्वकीयया मायया ब्रह्माण्डरूपं विराट्देहं सृष्ट्वा तस्मिन् जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्[५]। स जातो विराट् पुरुषो विराड् व्यक्तिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् पश्चात् देवादीनामधिष्ठानाय द्युलोकादिं सृष्ट्वा ततः परं तेषां जीवानां विविधानि शरीराणि च ससर्ज[६]। ततः परं सृष्टिसंवर्धनाय साध्या देवा मन्त्रद्रष्टारश्च ऋषयः सर्वे तमेव विराट्पुरुषं हविष्ट्वेन मनसा सङ्कल्प्य मानसं यज्ञमन्वतिष्ठन्।

तस्मिन् यज्ञे सर्वात्मको ह्यादिपुरुषः सर्वैः देवैः ऋषिभिश्चाहूतः, सोऽयं पुरुषो यज्ञश्च सर्वहुत इत्यभिहितः। तस्मादेव सर्वहुतो यज्ञात् यजनीयपुरुषाच्च

---

१. ऋ.सं. १०.९०.१; २. तत्रैव, १०.९०.२।

३. तत्रैव, १०.९०.३; ४. तै.आ. ८.१, उप. २.१।

५. स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रवृश्यामूढे मूढ इव व्यवहारन्नास्ते माययैव। (नृ.ता.उप., २.१.९)

६. ऋ.सं. १०.९०.४।

ऋचः, सामानि, यजूंषि, गायत्र्यादि-छन्दांसि, गावः, अश्वाः, अजाः, अवयः ग्राम्याः आरण्याश्च पशवः सञ्जाताः[१]। तस्मादेव विराट् पुरुषात् ब्राह्मणादयो वर्णाः[२], चन्द्रादयो देवाः[३], अन्तरिक्षप्रभृतयो लोका[४] दिशश्चाजायन्त। अपि च प्राणेन्द्रियरूपा देवाः तमेव विराट्पुरुषं हविष्ट्वेन प्रकल्प्य सृष्टिसम्वर्धनार्थं यद् यज्ञं मनसा भावितवन्तः, तत्र गायत्र्यादीनि सप्तछन्दांसि परिधयः आसन् एकविंशतिसंख्याकाश्च समिध आसन्[५], अनेन यथोक्तेन मानसयज्ञेनं देवाः तमेव यजनीयमादिपुरुषं पूजितवन्तः। तदेतत्पूजनमेव जगद्धारकं धर्मपदेन व्यपदिष्टं प्रथमं तत्त्वमासीत् अद्यापि तत्पूजकाश्च स्वर्गलोकं प्राप्नुवन्तीति[६] सूक्त-सारः।

**प्रजापतिसूक्तसारः**

अत्र पूर्वोक्तो विराट्पुरुष एव हिरण्यगर्भाख्यः प्रजापतिरुच्यते, स समग्रस्य भूतजातस्योत्पत्तेः प्राक् प्रथममुत्पन्नः तस्मादेव समस्तो भूतसर्गः उत्पन्नः, अत एव स सर्वविधभूतसर्गस्य पतिः सञ्जातः, तस्मादेव प्रजापति-रित्यभिधीयत इति, स सर्वतः प्रथमं त्रिलोकं (पृथिवी-अन्तरिक्षं-द्युलोकं) धारितवान्[७] स एव सर्वासां प्रजानाम् आत्मदा बलदा च जातः, अस्यैव प्रशासनं सर्वे प्राणिनः मन्वते, जीवनं मरणञ्च अस्यैव छायारूपं विद्यते[८]। अयमेव प्रजापतिः समस्तस्थावरजङ्गमानां राजा अस्ति, तथा समग्रस्य जगतः तत्र द्विपदां मनुष्यादीनां चतुष्पदां पशूनाञ्च शासको भवति[९]।

सर्वे हिमालयप्रभृतयः पर्वताः सर्वे समुद्राः सरितश्च तस्यैव प्रजापतेः माहात्म्यं विद्योतयन्ति, सर्वाः दिशः प्रदिशश्च तस्य बाहूरूपाः भवन्ति[१०], तेनैव प्रजापतिना पृथिवी स्थिरीकृता, स्वर्गश्च उपरिस्थापितः, आदित्यश्चान्तरिक्षे स्थापितः, स एव अन्तरिक्षे उदकस्य निर्माता अस्ति[११], तस्मिन्नेव प्रजापतौ

---

१. ऋ.सं. १०.९०.८-१०; २. तत्रैव, १०.९०.१२।
३. तत्रैव, १०.९०.१३; ४. तत्रैव, १०.९०.१४।
५. द्वादशमासाः, पञ्चर्तवः, त्रयो लोकाः, असावादित्य एकविंशः (तै.सं. ९.१.१०.३)।
६. ऋ.सं. १०.९०.१६; ७. तत्रैव, १०.१२१.१।
८. तत्रैव, १०.१२१.२; ९. तत्रैव, १०.१२१.३।
१०. तत्रैव, १०.१२१.४; ११. तत्रैव, १०.१२१.५।

सूर्यः उदितः सन् विभाति, द्यावापृथिव्यौ च लोकस्य रक्षणार्थं प्रजापतिना सृष्टे, ते च लब्धस्थैर्ये सत्यौ तं प्रजापतिं मनसा अभिपश्यतः[१] अग्न्युपलक्षितं वियदादिभूतजातं जनयन्त्यः तदर्थं हिरण्यमयाण्डरूपं प्रजापतिं धारयन्त्य आपो यदा सर्वं विश्वमाप्नुवन्, तदा सर्वेषां देवादीनां प्राणभूतः एकः प्रजापतिरेव समजायत[२]। पुनः प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधाना आपः यज्ञोपलक्षितं सृष्टिजातं जनयन्ति, तदानीमपि देवादीनामपीश्वरः सः प्रजापतिरेव आसीत्। अपि च यः प्रजापतिः भूमेः जनयिता अस्ति, यश्च सत्यधर्मा द्युलोकं जनयामास, तथा यः वृहतीः आह्लादकारिणीः आपः जनयामास, तस्मै एकस्मै प्रजापतये वयं हविर्दद्म इति सर्वत्रान्वयः[३]।

अत्र किं शब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते, सर्वनामत्वात् स्मै-भावः सिद्धः। अत्र भगवत्पादा आद्यशङ्कराचार्या इत्थं ब्रुवते, 'पतिरेक आसीत्' इति प्रथममन्त्रे 'एक' इत्युक्तत्वात् तस्मै एकस्मै देवाय इति साध्वन्वयः, एकारलोपश्छान्दसः, एकारलोपेनैकदैवतप्रतिपादकस्तैत्तिरीयके[४]। अत्र चरमे मन्त्रे सूक्तर्षयः प्रजापतिं सम्बोध्य प्रार्थयन्ति, यत् हे प्रजापते! त्वत्तो नान्यः कश्चित् सर्वाणि भूतजातानि परिग्रहीतुं शक्नोति, अतो वयं यत्फलं प्राप्तुकामाः तुभ्यं हवींषि प्रयच्छामः तत्फलमस्माकं भवतु, तथा वयं धनानां स्वामिनो भवेम इति सूक्तसारः।

**वाक्सूक्तसारः**

अत्र महर्षेः अम्भृणस्य दुहिता वाक् ब्रह्मवादिनी ऋषिका विद्यते, परमात्मना सह तादात्म्यमनुभवन्ती सा सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चात्मानमेव स्तौति। सा वदति यत् अहमेव वसुरुद्रादित्यादि-सर्वदेवस्वरूपेण विचरामि, मित्रावरुणौ, इन्द्राग्नी, अश्विनौ चाहमेव धारयामि[५], तथा अहमेव सोमं, त्वष्टारं, पूषणं भगं धारयामि, इन्द्रादिदेवानां कृते सोमाभिषवं कुर्वते यजमानाय यागफलरूपं द्रविणमपि अहमेव धारयामि[६]। अग्रे सा वदति यदहं सर्वस्य जगत ईश्वरी, धनानां प्रापयित्री, परब्रह्मणा सहैकात्मत्वात्

---

१. ऋ.सं. १०.१२१.६; २. तत्रैव, १०.१२१.७।
३. तत्रैव, १०.१२१.८-९; ४. वि.स. नाम-शाङ्करभाष्ये, श्लो. १०।
५. ऋग्वेदीयवाक्सूक्तम् १०.१२५.१; ६. तत्रैव, १०.१२५.२।

साक्षात्कृतवती, यजनीयानां प्रथमा, बहूनि भूतजातानि जीवभावेनात्मानं प्रवेशयन्तीं मां देवा सर्वत्र पश्यन्ति[१]। यः कश्चित् प्राणी अन्नमत्ति, रूपं पश्यति, घ्राणनं करोति, शब्दं शृणोति तत्सर्वं मत्प्रदत्तशक्त्या एव कर्तुं पारयति नान्यथा, ईदृशीम् अन्तर्यामिरूपेण स्थितां मां ये न जानन्ति, ते उपक्षीणा विनष्टा भवन्ति, हे विश्रुतसखे! मदीयं वचः शृणु, अहं तव कृते श्रद्धया लभ्यं ब्रह्मात्मकं वस्तु वदामि[२]। देवैः मनुष्यैश्च सेवितं तं ब्रह्मात्मकं वस्तु अहं स्वयमेव वदामि यत् अहमेव ब्रह्मात्मिका यं कमपि पुरुषं रक्षितुमिच्छामि तमुग्रं सर्वेभ्योऽधिकं करोमि, तमेव स्रष्टारं ब्रह्माणम्, अतीन्द्रियदर्शिनम् ऋषिं तथा शोभनप्रज्ञं च करोमि[३]। पुरा त्रिपुरविजयसमये महादेवो धनुः धारयामास, तत्राहमेव तस्य धनुरातनोमि, पुनः ब्रह्मणा सह द्वेषं कुर्वन्तं शरुनामकमसुरं हन्तुं धनुः धारयामि, आत्मीयजनाय रक्षणार्थं शत्रुभिः सहाहमेव संग्रामं करोमि, दिवं पृथिवीञ्चाहमेव अन्तर्यामितया प्रविशामि[४]। पितरं दिवमहमेव जनयामि, समुद्रे अप्सु चान्तः यद् ब्रह्म चैतन्यं तस्याहमेव कारणम्। अतोऽहं सर्वाणि भूतजातानि अनुप्रविश्य तिष्ठामि, सर्वविकारजातं स्वात्मना अहमेव स्पृशामि[५]। सर्वभूतानि कार्यकारण-रूपेणोत्पादयन्ती अहमेव वात इव स्वेच्छया प्रवामि, दिवः परस्तात् पृथिव्याश्च परस्तात् स्वचैतन्यमहिम्ना अहमेव सर्वविकारजातात् परस्तात् कूटस्थ-ब्रह्मचैतन्यरूपा अस्मीति सूक्तसारः[६]।

**नासदीयसूक्तसारः**

सूक्तेऽस्मिन् 'तपसस्तन्महिना जायतैकम्' इत्यादिना सृष्टेः प्राक् कश्चिदेकः तत्त्वविशेषः प्रतिपादितः, सृष्टेः प्राक् प्रलयावस्था नासदासीन्नो सदासीत्तदानीमित्यादिना निरूप्यते। प्रलयावस्थायां न सदासीत् नासदासीत्, अपि च अधस्तनाः पातालादयः पृथिव्यन्ता लोकाः नासन्, तथा व्योम्नः परस्तात् उपरितनाः द्युलोकप्रभृति सत्यलोकपर्यन्तं लोकाः नासन्। अर्थात् चतुर्दशभुवनाख्यं ब्रह्माण्डदेहोऽपि तदानीं नासीत्। आवार्यस्याभावात् आवरकतत्त्वमपि प्रश्नमुखेन निषेधयति। अर्थात् आवार्याभावात् आवरकमपि

---

१. ऋग्वेदीयवाक्सूक्तम् १०.१२५.३; २. तत्रैव, १०.१२५.४।
३. तत्रैव, १०.१२५.५; ४. तत्रैव, १०.१२५.६।
५. तत्रैव, १०.१२५.७; ६. तत्रैव, १०.१२५.८।

तदानीं नासीदित्यर्थः। 'आपो वा इदमग्रेसलिलमासीदिति'[१] श्रुत्या कश्चिदपां सद्भावनया शंकेत चेत् तं प्रत्याचष्टे, किं गहनं गभीरमम्भ आसीत्, अर्थात् तदपि नैवासीदिति श्रुतेः तात्पर्यम्। तदानीं न जीवनं न च मरणं, न च रात्रि-दिवसयोः प्रकेतः चिह्नः सूर्यः चन्द्रश्च आसीत्। तदानीं केवलं तत्त्वमेकं विना वायुं स्वशक्त्या प्राणनं कुर्वत् आसीत्, तस्मादतिरिक्तं किमपि नासीत्[२]। तत्र सायणाचार्यभाष्यानुसारं तत्सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वमानीत् प्राणितवत्। नन्वेवं प्राणनकर्तुर्जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात्, न विवक्षितस्य निरूपाधिकस्य ब्रह्मणः, 'अप्राणो ह्यमनाः शुद्धः' इति तस्य प्राणसम्बन्धाभावात्, तत्राह—आनीदवातमिति। आनीदित्यत्र धात्वर्थक्रिया, तत्कर्ता तस्य च भूतकालसम्बन्ध इति त्रयोऽर्थाः प्रतीयन्ते, तत्र न समुदायो विधीयते, अपि तु निरुपाधिकस्य परब्रह्मणः भूतकालसत्ता विधीयते। एतेनेदं विज्ञायते यत् तदेकं तत्त्वं स्वधया आनीत् प्राणवायुं विनापि प्राणवत् आसीत्, यदाह—स्वधयेति। तत्र स्वस्मिन् धीयते ध्रियत आश्रित्य वर्तते इति स्वधा-माया, तया तदेकं तत्त्वं ब्रह्माख्यमविभागायत्तमासीत् तदानीमिति भावः। तस्मात् मायासहितब्रह्मणोऽतिरिक्तं न किमपि वस्तु दैविकं भौतिकं वा आसीत्, तर्हि तदानीमन्यस्य कस्यचिदसत्त्वे कथं सत्वनिषेध उपयुज्यते, उच्यते, सृष्टेरूर्ध्वं वर्तमानमिदं जगत्तदानीं न बभूव इत्यर्थः।

उक्तप्रकारेण यदि पूर्वं जगन्नासीत् तर्हि कथं सृष्टिदशायां पुनरुत्पद्यते, उच्यते—यत् सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा आच्छादितमिव भवति, यथा नैभं तमः सर्वपदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावरकत्वान्न्यायापरसंज्ञं भावरूपत्वात् तम इत्युच्यते। अत्र आवरकत्वादावरकं तमः कर्ता, आवार्यत्वात् जगत् कर्म, तयोः तादात्म्यं सृष्टेः प्राक् अप्रकेतं अप्रज्ञायमानं भवति, यद्यपि जगतः तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते, तथापि व्यवहारदशायामिव तस्यां प्रलयदशायां नामरूपाभ्यां विस्पष्टं न ज्ञायते। अत एव मनुना स्मर्यते—

आसीदिदं तमोभूतमप्रज्ञातलक्षणम्।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः।। (मनु. १.४)

---

१. तै.सं. ७.१.४.१।

२. ऋग्वेदीयनासदीयसूक्तम्-१०.१२९.२।

वेदव्यासेनापि श्रीमद्भागवते गजेन्द्रमुखेन परमेशस्तुतौ निर्दिष्टम्—

कालेन पञ्चत्वमितेषु कृत्स्नशो
लोकेषु पालेषु च सर्वहेतुषु।
तमः तदासीद् गहनं गभीरं
यस्तस्य पारेऽभिविराजते विभुः[1]॥

प्रलयदशायामिदं दृश्यमानं जगत् तमसाच्छादितं तमसि विलीनं वा अप्रकेतं सलिलमिवासीत्। मन्त्रे सलिलमित्यत्र लुप्तोपममवगन्तव्यम्—यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न विज्ञेयमिति भावः। आसमन्तात् भवतीति आभु=जगत् यदा प्रलयावस्थायां तुच्छेन तुच्छकल्पनेन सदसद् विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्। पुनः सृष्टिदशायां तपसः महिम्ना जगज्जायत इति[2]। यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः (मु.उप. १.१.९) इत्युक्तेः परमेश्वरादेव पुनः जगदुत्पद्यत इत्यर्थः।

सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः जगत् सिसृक्षा सम्यगजायत्, सर्वप्राण्यन्तःकरणेषु प्रथमं रेतो यदासीत् इत्यनेन प्रथममतीते कल्पे प्राणिभिः कृतं यत्पुण्यात्मकं कर्म तदेव भाविनः प्रपञ्चस्य बीजभूतं कारणमासीदित्युच्यते। अत एव फलप्रदस्य कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा जायते, जातायाञ्च तस्यां स्रष्टव्यं पर्यालोच्य सर्वमिदं जगत्सृजति, तथैव श्रुतौ समाम्नातं दृश्यते, तद्यथा—'सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत त तपस्तप्त्वेदं सर्वमसृजत यदिदं किञ्च' (तै.आर. ८.६) अपि च सर्वस्य जगतो हेतुभूतं तत् प्राण्यनुष्ठितं कर्मसमूहं कवयो योगिनो स्वहृदये बुद्ध्या विचार्य निरविन्दन्—अजानन्[3]।

पुनः मायासहितः परमेश्वरः 'तत्सृष्ट्वा तदेवानुप्राविशत्'[4] इति श्रुत्या सूर्यरश्मिसमानं सर्वजगदिदमति शैघ्र्येण सृष्ट्वा तत्र स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपापन्नं विश्वमजायत्। तत्र अतिशीघ्रेण आविर्भूते विश्वे

---

१. श्रीमद्भागवते ८.३.५।

२. ऋग्वेदीयनासदीयसूक्तम् १०.१२९.३।

३. तत्रैव, १०.१२९.४;    ४. तै.आ. ८.६।

ब्रह्माण्डदेहे क्रमस्य दुर्लक्षणत्वात् अधस्तात् उपरिष्टात् तिरश्चीनो मध्यमे वा स्थाने कुत्र प्रथमं सर्जनमिति न विज्ञायते, तत्रो जगति रेतोधा = भोक्तार: महिमान: भोग्याश्च केचन जीवा: आसन् तत्र भोक्तृभोग्ययोर्मध्ये स्वधा-भोग्यप्रपञ्चोऽवस्तात् अवर: प्रयति=भोक्तृप्रपञ्च: परस्तात् उत्कृष्ट आसीत्[१]। एवमुक्तप्रकारेण भोक्तृभोग्यादिरूपेण विविधरूपेण जायमाना इयं दृश्यमाना सृष्टि: कुत: सञ्जाता इति विषये क: पुरुषो याथातथ्येन जानाति, को वा वक्तुं शक्नोति? इति प्रश्न: समुदेति, यतो हि सर्वज्ञा: देवा अपि वियदादि-भूतसृष्टे: पश्चात् उत्पन्ना: अत: तेऽपि नैव ज्ञातुं प्रभवन्ति तद्व्यतिरिक्त: को नाम मनुष्यादि: जगत्कारणं ज्ञातुं शक्ष्यति, अत्र वेदव्यासेनोच्यते—'न यस्य देवा ऋषय: पदं विदु: जन्तु: पुन: कोऽर्हति गन्तुमिरितुम्'[२] इति।

इयं पुरोदृश्यमाना सृष्टि: यस्मात् परमात्मन: सकासात् जाता तं परमात्मानं को वेदितुं शक्नोति, तस्मादेव परमात्मन: उपादानभूतात् गिरि-नदी-समुद्रादिरूपेण विविधा सृष्टि: सञ्जाता स एव धारयत्येनां सृष्टिं, को? नाम अन्यो धर्तुं शक्नुयादिति, अथवा अस्य भूतभौतिकात्मकस्य जगतो योऽध्यक्ष: परमेश्वर: परमोत्कृष्टे आकाशवन्निर्मले सत्यभूते स्वप्रकाशे तिष्ठति, सोऽपि जानाति नेति क: ज्ञातुं प्रभविष्यति, एतदपि ईश्वरादतिरिक्त: को नामान्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं ज्ञातुं धारयितुं पालयितुं च समर्थ नान्य इत्यर्थ:[३]।

## दार्शनिकसूक्तानां लोकोपकारकत्त्वम्

यथोक्तानि सूक्तानि ऋग्वेदे येन क्रमेण समाम्नातानि, तस्मिन् क्रम एव लोकोपकारकत्वं द्रष्टुं शक्यते, तद्यथा पुरुषसूक्तेऽनिर्वाच्यं परब्रह्म एव 'सहस्रशीर्षा पुरुष'[४] इत्यादिना मन्त्रेण विराट् पुरुष: व्यपदिश्यते, तदेव श्रीमद्भगवद्गीतायां 'अनेकबाहूदरवक्त्रनेत्रम् पश्यामि त्वां सर्वतोऽनन्तरूपम्' इत्यादिना विस्पष्टं जायते। विभिन्नेषु पुरेषु भोगायतनशरीरेषु शयनत्वादेव पुरुष

१. ऋग्वेदीयनासदीयसूक्तम् १०.१२९.५।

२. श्रीमद्भागवते ८.३.६।

३. ऋग्वेदीयनासदीयसूक्तम् १०.१२९.६-७; ४. ऋग्वेद, पु.सू.।

उच्यते, तस्मादेव आदिपुरुषात् सूर्यचन्द्रादीनां ब्राह्मणादिमनुष्याणां गवादि-पशूनाञ्चोत्पत्तिः प्रतिपादिता देवास्तमेवादिपुरुषं यज्ञस्य हविर्द्रव्यं कल्पयित्वा सर्वतः प्रथमं तस्यैवादिपुरुषस्य यजनं पूजनं कृतवन्तः, तदेव यजनं धर्मपदेन व्यपदिष्टः, अत एव 'यागादिरेव धर्मः' इति लोकैरवगम्यते।

पुनः प्रजापतिसूक्ते स एव विराट् पुरुषः प्रजापतिरूपेण व्यपदिष्टः, सर्वेभ्यो भूतसर्गेभ्य एक एव स प्रथममुत्पन्नः, तस्मादेव सर्वा सृष्टिः सञ्जाता, स एव सर्वान् लोकान् देवतिर्यङ्मनुष्यान् जनयामास, तस्मै एकस्मै प्रजापतये हविः प्रदानं कृत्वा यागरूपो धर्मः लोकैरवगम्यते। पुनः वाक्सूक्ते तस्यैवादिपुरुषस्य आद्याशक्तिरेव वाक्रूपेण व्यपदिश्यते, सा एव सर्वमेव स्थावर-जङ्गमात्मकं जगत् धारयति, तथा हविष्मते यजमानाय हविर्द्रव्यं सोमं धारयति—अत एव सा यज्ञियानां प्रथमा मुख्या विद्यते, तामेव लोकाः पराशक्तिरूपेण अर्चन्ति पूजयन्ति नमन्ति च।

पुनः नासदीयसूक्ते स एवादिपुरुषः 'आनीदवातं स्वधया तदेकम्' इति श्रुत्या सर्वनामतत्पदेन व्यपदिष्टः। अत्रैव लोकानां महानुपकारः सन्दृश्यते, तत्पदं सर्वनामपदं भवति, अत एव पूर्वपरामर्शकं बुद्धिस्थपरामर्शकं वा जायते। पूर्वपरामर्शकत्वात् तत्पदेन तदेवैकः आदिपुरुषः गृह्यते, बुद्धिस्थपरामर्शकत्वात् येन-केनापि नाम्ना जगत्कारणात्मना कश्चिदेक एव स्वेष्टदेवः परिभाषितुं ग्रहीतुं च शक्यते, स स्वजातिकुलसम्प्रदायानुरोधेन विभिन्नोऽपि तत्त्वतः एक एव इति लोकैरवगन्तुं शक्यते। तदेव पुष्पदन्ताचार्येणोच्यते—

रुचीनां वैचित्र्यात् ऋजुकुटिलनानापथजुषाम्।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव[१]॥

तदेवैकमेव जगत्कारणं व्यपदेष्टुं विभिन्नाः श्रुतयः सङ्गच्छन्ते तद्यथा—

एकं सद् विप्रा बहुधा वदन्ति, अग्नि यमं मातरिश्वानमाहुः[२]।

एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे[३]।

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति[४]।

---

१. शिवमहिम्नःस्तोत्रे, पुष्पदन्ताचार्यः; २. ऋ.सं. १०.१६४.६।
३. तत्रैव, १०.११४.४; ४. तत्रैव, १०.११४.५।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः[१]।।

इत्यादिवचनैः स आदिदेव एकैवास्ति, तदेकस्य क्वचित् पुरुषरूपेण क्वचित् प्रजापतिरूपेण क्वचित् वाग्रूपेण क्वचिच्च तत्त्वरूपेण प्रतिपादयतां दार्शनिकसूक्तानां महान् लोकोपकार इति दिक्।



१. शुक्लयजुर्वेदे ३२.१।

# अथर्ववेदस्थभैषज्यविज्ञानविमर्शः

**पण्डितश्रीरवीन्द्रनाथभट्टाचार्यः**
कलिकाताविश्वविद्यालयीयसंस्कृतविभागोपाचार्यः



भैषज्यपदं भैषजशब्दात् स्वार्थे ष्यञ्-प्रत्यये कृते सति निष्पद्यते। 'भैषज्यं भैषजं चायुर्द्रव्यमगदमौषधम्' इति वैद्यकरत्नमालोक्त्या ज्ञायते यद् भैषज्यं भेषजमित्युभयं पर्यायवाचकम्। भैषजपदस्य व्युत्पत्तिः द्विविधा भवितुमर्हति। भिषजो वैद्यस्तस्येदमित्यर्थे अण्प्रत्ययेन प्रथमा व्युत्पत्तिः। अनया व्युत्पत्त्या ज्ञायते यद् वैद्यसम्बद्धाः क्रियाः पदार्थाश्च भैषज्यं भैषजं चेत्यभिधीयन्ते। द्वितीया व्युत्पत्तिः भेषो रोगस्तं जयतीति। रोगस्याभिभवोपायः भैषजमित्यस्यार्थः। अत्र प्रसङ्गतः भिषक्शब्दोऽपि विचारयितुं युज्यते। बिभेति रोगो यस्मादिति भिषगित्येवं व्युत्पत्तिः। भीधातोः[1] षुक्-प्रत्यये ह्रस्वे च कृते भिषक्पदं निष्पद्यते। एवं विवेचनेन भैषज्यभैषजपदाभ्यां भिषक्पदेन च जीवनजातस्य रोगशमनोपायस्तत्कर्ता च विवक्षिताविति स्फुटीभवति।

अथर्ववेदे भैषज्यविज्ञानं प्रभूतमुपलभ्यते मूलरूपेण। इदमेवाभिप्रेत्यायुर्वेदस्य प्राचीनाः संहिताकृतः स्वस्याथर्ववैदिकतां प्राकाशयन्[2]। तथा हि चरकोक्तिः—

'तत्र चेत् प्रष्टारः स्युश्चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः'[3]।

तत्र भिषजा पृष्टेनैवं चतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या इति भैषज्यविज्ञानं सर्वप्रथममथर्ववेद एव प्रभूततयोपदिष्टम्। अत एवाथर्ववेदः भिषग्वेद इत्यपरां संज्ञां धारयति। अथर्ववेदे एव[4]—

---

१. पा.धा. १०८४।

२. सुश्रुते (१.१.६) आयुर्वेदोपाङ्गं नाम अथर्ववेदस्य। भावप्रकाशे (१.४८) अथर्वान्तर्गतं सम्यगायुर्वेदतत्त्वं लब्धम्।

३. चरकसं. सूत्रस्थानम्-३०.१०-२१;        ४. अ.वे. ११.६.१४।

यज्ञं ब्रूमो यजमानमृचः सामानि भेषजा।
यजूंषि होत्रा ब्रूमस्ते नो मुञ्चन्त्वंहसः।।

इत्यस्मिन् मन्त्रे भिषग्वेदत्वेन व्यपदिष्टोऽथर्ववेदः। अथर्वाङ्गिरसां वेद इत्यस्त्यथर्ववेदस्यापरं नामधेयम्। इयमपि संज्ञाथर्ववेदस्थं भैषज्यविज्ञानमेव सङ्केतयति। अथर्वशब्दः हिंसार्थकात् थुर्वीधातौ[1] निष्पद्यते। यस्यां भैषज्यप्रक्रियायां कापि हिंसा न सम्भाव्यते साथर्वपदवाच्या। रोगिणः अङ्गेषु सप्तधातुमयो यो रसः प्रवाहितो भवति तमधिकृत्य क्रियमाणा भैषज्यप्रक्रिया चाङ्गिरसी। अयं भावः, यदथर्वपदवाच्यायां भैषज्यप्रक्रियायां रुग्णस्य वपुषः साहाय्येन न कोऽप्युपचारो विधीयते, अपि तु मन्त्राणां तपसश्च शक्त्या रोगो निवार्यते। अतश्चास्यामथर्व-प्रक्रियायां रुग्णो वपुषि प्रतिकूलप्रभावद्वारा (Reaction) न कापि हिंसा (हानिः) सम्भवति। अपरायामाङ्गिरस्यां भैषज्यप्रक्रियायां तु रुग्णस्य शरीरसम्बद्धा एव उपचारा भवन्ति। उभे अपि चिकित्सापद्धती अथर्ववेदे समाविष्टे स्त इति कृत्वास्याथर्वाङ्गिरसां वेद इति व्यपदेशः सार्थकः। पञ्चविंशब्राह्मणे अथर्वभैषज्य-प्रक्रिया दैवौषधवल्लाभकारिणीति समुक्तम्, तथा हि—

'भेषजं वै देवानामाथर्वणो भैषज्यायैऽरिष्टायै' इति[2]।

अथर्ववेदे प्रतिपादितस्य भैषज्यविज्ञानस्य पूर्णं विस्तृतं च विवरणं कौशिकगृह्यसूत्रेऽस्माभिः प्राप्यते। आथर्वणिकेऽस्मिन् गृह्यसूत्रे चतुर्दशाध्यायात्मके भैषज्यविज्ञानमेकस्मिन्नध्याये पृथगेवोपदिष्टम्।

कौशिकगृह्यसूत्रे सूत्रकारेण भैषज्यलक्षणमुक्तम्—लिङ्ग्युपतापो भैषज्यमिति[3]। रोगो हि लिङ्गी लिङ्गेन ज्ञायमानत्वात्। रोगस्य लिङ्गं रोगजनितशरीरविकाराः ज्वरभ्रमिव्यथादयः। तस्य मन्त्रादिवक्ष्यमाणोपचारैः उप = समीपे सङ्गत्य तापः विनाशनं भैषज्यमित्युच्यते। रोगास्ते द्विविधाः—आहारनिमित्ताः, पूर्वजन्मैतज्जन्म-पापनिमित्ताश्च। यद्यप्युभयोरेव लिङ्गान्येकविधान्येव दृश्यन्ते, तथापि यदा आहारादिविकृतिजन्यत्वं नानुभूयते, आहारादिरोगविनाशकायुर्वेदौषधानामुपकारित्वं वा न भवति तदा तस्य रोगस्य पूर्वैहिकान्यतरजन्मकृतपापजनितत्वमनुमीयते। एवंविधे हि रोगजाते कौशिकेन भैषज्यकर्माध्याय उपदिष्टः। यत्र च पिशाच-गन्धर्वादिग्रहणेन पूर्वैहिकान्यतरजन्मपापजन्यव्याधिरपि नानुमातुं शक्यते, तत्रापि

---

१. पा.धा. ५७१; २. प.ब्रा. १३.१०.१०।
३. कौ.गृ. २४.२।

वचनप्रोक्तलक्षणैः व्याध्युपशमः भैषज्यकर्मभिः कर्तव्यः। पापजनितरोगाः आथर्वणिकभैषज्येन आहारादिजनितरोगाश्च आङ्गिरसभैषज्येन पराभवन्तीति स्वाभिमतं कौशिकसूत्रकारः, वचनादन्यदिति सूत्रेण[1] सङ्केतयति।

आयुर्वेदशास्त्रस्य प्राचीनाचार्या अपि आथर्वणिकममुं सिद्धान्तं प्रायशः यथावदेव अङ्ग्यकुर्वन्। एतदर्थं चरकसंहितायाः[2] अधस्तनोंऽशः ध्यातव्यः।

तद् द्विविधं व्यापाश्रयभेदात्, दैवव्यपाश्रयं युक्तिव्यपाश्रयं च। तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमाङ्गल्योपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययन-प्रणिपातगमनादि। युक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः। इति।

## आथर्वणिकौषधिप्रक्रियाः

अथर्वसंहिताया एकादशे काण्डे चतुर्थसूक्ते मन्त्रितम्—

आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत।
ओषधयः प्र जायन्ते यदा त्वं प्राण जिन्वसि[3]।।

एतेन दिगियं प्राप्यते यदथर्ववेदानुसारं भैषज्यार्थं विभिन्ना ओषधयः प्रयुक्ता भवन्ति। ताः प्रयोगदिशा मुख्यतया चतुर्धा विभाजयितुं शक्यन्ते, आथर्वणी, आङ्गिरसी, दैवी, मनुष्यजा चेति। सायणादयो भाष्यकृतः सामान्यरूपेणैव मन्त्रममुमर्थापयन्ति। तथा हि—अथर्वणा ऋषिणा दृष्टा ओषधयः आथर्वणीति पदेन, अङ्गिरसा प्रवर्तिता ओषधयः आङ्गिरसीति पदेन, देवैः सृष्टा ओषधयः दैवीति पदेन, मनुष्यैश्चोत्पादिता ओषधयः मनुष्यजेति पदेन मन्त्रेऽस्मिन्नुक्ता इति तेऽभिप्रयन्ति। परमत्र मन्त्रे विशिष्टेन भावेन भवितव्यमिति वयं मन्यामहे। तथा चास्माकं विमर्शः—

अथर्ववेदोक्तस्य मन्त्रादेः प्रयोगद्वारा रोगं शमयितुं समर्था ओषधिप्रक्रिया आथर्वण्यः। एतासु रुग्णस्य शरीरसंयोगो नापेक्षितः। आङ्गिरस्य ओषधिप्रक्रिया व्याधितस्य शरीरावयवेषु प्रवहमानेन सप्तधातुमयेन रसेन संयुक्ताः सत्यो व्याधिं नाशयन्ति। व्याधिशरीरस्याभ्यन्तरबाह्यसंयोगेनैव एतासां प्रयोगो भवितुमर्हति। याश्चौषधिप्रक्रिया रोगेण प्रत्यक्षमसम्बद्धा अपि रोगकारणभूतस्य दैवस्य दूरदृष्टस्य वा निवारणायोपयुज्यन्ते ता दैव्यः। एवंविधाः प्रक्रिया अथर्ववेदे शान्तिकपौष्टिक-कर्मप्रयोगरूपेणोपवर्णिताः। शान्तिकपौष्टिकविधानप्रयोगेण व्याधितस्य दूरदृष्टं पापं

---

१. कौ.गृ. २४.२; २. विमानस्थानेऽष्टमाध्याये।
३. अ.वे. ११.४.१६।

वा निराक्रियते। एवं हि रोगमुक्तावस्था: साहाय्यम्। दुर्दैवस्य निराकरणादेवेयं दैवीति व्यपदिश्यते।

चतुर्थत्वेनोपदिष्टा ओषधिप्रक्रिया मनुष्यजा। रुग्णस्य क्षिप्रं स्वास्थ्यलाभाय शुश्रूषणम्, सौमनस्यम्, वातावरणशुद्धिरित्यादीनि परमावश्यकानि। सर्वं चैतन्मनुष्यैरेव सम्यग् विधातुं शक्यते। अत एव मनुष्यजात्वेनैतदुपदिष्टम्। अद्यत्वेऽपि चिकित्साशास्त्रिण: सर्वस्यैतस्य शुश्रूषणादे: स्वास्थ्यलाभाय महत्त्वमावश्यकत्वं चोद्घोषयन्ति। एतदर्थं च तै: नर्सिंगनाम्नी (Nursing) चिकित्साशास्त्रान्तर्गता एकाप्रणाली परिचाल्यते। आथर्वणिके भैषज्यविज्ञाने इयमेव प्रणाली मनुष्यजेति पदेन व्यवहृता सबहुमानं स्वीकृता च दृश्यते।

अथर्ववैदिक्यां चिकित्सापद्धतौ युगपदेव औषधीनां प्रकारचतुष्टयस्य प्रकारत्रयस्य प्रकारद्वयस्य वा यथापेक्षं प्रयोगो भवति। अत्र वयं श्वित्रनिर्हरणाय क्रियमाणं भैषज्यप्रयोगमुदाहराम:। एतदर्थं कौशिक: सूत्रयति[1]—'नक्तं जाता सुपर्णो जात इति मन्त्रोक्तं सकृदालोहितं प्रघृष्यालिम्पति' इति। अयं भाव:—यत् श्वित्रनिर्हरणार्थं भृङ्गराजादीनामौषधीनां पेषणं कृत्वा नक्तं जाता[2] सुपर्णो जात[3] इति सूक्तद्वयेन ता अभिमन्त्रयेत्। इयमोषधिक्रियाथर्वणी। ततश्च श्वित्रस्थाने तासामोषधीनां लेपनमाङ्गिरसी क्रिया। 'मरुतान्यपिहित:' (२६.२४) इति कौशिकसूत्रानुसारं दैवौषधिप्रक्रियारूपेण मारुतकर्माणि (वृष्टिकर्माणि) अपि श्वित्रनिवारणाय कार्याणि। यद्यपि नैतानि मारुतकर्माणि भैषज्याध्याये कौशिकेनोपनिबद्धानि, तथापि रोगिण: पूर्वदुरदृष्टक्षयार्थमेतानि विहितानीति ज्ञायते। मनुष्यजौषधिप्रक्रियारूपेणातुरस्य शुश्रूषणादिकं त्वाक्षेपलभ्यम्। एवं हि आथर्वणीराङ्गिरसीति मन्त्रेण अथर्ववेदे ओषधीनां प्रक्रियाचतुष्टयं प्रतिपादितम्, तत्र च रोगस्य बलाबलमवधार्य द्वयोस्तिसृणां सर्वासां वा युगपत्प्रयोग: करणीय इति सुवचम्।

आचार्य: सायणोऽपि रुद्रभाष्यकारमतमुट्टङ्कयन् स्पष्टयति स्वभाष्ये[4] यदथर्वसंहितोक्तानि यानि सूक्तानि आथर्वणिक्यां चिकित्सायां विनियुक्तानि तैराज्यादीनां त्रयोदशद्रव्याणां हवनमुपस्थानं च चिकित्साप्रक्रियया साकं कर्तव्ये। आयुर्वेदे लौकिकेष्वन्येषूपचारेषु चामयदमनार्थं यासामोषधीनामुपयोग: प्रचलितो वर्तते तास्तत्र यथाविधानमुपयुञ्जन्नपि अथर्वसंहितोक्तानां तदामयसम्बन्धिनां मन्त्राणां

---

१. कौ.गृ. २६.२२; २. अ.वे. १.२३।
३. अ.वे. १०.१०१ भाष्ये सायण:; ४. कौ.गृ. २५.१५-१६।

वाचनमाथर्वणी चिकित्सेति कृत्वा कर्तव्यमेवेति कौशिकमतम्। तथा हि सूत्रम्—'ओषधिवनस्पतीनामनूक्तान्यप्रतिषिद्धानि भैषज्यानाम्' (३२.२६) इति। अस्यायं भावो यथैषां रोगाणां प्रशमनार्थं कस्याप्यौषधस्योपदेशो न लभ्यते गृह्यसूत्रेषु, तेषु रोगेषु चिकित्साप्रयोगाणां लौकिकादीनामुपयोगं कुर्वन्नथर्ववेदे मन्त्रानपि सम्बद्धान् पठेत्। एवं हि वै औषधस्य प्रभावो वर्द्धते।

## आथर्वणिकं भैषज्यविज्ञानम्

भारतीयदृष्ट्या कृत्स्नमपि भैषज्यविज्ञानमष्टधा विभक्तं भवति, शल्यशालाक्यकायचिकित्साभूतविद्याकौमारभृत्यागदतन्त्ररसायनतन्त्रवाजीकरणानीति। इदं ह्यष्टाङ्गमप्यायुर्विज्ञानमथर्ववेदे समुपलभ्यते। अथर्ववेदोक्तानि अष्टाङ्गानि विवेचयामः—

१. **शल्यतन्त्रम्**—शल्यतन्त्रं पाश्चात्यचिकित्सायां सर्जरी-(Surgery) पदेन व्यपदिश्यते। मूत्रपुरीषयोर्निरोधे 'विषितं ते वस्तिबिलम्' इत्यादिभिर्मन्त्रैश्चर्मशलाकया लौहशलाकया वा शल्यक्रियायाः अथर्ववेदे समस्ति उल्लेखः'। पशूनां कृमिचिकित्सायामपि शल्यक्रियाप्रयोगः अथर्ववेदे प्राप्यते। 'उपान्नादित्यः क्रिमीन् हन्तु'[1] इत्यादिभिर्मन्त्रैः कृमिस्थानस्य दर्भेण शल्यक्रिया भवति[2]। एवमेवान्या अपि शल्यक्रियाः प्रभूताः समुपदिष्टाः। गण्डमालाभैषज्यप्रसङ्गे उदकरक्षिकामशकादिभिर्जीवैर्दूषितलोहितस्य निस्सारणमपि शल्यतन्त्रभेदत्वेनैवावगन्तव्यम्[3]।

२. **शालाक्यतन्त्रम्**—ग्रीवाया उपरिभागस्यान्तरिकचिकित्सा शालाक्यान्तर्भूता। अथर्ववेदे शिरोरोगनिवृत्तौ नानाविधा उपचाराः समुपलभ्यन्ते। शिरोवेदनाभैषज्ये 'जरायुजः'[4] इत्यादिभिर्मन्त्रैर्नासापुटयोराज्यस्त्रावणं कौशिकेनोल्लिखितम्[5]। 'आवयो अनावयैः'[6] इत्यादिभिर्मन्त्रैरक्षिरोगाणां क्षपणाय सर्षपक्षुपस्य मूलक्षीरलेहोऽक्ष्णोरञ्जनत्वेनोपयुक्तो भवति[7]। एवमेव श्रोत्रस्य नासाया मुखादेश्च रोगाणां भैषज्यमथर्ववेदे भृशं

---

१. अ.वे. १.३.२;
२. कौ.गृ. २७.२३।
३. तत्रैव-३०.१६;
४. अ.वे. १.२१.१।
५. कौ.गृ. २६.८;
६. अ.वे. ६.१३.१।
७. कौ.गृ. ३०.५।

वर्णितमास्ते। केशवर्द्धनं, तेषां कृष्णत्वं सौन्दर्यञ्च, खल्वाटानां चिकित्सितमपि च औषधनिर्देशमथर्वसंहितायामुपदिष्टम्।

३. **कायचिकित्सा**—कायचिकित्सान्तर्गताः शरीरान्तःसम्बन्धिनो रोगा ज्वरयक्ष्मपक्षाघातस्रावजलोदरोदरशूलवातपित्तकफादयो नैकविधाः। कायचिकित्साया उपेदश आथर्वणिके भैषज्ये सर्वाधिकं प्रभूततया च प्राप्यते। ज्वरस्यास्त्यथर्ववेदे तक्मन्निति पदाभिधेयत्वम्। ज्वरस्य प्रभेदा भिन्नेषु ज्वरेषु औषधानि क्वथितान्युपचाराश्च वर्णिताः। यक्ष्मणः क्षेत्रियराजयक्ष्मादयो भेदा उपचाराश्चोपदिष्टाः। रक्तस्रावनिरोधाय पृश्निपर्ण्याः लेपनम्[१]। मूत्रपुरीषस्रावनिरोधनाय च फाण्टपायनं विहितम्[२]। पक्षाघातभैषज्ये चक्रमृत्तिकया मर्द्दनं धूपनं चोक्तम्[३]। जलोदरोपचारे उदश्विति (अर्द्धमिश्रिते मथिते च दधनि) मधुदुग्धयोरन्यतरम्मिश्रयित्वा पायनमुपपादितम्[४]। श्लेष्मवात-पित्तविकृतिषु मध्वाज्यतैलमांसादीनां भक्षणमभिदिष्टम्[५]। अन्यदपि कुष्ठहृद्रोगपाण्डूदरशूलतृषितत्वादीनां रोगाणां भैषज्यं कायचिकित्सित-त्वेनाथर्ववेदे वर्णितमस्ति। विस्तरे क्रियमाणे पृथगेवैकस्यानुसन्धान-प्रबन्धस्य निबन्धनं भवितुमर्हतीति दिक्।

४. **भूतविद्याः**—यक्षपिशाचासुरनागादिदुष्टसमाविष्टचित्तानामुन्मत्तानां च व्यक्तीनां चिकित्सा भूतविद्यया भवति। इयमप्यथर्ववेदे प्राप्यते। भयभीतः पुष्पमणिबन्धनेन प्रकृतिस्थः कार्यः[६]। सर्वौषधिलेपन-मप्येतदर्थं भवति[७]। एवमेवान्येऽपि प्रयोगाः।

५. **कौमारभृत्यम्**—बालरोगाणां चिकित्सा कौमारभृत्यपदेन व्यपदिश्यते। स्त्रीरोगाः प्रसूतितन्त्राण्यपि कौमारभृत्य एवान्तर्भवन्ति। बालरोगाणां निवृत्तये 'यस्ते स्तनः' इत्यृचा स्तन्यदानमुपदिष्टम्[८]। बालकृमि-निवारणार्थं बालकस्य नवनीतप्राशनम्, तप्तमुसलेन च तालुप्रतपनमुक्तम्[९]। स्त्रीरोगभैषज्यानि प्रसूतितन्त्राणि चाथर्ववेदे

---

१. कौ.गृ. २६.३६;
२. तत्रैव-२५.१८।
३. तत्रैव-३१.१९;
४. तत्रैव-३१.२३-२५।
५. तत्रैव-२६.१;
६. तत्रैव-२८.७।
७. तत्रैव-२६.२९;
८. तत्रैव-३१.१।
९. तत्रैव-२९.२२।

भृशमुपदिष्टानि। तत्र हि विशेषतो गर्भस्रावनिवारणम्, गर्भसन्धारणम्, सुखप्रसवश्चेत्यादिकं वर्णितम्।

६. **अगदतन्त्रम्**—विषतन्त्रस्यैवापरपर्यायमगदतन्त्रम्, विविधेभ्यो विषयुक्तेभ्यो जीवेभ्यस्त्राणार्थं विषप्रतीकारार्थं चानुष्ठितं चिकित्सितमगदतन्त्रान्तर्गतम्। अथर्ववेदे स्कन्दनामकस्य विषविशेषस्य निवृत्त्यै 'वारिदं वारयते' इत्यादिभिर्मन्त्रैरभिमन्त्रितस्य जलस्य विषग्रस्तार्थं पायनमुपदिष्टम्[१]। मलद्वारेण विषनिर्हरणाय मदन-(धत्तूर) फलानां भक्षणमपि निर्दिष्टम्[२]। हरिद्रया साकमाज्यं पाययित्वापि विषस्योपचार उक्तः। दष्टस्य शरीरावयवस्य वस्त्रेण बन्धनं विषग्रस्तस्य शिक्षाया बन्धनमपि विषोपचारेषु विहितम्[३]। दष्टावयवं तृणज्वालया प्रताप्यापि विषं निर्गमयेत्। गरलप्रभावस्य निराकृतये मधुमक्षिकाजालकं भक्षयेदित्यप्युल्लिखितम्[४]। एवं हि विषनिर्हरणे चिकित्सायां च बहुविधा उपाया अथर्ववेदेन ज्ञाप्यन्ते।

७. **रसायनतन्त्रम्**—अथर्वसंहितायां रसायनतन्त्रसम्बन्धिनो मन्त्रा न भूयिष्ठाः। परन्तु पुष्टिकर्मसु केषुचित्सु अन्तर्भुक्ताः धातुनिर्माणस्योपयोगस्य च प्रक्रियाः सङ्केतेनोपलभ्यन्ते। अथर्ववेदे हिरण्यमणिधारणेन आयुषो वर्चसश्च वृद्धिरभिहिता[५]। एवमेव लौहरजतस्वर्णसम्मिश्रणेन निर्मितो नवशालाकमणिः सन्धारणात् प्राणशक्तिवर्द्धकः[६]। सीसाख्यस्य धातुविशेषस्य प्रशंसनं तु एकस्मिन् सम्पूर्णे सूक्ते कृतम्[७]। सीसाख्यधातुंप्रयोगद्वारा प्रभूतानाम् अपि शत्रूणां पराजयो निर्दिष्टः। एवं ह्यथर्ववेदे रसायनतन्त्रस्यापि प्रतिपादनमस्ति। अत एव च डॉ.पी.सी. रायमहोदयः स्वरचिते 'A History of Hindu Chemistry' इत्याख्ये ग्रन्थे रसायनशास्त्रमथर्ववेदादुद्भूतमिति तद्गौरवं स्वीकरोति[८]।

८. **वाजीकरणम्**—वीर्यशक्त्यादेः प्राप्त्यर्थमभिवर्द्धनार्थं च विहिता चिकित्साप्रणाली वाजीकरणान्तर्गता। शक्तिविरहितेभ्यः शक्तिप्रदानमेवास्या महदुद्देश्यम्। वाजीकरणसम्बद्धा अपि मन्त्रा अथर्ववेदे

---

१. कौ.गृ. २६.८;
२. तत्रैव-२६.४।
३. तत्रैव-२९.२-४;
४. तत्रैव-२९.२८।
५. अ.वे. १९.२६.३;
६. तत्रैव-५.२८.१।
७. तत्रैव-१.१३.१;
८. Vol. II, p. 6-7।

दृश्यन्ते। वीर्यहीनत्वं कौशिकेन ग्राम्यव्याधिनाम्ना समुल्लिखितम्। ग्राम्यव्याधिनिवृत्तये 'मुञ्चामित्या'[१] इत्यादिभिर्मन्त्रैर्मत्स्यौदनभक्षणस्य विशिष्टजलेन स्नानस्य च विधानं कौशिकेनोपदिष्टम्[२]। इन्द्रियपुष्ट्यर्थं सर्वसुरभिचूर्णानुलेपनं 'निर्दुरर्मण्य'[३] इत्यादिमन्त्रैः करणीयम्। स्त्रीणां वन्ध्यात्वहरणचिकित्सापि वाजीकरणान्तर्भूता। स्त्रीविषयकाण्येवंविधानि भैषज्यान्यप्यथर्ववेदस्य नैकेषु सूक्तेषु वर्तन्ते।

उपरितनविवेचनेनेदं स्फुटं भवति यद् भैषज्यविज्ञानस्य सर्वाण्यप्यङ्गानि अथर्ववेदे समुल्लिखितानि दृश्यन्ते। चिकित्सापद्धतिश्चाथर्ववेदीया सर्वाङ्गपूर्णा उन्नतरूपा च। रोगाणां विविधानां प्रशमनाय अजशृङ्गी, अपामार्गः, अरुन्धती, आञ्जनम्, उदुम्बरः, उपजीका, अतावरी, कुष्ठम्, गुग्गुलुः, चीपदुः, जंगिठः, दर्भाः, नितन्ती, पाटा, पिप्पली, पृश्निपर्णी, मधुला, रेवती, रोहणी, लाक्षा, विषाणका, शतावरी, सदम्पुष्पा, सहस्रपर्णी, सोम इत्याद्या उपयोगिन्य ओषधयोऽथर्ववेदे निर्दिष्टाः। स्वास्थ्यलाभार्थं च अस्तृतः, जंगिडः, दर्भः, पर्णः, वरणः, शंखः, शतवारः, त्रिवृत्, अर्कः, परिहस्यः, दशवृक्ष इत्यादयो मणयोऽपि धारणाय सविधानमथर्ववेदे समुपलक्षिताः।

अद्यत्वेऽथर्ववेदोक्तवनस्पत्योषधिमण्यादयः केन रूपेणोपलब्धाः, अथर्ववेदोक्तप्रक्रियया चैतेषामुपयोगः कियान् लाभकर इत्येवं यदि प्रायोगिकानुसन्धानपुरस्सरं स्फुटं स्याच्चेन्महदुपादेयं भवेत्। विलुप्तायामथर्ववेदीयायां भैषज्यपरम्परायां शोधमाध्यमेन प्राचीनभारतीयचिकित्सापद्धतिस्थानि तथ्यानि नूनमुद्घाटयितुं शक्यन्त इति शम्।

●

---

१. अ.वे. ३.११.१; २. कौ.गृ. २७.३२।
३. अ.वे. १६.२.१।

# कातन्त्रव्याकरणस्य ग्रन्थसम्पदा

**प्रो. जानकीप्रसादद्विवेदः**
शब्दविद्यासङ्कायाध्यक्षचरः
सारनाथस्थ-केन्द्रीयोच्चतिब्बतीशिक्षासंस्थानस्य
वाराणस्याम्



## ऐतिह्य-वैशिष्ट्याभासः

इदं सुविदितमेव विदुषां यद् वाग्देव्याः सम्प्रसादेन शब्दब्रह्मज्ञानपुरस्सरं वाङ्मलस्यापनोदाय, वाचि वाग्मिताया आधानाय, वाचः कामदुघात्वसम्पादनाय, अभ्युदयनिःश्रेयसाधिगमाय च भाग्यश्रिया समेधितैर्जनैर्यत्नेन व्याकरणमधीयते। विविधव्याकरणानां बहुधा श्रवणेनानुशीलनेन च नितान्तमपशब्दप्रयोगाभावः प्रथित एव रामायणे रामलक्ष्मणाभ्यां सह वार्ताप्रसङ्गे भिक्षुरूपधारिणो हनूमतः। उक्तं च—

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपभाषितम्।। (वा.रा. ४.३.२९) इति।

प्रकृतिप्रत्ययविभागपुरस्सरं शब्दज्ञानपरायणा जनाः पङ्क्तिपावनपावना भवन्ति। सम्यग् ज्ञातः सुप्रयुक्तोऽपि शब्दस्तावत्पर्यन्तं न कामधुग् भवति, यावद् व्याकरणशास्त्रविधया स विज्ञातो न भवेत्। अत एवोच्यते—'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितश्च स्वर्गे लोके च कामधुग् भवति' इति।

यस्या वाचोऽन्वाख्यानाय व्याकरणाध्ययनमपेक्ष्यते, सा वाक् पूर्वमासीदखण्डरूपा, तस्याः प्रयोगे देवैरपि बहुविधमसौविध्यमनुभूतम्। तेषां प्रार्थनानुरोधमङ्गीकृत्य वायुदेवस्य साहाय्येनेन्द्रेण सा वाक् सखण्डताम् = प्रकृतिप्रत्ययविभागरूपतामानीतेति श्रूयते तैत्तिरीयसंहितायाम् (६.४.७)। एवं ततः प्रकृतिप्रत्ययमाध्यमेन आदेशागमादिसंस्कारैश्च पदरूपाया वाचो विज्ञानाय यानि बहूनि व्याकरणानि पाणिनितः पूर्वं विरचितानि शाब्दिकैराचार्यैस्तत्र माहेश्वर-माहेन्द्रादीनि प्रायेण पञ्चाशीतिसंख्याकानि परिगण्यन्ते समीक्षकैः। पाणिनितः परमपि प्रणीतानां प्रायेण पञ्चाशद्व्याकरणानां नामधेयान्यद्यत्वे उपलभ्यन्ते। एतेषां मध्येऽष्टकानि बहूनि व्याकरणानि प्रत्याहारात्मिकां शब्दलाघवपक्षधरां सञ्ज्ञादिविधौ कृत्रिमव्यवहारबहुलां दुर्गमशब्दसाधनप्रक्रियात्मिकां च माहेश्वरपरम्परामनुसरन्ति।

परमिदानीं त्रिकं कातन्त्रव्याकरणमेवैकं सुगमायाः संक्षिप्ताया लोकव्यवहार-समादरप्रधानायाश्च माहेन्द्रपरम्परायाः प्रातिनिध्यम् आचरति। एवमपि मन्यते विद्वद्भिर्यत् पाणिनितः पूर्वमाचार्यकाशकृत्स्नप्रणीतस्य व्याकरणस्य यदध्याय-त्रितयात्मकं परिमाणमासीत्, तस्यैव संक्षिप्तं रूपं वर्तते कातन्त्रव्याकरणम्। काशकृत्स्नतन्त्रस्य संक्षिप्तं प्रत्याहारात्मकं नामधेयमपि कातन्त्रमङ्गीक्रियते। शर्ववर्माचार्येण सूत्रैर्यद् ग्रथितं कातन्त्रं यीशवीयप्रथमशताब्द्याम् आन्ध्रदेशाधीश्वरस्य सातवाहनस्य शालिवाहनापरपर्यायस्य समये, तत् पूर्वमपि प्रचलित-मासीदध्ययनादाविति 'वृद्धकातन्त्र-आद्यव्याकरण'-प्रभृतिशब्दैर्व्याख्याकारैरङ्गी-क्रियते।

इदं संक्षिप्तत्वात् कातन्त्रम्, कलापे = मयूरपिच्छे प्रथमसूत्रस्य लिखितत्वात् कालापकम्, कुमारेण = स्वामिकार्त्तिकेयेन प्रवर्तितत्वात् कौमारम्, लघु-परिमाणवशाद् मुष्टिः, शर्ववर्मणा प्रणीतत्वात् शार्ववर्मिकम्, दुर्गसिंहेन वृत्त्यादिव्याख्यानैर्वर्धितत्वाद् दुर्गसिंहीयम्, 'सिद्धो वर्णसमाम्नायः' इति सूत्रेणारब्धत्वाच्च सिद्धव्याकरणमभिधीयते। भारते वङ्ग-उत्कल-कश्मीर-गुर्जर-राजस्थानप्रदेशेषु नेपाल-भूटान-तिब्बत-मङ्गोलिया-श्रीलङ्कादिदेशान्तरेषु चेदं पर्याप्तमध्ययनाध्यापनादिविधौ समादृतमभूत्। दिगम्बरजैनसाधवोऽद्यापि जैनव्याकरणबुद्ध्येदमधीयते प्रयत्नेन। तत्राचार्यश्रीविद्यानन्द-विद्यासागर-श्रुतसागरमहाराजप्रभृतयोऽविस्मरणीयाः सन्ति। बाल्यकाले दलाईलामामहाभागेनापि इदमधीतम्। यत्र यत्रेदमध्ययनादौ प्रचलितं तत्र तत्राचार्यैर्व्याख्याग्रन्था अपि बहवः प्रणीताः, येऽद्यापि भोटाक्षर-वङ्गाक्षर-शारदाक्षर-उत्कलाक्षरादौ सुरक्षिताः सन्ति। कलापसूत्राधारेण सङ्गीतशास्त्रीयव्याकरणं गान्धर्वकलापव्याकरणम्, बालशिक्षा-व्याकरणम्, दुर्गवृत्तिद्वयाश्रयमहाकाव्यम्, कातन्त्रविभ्रमश्चैतादृशा ग्रन्थाः सन्ति, ये केवलं कातन्त्रवाङ्मये एव प्रणीताः, न तु व्याकरणान्तरीयवाङ्मयेषु।

'मोदकं देहि' इति वचनमाश्रित्यात्र सन्धिप्रकरणं पञ्चपादात्मकम्, नामचतुष्टयप्रकरणं षट्पादात्मकम्, आख्यातप्रकरणं चाष्टपादात्मकं प्रथितमास्ते। मूलतः शार्ववर्मिकमध्यायत्रितयात्मकमिदं त्रिकं कातन्त्रमवगन्तव्यम्। जैनेन्द्रम्, संक्षिप्तसारम्, सारस्वतम्, प्रयोगरत्नमालाव्याकरणं चेदमंशतोऽनुसरन्ति, परं सिद्धहेमशब्दानुशासनं कच्चायनपालिव्याकरणं च विविधेषु विषयेषु कातन्त्रानुसारि परिलक्ष्यते। चत्वारिंशद्वर्षपर्यन्तं मयाऽधीतमिदम्। अद्यावधि एकादश-ग्रन्थाः षट्सहस्राधिकपृष्ठेषु, विंशतिर्लेखाश्च शतद्वयपृष्ठेषु प्रकाशिताः। कातन्त्रव्याकरणस्य बृहदितिहासनिरूपणात्मकः 'कातन्त्र-व्याकरण की विजययात्रा' इति ग्रन्थोऽप्युक्तैका-दशग्रन्थेषु भागद्वयात्मकः प्रकाशितोऽस्ति। तदनुसारमत्र कातन्त्रव्याकरणस्य ग्रन्थसम्पदातिसंक्षेपेण प्रस्तूयते—

## सूत्रकारपरिचयः

### १. आचार्यशर्ववर्मा (यीशवीयप्रथमशताब्दी)

आन्ध्रदेशीयमहाराजस्य शालिवाहनापरपर्यायस्य शकसंवत्प्रवर्तकस्य सातवाहनस्य मन्त्री सभापण्डितश्चायं सन्धिनामाख्याताध्यायानामेकोनविंशतिपादेषु पञ्चपञ्चाशदधिकाष्टशतसंख्याकानि (८५५) सूत्राणि प्रणिनाय। मदीयसमीक्षानुसारं पाणिनीयापेक्षया ४४५ सूत्रेषु साम्यम्, २७५ सूत्रेषु लाघवम्, २५ सूत्रेषु गौरवम्, ५५ सूत्रेषूत्कर्षः, एकस्मिन् सूत्रेऽपकर्षः, ३७ सूत्रेषु अन्वर्थता, १७ सूत्रेषु च सरलताऽत्र प्रतिभाति।

### २. कृत्सूत्ररचनाकारो वररुचिः कात्यायनः (प्रथमशताब्दी)

विक्रमादित्यस्य सभापण्डितो वररुचिः षट्पादेषु षट्चत्वारिंशदधिक-पञ्चशतसंख्याकानि (५४६) कृत्-सूत्राणि प्रणीतवान्। वृक्षादिवत् कृत्प्रत्यय-साधितान् शब्दान् रूढानङ्गीकुर्वाणेन शर्ववर्माचार्येण नैव कृतानि कृत्सूत्राणि। 'वृक्षादिवदमी.....कात्यायनेन ते' इति वचने इदं स्पष्टम्।

### ३. कातन्त्रपरिशिष्टसूत्रकारः श्रीपतिदत्तः (नवमशताब्दी)

वङ्गदेशीयेन श्रीपतिदत्तेन 'सन्धि-नाम-कारक-षत्व-णत्व-स्त्रीत्व-समास' इत्येतेषु सप्तप्रकरणेषु ७३० सूत्राणि रचितानि। अत्र तदीया वृत्तिरप्युपलभ्यते। वङ्गाक्षरेषु प्राप्तोऽयं ग्रन्थः पर्याप्तप्रसिद्धिं भजते।

### ४. कातन्त्रोत्तरपरिशिष्टकारो विद्यानन्दः (दशमशताब्दी)

सारस्वतोद्गारावतारकायस्थकुलालङ्कारेण विद्यानन्देन विजयानन्देन वा ग्रन्थोऽयं प्रणीतः। अहमदाबादे हस्तलेखा अस्य प्राप्यन्ते। पाटनहस्तलेखानुसारेण पञ्जिकायाष्टीकात्मकोऽयं ग्रन्थः स्वीक्रियते। एतद्विषयकं वचनमिदमविस्मरणीय-माभाति—

विद्यानन्दाभिधं येन कृतं व्याकरणं स्वकम्।
भाति सर्वोत्तमं स्वल्पसूत्रबह्वर्थसंग्रहम्।। इति।

### ५. कातन्त्रोत्तरपरिशिष्टकारस्त्रिलोचनः (षोडशशताब्दी)

कवीन्द्रत्रिलोचनेन प्रणीतोऽयं ग्रन्थस्तदीयतनयेन कविकण्ठहारेण चर्करीतरहस्यकारिकारम्भे स्मर्यते—'गुरुगुरुणा चोत्तरपरिशिष्टे यदभिहितमविरुद्धम्, इह निखिलव्याकरणसंवादिकौमारव्याकरणरहस्यदीक्षागुरुणा त्रिलोचनकविचन्द्र-महामहोपाध्यायेन कृतोत्तरपरिशिष्टाख्यातप्रकरणे' इत्यादिवचनैः। ग्रन्थोऽयं

नोपलभ्यते साम्प्रतम्। गोपीनाथतर्काचार्येणापि षोडशशताब्द्यां कातन्त्रोत्तरपरिशिष्टं प्रणीतमासीत्।

**६. कातन्त्रच्छन्दःसूत्रकारश्चन्द्रकान्ततर्कालङ्कारः (१९-२० शताब्दी)**

वङ्गदेशीयचन्द्रकान्ततर्कालङ्कारेण वैदिकशब्दसाधनार्थं कातन्त्रीयपद्धत्या ५२१ वैदिकसूत्राणि प्रणीतानि। तत्र स्वोपज्ञवृत्तिरप्युपलभ्यते १८९६ तमे यीशवीयवत्सरे प्रकाशिता वङ्गाक्षरेषु।

**७. वार्त्तिकसूत्रकारा वररुचिप्रभृतय आचार्याः (प्रथमादिशताब्द्याः)**

सर्वप्रथमं वररुचिकात्यायनेन दुर्घटवृत्तौ चैत्रकूटीवृत्तौ च वार्त्तिकानि प्रोक्तानि। तदनन्तरं दुर्गसिंह-दुर्गगुप्तसिंह-त्रिलोचनदास-सुषेणविद्याभूषणादिव्याख्याकारैर्वृत्त्यादिग्रन्थेषु वार्त्तिकवचनानि रचितानि। स्वतन्त्ररूपेण कश्चित् कातन्त्रीय-वार्त्तिकग्रन्थः साम्प्रतं नोपलभ्यते। मया विविधवृत्त्यादिग्रन्थेभ्यः ४१९ वार्त्तिकसूत्राणि संगृहीतानि।

**८. उणादिसूत्रकार आचार्यदुर्गसिंहः (सप्तमशताब्दी)**

कातन्त्रीयोणादिसूत्राणि चतुर्षु संस्करणेषूपनिबद्धानि साम्प्रतमुपलभ्यन्ते— १. देवनागरीसंस्करणम्, २. वङ्गसंस्करणम्, ३. विशिष्टहस्तलेखः, ४. तिब्बती-संस्करणं च। तत्र देवनागरीसंस्करणमेव प्रामाण्यमावहति। अत्र षट् पादाः, ३९९ सूत्राणि च स्वोपज्ञवृत्तियुतानि विलसन्ति। सम्पादितोऽयं ग्रन्थस्तिब्बती-संस्थानसारनाथ-वाराणसीतः प्रकाशितः १९९२ ई. वर्षे।

**९. कातन्त्रविभ्रमसूत्रकारोऽज्ञातनामाचार्यः (अज्ञातसमयः)**

केनचिदाचार्येण पूर्वं कातन्त्रीयविभ्रमसूत्राणि प्रणीतानि, परमद्य तानि नोपलभ्यन्ते। सूत्राधारेण विरचिता विभ्रमकारिका एकविंशतिः, प्रक्षिप्ताश्च दश कारिका इदानीं सन्ति सम्प्राप्ताः। यत्र १५२+५४ = २०६ शब्दसिद्धिविषयः सन्निबद्धः। अत्र व्याख्या अपि काश्चन सन्ति।

**१०. बालशिक्षासूत्रकारठक्कुरसंग्रामसिंहः (१३-१४ शताब्दी)**

राजस्थानीयेन श्रीमालवंशीयक्रूरसिंहात्मजेन ठक्कुरसंग्रामसिंहेन १२७९ तमे यीशवीयाब्दे बालशिक्षाव्याकरणं शार्ववर्मिककातन्त्रानुसारं संक्षेपेण प्रणीतम्। स्वोपज्ञवृत्तिसंवलितोऽयं ग्रन्थो जोधपुरात् १९६८ तमे यीशवीयाब्दे प्रकाशितः। सूत्रकारस्याभिमतमस्ति—यथा सूर्याभावे दीपेन कार्यं क्रियते, तथैव कातन्त्राभावे बालशिक्षाव्याकरणं नूनं भवेत् साधकं शब्दानाम्।

**११. गान्धर्वकलापव्याकरणकारठाकुरशौरीन्द्रमोहनः (१९-२० शताब्दी)**

वङ्गदेशीयराज्ञो हरकुमारस्यात्मजेन शौरीन्द्रमोहनठाकुरेण ६९ कातन्त्रीय-सूत्राधारितानि ९९ सङ्गीतशास्त्रीयसूत्राणि स्वोपज्ञवृत्तिसंवलितानि विरचितानि। वङ्गाक्षरेषु १९०२ तमे यीशवीयाब्दे कलिकातानगरीतः ८६ पृष्ठेषु प्रकाशितोऽयं ग्रन्थो **डॉ. शरच्चन्द्रद्विवेदेन** प्रयत्नेन एशियाटिकसोसायटीकलिकातानगरीतः २००० तमे यीशवीयाब्दे समुपलब्धः। हिन्दी-अनुवाद-विविधोपयोगिटिप्पणीभिः संवर्धितस्यास्य प्रकाशनं डॉ. शरच्चन्द्रस्य सम्पादकत्वे २००७ तमे यीशवीयाब्दे सञ्जातम्। कातन्त्रवाङ्मये चतुर्ण्णामनुपमकार्याणां मध्ये कार्यमिदं प्रथमतया परिगणितुं शक्यते।

विस्तरभिया वृत्तिकारादीनां परिचयः सारण्यां समुपस्थाप्यते—

## सूत्रवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| १. | शर्ववर्मा | स्वोपज्ञवृत्तिः | प्रथमशताब्दी | (रचनाया उल्लेखः प्राप्यते) | '' |
| २. | वररुचिकात्यायनः | दुर्घटवृत्तिः (शार्ववर्मिकसूत्राणाम्) | प्रथमशताब्दी | — | '' |
| | वररुचिकात्यायनः | चैत्रकूटीवृत्तिः (स्वरचितकृत्सूत्राणाम्) | प्रथमशताब्दी | — | '' |
| ३. | शशिदेवः | व्याख्यानप्रक्रिया | षष्ठशताब्दी | '' (देवनागराक्षरेषु मुद्रिता) | |
| ४. | दुर्गसिंहः | सिद्धान्तकौमुदी (दुर्गवृत्तिः) | षष्ठ-सप्तम-शताब्दी | '' (देवनागराक्षरेषु वङ्गाक्षरेषु च मुद्रिता) | |
| | '' | तमादिगणसूत्रवृत्तिः | '' '' | '' (वङ्गाक्षरेषु मुद्रिता) | |
| ५. | उग्रभूतिभट्टः (रुद्रभूतिः) | शिष्यहितावृत्तिः | दशम-एकादश-शताब्दी | '' (शारदाक्षरहस्तलेखेषु देवनागराक्षरेषु मुद्रिता च प्राप्यते) | |
| ६. | उग्रभूतिभट्टः | निपात-स्त्रीप्रत्यय-सूत्रवृत्तिः | '' '' | '' (शारदाक्षरहस्तलेखेषु देवनागराक्षरेषु मुद्रिता च प्राप्यते) | |
| ७. | छुच्छुकभट्टः | कातन्त्रलघुवृत्तिः | दशमशताब्दी | '' (शारदाक्षर-देवनागराक्षर-हस्तलेखेषु प्राप्यते) | |
| ८. | सर्वधरोपाध्यायः | स्याद्यन्तप्रक्रिया | दशमशताब्दी | '' (देवनागराक्षरहस्तलेखेषु प्राप्यते) | |

| | | | | |
|---|---|---|---|---|
| ९. | वर्धमानः | कातन्त्रविस्तरः | द्वादश-शताब्दी | ” (वङ्गाक्षर-देवनागराक्षर-उत्कलाक्षरहस्तलेखेषु प्राप्यते) |
| १०. | भावसेनत्रैविध्यदेवः | कातन्त्ररूपमाला | द्वादश-त्रयोदशशताब्दी | ” (देवनागराक्षरेषु पञ्च संस्करणानि प्राप्यन्ते) |
| ११. | प्रबोधमूर्तिगणिः | दुर्गपदप्रबोधः | त्रयोदश-शताब्दी | ” (हस्तलेखेषु प्राप्यते) |
| १२. | जिनप्रबोधसूरिः | दुर्गपदप्रबोधः | त्रयोदश-शताब्दी | ” (जैन साहित्य का बृहद् इतिहास, भा. ३) |
| १३. | गोल्हणः | चतुष्क-आख्यात-वृत्तिटिप्पणकम् | त्रयोदश-शताब्दी | ” (देवनागराक्षरहस्तलेखेषु प्राप्यते) |
| १४. | गोवर्धनः | चतुष्कवृत्ति-टिप्पणिका | त्रयोदश-शताब्दी? | ” (देवनागराक्षरहस्तलेखे प्राप्यते) |
| १५. | मेरुतुङ्गसूरिः | बालावबोधवृत्तिः | त्रयोदश-शताब्दी? | ” (देवनागराक्षरहस्तलेखेषु प्राप्यते) |
| १६. | जगद्धरभट्टः | कातन्त्रबालबोधिनी | चतुर्दश-शताब्दी | ” (शारदाक्षरहस्तलेखेषु प्राप्यते) |
| १७. | जगद्धरभट्टः | लघुललितवृत्तिः | चतुर्दश-शताब्दी | ” (शारदाक्षरदेवनागराक्षर-हस्तलेखेषु प्राप्यते) |
| १८. | अमरचन्द्रसूरिः | स्यादिसमुच्च-यावचूरिः | चतुर्दश-शताब्दी? | ” (देवनागराक्षरहस्तलेखे प्राप्यते) |
| १९. | पण्डितवररुचिः | कृत्सूत्रवृत्तिः | पञ्चदश-शताब्दीतः पूर्वम् | ” (हस्तलेखेषु प्राप्यते) |
| २०. | रघुनन्दनभट्टाचार्यः | कलापतत्त्वार्णवः कृत्-शिरोमणिर्वा | षोडश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रितः) |
| २१. | शिवरामशर्मा | कृन्मञ्जरी | अज्ञातः | ” (वङ्गाक्षरेषु मुद्रिता) |
| २२. | कुलचन्द्रः | धातुसूत्र-सर्वादिसूत्र-कारकसूत्रवृत्तिः | षोडश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) |
| २३. | रत्नेश्वरचक्रवर्ती | राजादिगणसूत्रवृत्तिः | षोडश-सप्तदशशताब्दी | ” (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रिता) |
| २४. | हरिरामभट्टाचार्यः | व्याख्यासारः | सप्तदश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रितः) |
| २५. | कविकण्ठहारः | चर्करीतरहस्यवृत्तिः | सप्तदश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) |
| २६. | बलदेवः | कालापप्रक्रिया | एकोनविंश-शताब्दी | ” (देवनागराक्षरहस्तलेखेषु प्राप्यते) |

| | | | | | |
|---|---|---|---|---|---|
| २७. | सीतानाथसिद्धान्त-वागीशः | सञ्जीवनीवृत्तिः | एकोनविंश-विंशशताब्दी | " | (वङ्गाक्षरेषु मुद्रिता) |
| २८. | कोकिलगुरुः | कातन्त्रकौमुदी | अज्ञातः | " | (शारदाक्षरहस्तलेखेषु प्राप्यते) |
| २९. | कर्मधरः | कातन्त्रमन्त्रप्रकाशः | अज्ञातः | " | (देवनागराक्षरहस्तलेखेषु प्राप्यते) |
| ३०. | रामदासचक्रवर्ती | कातन्त्रचन्द्रिका | अज्ञातः | " | (D.C. Std. mss.-A.S.B.-Vol. VI, p. 91) |
| ३१. | धनप्रभसूरिः | चतुष्कव्यवहार-ढुण्ढिका | अज्ञातः | " | (देवनागराक्षरहस्तलेखेषु प्राप्यते) |
| ३२. | हरिकलशोपाध्यायः | बालावबोधः | अज्ञातः | " | (देवनागराक्षरहस्तलेखे प्राप्यते) |
| ३३. | धर्मघोषसूरिः | कातन्त्रभूषणम् | अज्ञातः | " | (जैनसाहित्य का बृहद् इतिहास, भा. ५) |
| ३४. | राजशेखरसूरिः | वृत्तित्रयनिबन्धः | अज्ञातः | " | (जैनसाहित्य का बृहद् इतिहास, भा. ५) |
| ३५. | पण्डितरामः | कातन्त्रवाक्यविस्तरः | अज्ञातः | " | (देवनागराक्षरहस्तलेखे प्राप्यते) |
| ३६. | अज्ञातनामा | मुग्धप्रबोधमार्तण्डः | अज्ञातः | " | (देवनागराक्षरहस्तलेखेषु प्राप्यते) |
| ३७. | अज्ञातनामा | कातन्त्रलघुवृत्तिः | अज्ञातः | " | (शारदाक्षरहस्तलेखे प्राप्यते) |
| ३८. | अज्ञातनामा | त्याद्यन्तप्रक्रिया | अज्ञातः | " | (देवनागराक्षरहस्तलेखे प्राप्यते) |

## कातन्त्रपरिशिष्टवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ३९. (१) | श्रीपतिदत्तः | कातन्त्रपरिशिष्टवृत्तिः | नवमशताब्दी | " | (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रिता) |
| ४०. (२) | गोपीनाथः | कातन्त्रपरिशिष्ट-प्रबोधः | षोडश-शताब्दीतः पूर्वम् | " | (वङ्गाक्षरेषु मुद्रितः) |
| ४१. (३) | पुण्डरीकाक्षविद्या-सागरः | कातन्त्रपरिशिष्ट-कारकसूत्रव्याख्या | षोडश-शताब्दी | " | (वङ्गाक्षरेषु मुद्रिता प्राप्यते) |
| ४२. (४) | रामचन्द्रः | कातन्त्रपरिशिष्ट-तत्त्वबोधिनी | सप्तदश-शताब्दीतः परम् | " | (वङ्गाक्षरेषु मुद्रिता) |

## छन्दःसूत्रवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ४३. (१) | चन्द्रकान्त-तर्कालङ्कारः | छन्दःसूत्रप्रक्रिया | एकोनविंश-विंशशताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) | |

## धातुसूत्रवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ४४. (१) | विद्यानन्दः | क्रियाकलापः | नवम-दशम-शताब्दी | ” (देवनागराक्षरहस्तलेखेषु प्राप्यते) | |
| ४५. (२) | दुर्गसिंहः | दशबलकारिका | दशमशताब्दी | ” (देवनागराक्षरहस्तलेखे प्राप्यते) | |
| ४६. (३) | नन्दी | धातुपारायणम् | चतुर्दश-शताब्दी | ” (द्र., राजस्थान में संस्कृत साहित्य की खोज) | |
| ४७. (४) | जिनदेवसूरिः | क्रियाकलापः | पञ्चदश-शताब्दीतः पूर्वम् | ” (देवनागराक्षरहस्तलेखे प्राप्यते) | |
| ४८. (५) | रमानाथचक्रवर्ती | मनोरमा | षोडश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) | |
| ४९. (६) | त्रिलोचनः | धातुपारायणम् | षोडश-शताब्दी? | ” (देवनागराक्षरहस्तलेखे प्राप्यते) | |
| ५०. (७) | गुरुनाथविद्यानिधिः | गणार्थकल्पद्रुमः, शब्दरूपकल्पद्रुमः | एकोनविंश-विंशशताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) | |
| ५१. (८) | रामनन्दनशर्मा | रत्नबोधः | एकोनविंश-विंशशताब्दी | ” (वङ्गाक्षरेषु मुद्रितः) | |

## उणादिसूत्रवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ५२. (१) | दुर्गसिंहः | उणादिसूत्रवृत्तिः | षष्ठ-सप्तम-शताब्दी | ” (वङ्गाक्षर-भोटलिपि-देवनागराक्षरेषु मुद्रिता) | |
| ५३. (२) | सर्वधरोपाध्यायः | उणादिसूत्रवृत्तिः | दशमशताब्दी | (द., व्या.द.इति., पृ. ५७०,५८४) | ” |

## लिङ्गानुशासनवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ५४. (१) | दुर्गसिंहः | लिङ्गानुशासन-कारिकावृत्तिः | षष्ठ-सप्तम-शताब्दी | ” (देवनागराक्षरेषु मुद्रिता) | |

## परिभाषावृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ५५. (१) | दुर्गगुप्तसिंहः | कातन्त्रपरिभाषावृत्तिः | दशमशताब्दी | ,, | (देवनागराक्षरेषु मुद्रिता) |
| ५६. (२) | भावमिश्रः | कातन्त्रपरिभाषावृत्तिः | दशम-शताब्दीतः परम् | ,, | (देवनागराक्षरेषु मुद्रिता) |
| ५७. (३) | कवीन्द्रजयदेवः | परिभाषावृत्तिः | अज्ञातः | ,, | (उत्कलाक्षरहस्तलेखे प्राप्यते) |
| ५८. (४) | मदनः | कातन्त्रवृत्तिपरिभाषा-भाष्यम् | अज्ञातः | ,, | (देवनागराक्षरहस्तलेखे प्राप्यते) |
| ५९. (५) | अज्ञातनामा | बलाबलनिर्णयः | अज्ञातः | ,, | (देवनागराक्षरहस्तलेखेषु प्राप्यते) |

## कातन्त्रविभ्रमवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ६०. (१) | गुणचन्द्रसूरिः | हैमविभ्रमतत्त्व-प्रकाशिका (हैमविभ्रमः) | द्वादश-शताब्दी | ,, | (देवनागराक्षरेषु मुद्रिता) |
| ६१. (२) | जिनप्रभः | कातन्त्रविभ्रमटीका | त्रयोदश-चतुर्दश-शताब्दी | ,, | (देवनागराक्षरहस्तलेखेषु प्राप्यते) |
| ६२. (३) | चारित्रसिंहः | विभ्रमावचूर्णिः | षोडश-शताब्दी | ,, | (देवनागराक्षरेषु मुद्रिता) |
| ६३. (४) | गोपालनाथः | विभ्रमावचूर्णिः | सप्तदशाष्टा-दशशताब्दी | ,, | (देवनागराक्षरहस्तलेखेषु प्राप्यते) |

## बालशिक्षाव्याकरणवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ६४. (१) | ठक्कुरसंग्रामसिंहः | स्वोपज्ञवृत्तिः | त्रयोदश-चतुर्दश-शताब्दी | ,, | (देवनागराक्षरेषु मुद्रिता) |

## गान्धर्वकलापव्याकरणवृत्तिकारपरिचयः

| क्र.सं. | वृत्तिकारः | वृत्तिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| ६५. (१) | शौरीन्द्रमोहनठाकुरः | स्वोपज्ञवृत्तिः | १८४०-१९१४ ई. | ,, | (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रिता) |

## दुर्गवृत्तिटीकाकारपरिचयः

| क्र.सं. | टीकाकारः | टीकाग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
| --- | --- | --- | --- | --- | --- |
| १. | दुर्गगुप्तसिंहः | दुर्गवृत्तिटीका | नवमशताब्दी | ” (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रिता) | |
| | ” ” | कृत्सूत्रवृत्तिटीका | ” ” | ” ” ” | |
| | ” ” | षट्कारककारिका | ” ” | ” ” ” | |
| २. | त्रिलोचनदासः | दुर्गवृत्तिपञ्जिका | एकादश-द्वादश-शताब्दी | ” (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रिता) | |
| | ” ” | कृत्सूत्रवृत्तिपञ्जिका | ” ” | ” ” ” | |
| ३. | गौतमपण्डितः | कालापदीपिका | द्वादश-शताब्दीतः परम् | ” (देवनागराक्षरहस्तलेखेषु प्राप्यते) | |
| ४. | विद्यासागरः | आख्यातमञ्जरी | षोडश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) | |
| | ” ” | कारककातन्त्रप्रदीपः | ” ” | ” ” ” | |
| ५. | रामकिशोरः | सप्तम-अष्टम-मङ्गला | षोडश-शताब्दीतः परम् | ” (वङ्गाक्षरेषु मुद्रिता) | |
| ६. | बिल्वेश्वरः | बिल्वेश्वरटीका | सप्तदश-शताब्दी | ” (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रिता) | |
| ७. | मुनिहर्षः | कातन्त्रदीपकः | अज्ञातः | ” ” ” | |

## कातन्त्रवृत्तिपञ्जिकाटीकाकारपरिचयः

| क्र.सं. | टीकाकारः | टीकाग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
| --- | --- | --- | --- | --- | --- |
| ८. (१) | देसलः | कातन्त्रवृतिपञ्जिका-प्रदीपः | चतुर्दश-पञ्च-दशशताब्दी | ” (देवनागराक्षरहस्तलेखेषु प्राप्यते) | |
| ९. (२) | सुषेणविद्याभूषणः | कलापचन्द्रः कविराजो वा | षोडश-सप्तदश-शताब्दी | ” (वङ्गाक्षरेषु देवनागराक्षरेषु च मुद्रितः) | |
| | ” ” | कृत्सूत्रकलापचन्द्रः | ” ” | ” ” ” | |
| १०. (३) | त्रिविक्रमः | कातन्त्रपञ्जिकोद्द्योतः | द्वादश-शताब्दी | ” (देवनागराक्षरहस्तलेखे प्राप्यते) | |
| ११. (४) | पीताम्बरविद्या-भूषणः | धातुसूत्रीयपञ्जी-पत्रिका | सप्तदश-अष्टादश-शताब्दी | ” (वङ्गाक्षरेषु मुद्रिता) | |

| | | | | | |
|---|---|---|---|---|---|
| १२. (५) | मणिकण्ठभट्टाचार्य: | त्रिलोचनचन्द्रिका | अष्टादश-शताब्दीत: पूर्वम् | " | (देवनागराक्षरहस्तलेखद्वये प्राप्यते) |
| १३. (६) | अन्नदाचरणतर्कचूडामणि: | पञ्जिकानमस्कारपादीयकौमुदी | एकोनविंशशताब्दी | " | (वङ्गाक्षरेषु मुद्रिता) |
| १४. (७) | सीतानाथसिद्धान्तवागीश: | पञ्जिकासञ्जीवनी | एकोनविंश-विंशशताब्दी | " | (वङ्गाक्षरेषु मुद्रिता) |

## कातन्त्रविस्तरटीकाकारपरिचय:

| क्र.सं. | टीकाकार: | टीकाग्रन्थ: | समय: | प्राप्त: | अप्राप्त: |
|---|---|---|---|---|---|
| १५. (१) | पृथ्वीधर: | कातन्त्रविस्तरविवरणम् | अज्ञात: | " | (देवनागराक्षरहस्तलेखे प्राप्यते) |
| १६. (२) | श्रीकृष्ण: | वर्धमानसंग्रह: | अज्ञात: | " | (उत्कलाक्षरहस्तलेखे प्राप्यते) |
| १७. (३) | गोविन्ददास: | वर्धमानसारव्याकरणम् | अज्ञात: | " | (उत्कलाक्षरहस्तलेखे प्राप्यते) |
| १८. (४) | रघुनाथदास: | वर्धमानप्रकाश: | अज्ञात: | " | (उत्कलाक्षरहस्तलेखद्वये प्राप्यते) |
| १९. (५) | वामदेव: | कातन्त्रविस्तरमनोरमा | अज्ञात: | " | (उत्कललिपिहस्तलेखद्वये प्राप्यते) |
| २०. (६) | अज्ञातनामा | कातन्त्रविस्तरप्रक्रिया | अज्ञात: | " | (उत्कलाक्षरहस्तलेखे प्राप्यते) |

## षट्कारककारिकाटीकाकारपरिचय:

| क्र.सं. | टीकाकार: | टीकाग्रन्थ: | समय: | प्राप्त: | अप्राप्त: |
|---|---|---|---|---|---|
| २१. (१) | रभसनन्दी | षट्कारककारिकाटीका | अज्ञात: | " | (वङ्गाक्षरेषु मुद्रिता) |

## कलापचन्द्रटीकाकारपरिचय:

| क्र.सं. | टीकाकार: | टीकाग्रन्थ: | समय: | प्राप्त: | अप्राप्त: |
|---|---|---|---|---|---|
| २२. (१) | पीताम्बरविद्याभूषण: | कलापचन्द्रपत्रिका | सप्तदश-अष्टादश-शताब्दी | " | (वङ्गाक्षरेषु मुद्रिता) |
| २३. (२) | अन्नदाचरणतर्कचूडामणि: | नमस्कारपादीयकौमुदी | एकोनविंशशती? | " | (वङ्गाक्षरेषु मुद्रिता) |
| २४. (३) | सीतानाथसिद्धान्तवागीश: | कलापचन्द्रसंजीवनी | एकोनविंश-विंशशताब्दी | " | (वङ्गाक्षरेषु मुद्रिता) |

## न्यासकारपरिचयः

| क्र.सं. | न्यासकारादयः | न्यासादिग्रन्थः | समयः | प्राप्तः | अप्राप्तः |
|---|---|---|---|---|---|
| २५. (१) | उग्रभूतिभट्टः | शिष्यहितान्यासः | दश-एकादश-शताब्दी | ” | (शारदाक्षरहस्तेलेखेषु देवनागराक्षरेषु मुद्रितश्च प्राप्यते) |
| २६. (२) | राजानकशितिकण्ठः | बालबोधिनीन्यासः | पञ्चदश-शताब्दी | ” | (शारदाक्षरहस्तलेखेषु प्राप्यते) |

## विशिष्टरचनाकारपरिचयः

| | | | | | |
|---|---|---|---|---|---|
| १. | जिनप्रभसूरिः | दुर्गवृत्तिद्वयाश्रय-महाकाव्यम् (श्रेणिकचरितम्) | त्रयोदश-चतुर्दश-शताब्दी | ” | (देवनागराक्षरहस्तलेखे प्राप्यते) |
| २. | रत्नेश्वरसूरिः | कलापव्याकरण-सन्धिगर्भितस्तवः | चतुर्दश-शताब्दी | ” | (देवनागराक्षरहस्तलेखे प्राप्यते) |
| ३. | पुण्डरीकाक्ष-विद्यासागरः | भट्टिकाव्यस्य कलापदीपिका टीका | षोडश-शताब्दी | ” | (Bhattikavya : A Study, p. 27) |
| ४. | श्रीनिवासः | भट्टिकाव्यस्य श्रैनिवासी टीका | अज्ञातः | ” | (Bhattikavya : A Study, p. 32) |

## विशिष्टान्वेषणकार्यपरिचयः

| | | | | | |
|---|---|---|---|---|---|
| १. | Julius Eggling | कलापव्याकरणस्य सम्पादनम् (देवनागरीलिपिः, टिप्पणीषु विविध-ग्रन्थवचनसंग्रहः) | एकोनविंश-शताब्दी | ” | (देवनागराक्षरेषु मुद्रितम्) |
| २. | रोहिणीकान्त-सिद्धान्तवागीश-भट्टाचार्यः | कलापसूत्रम् (वङ्गाक्षरेषु सम्पादनम्, विविध-वृत्तिटीकादिसंग्रहः) | एकोनविंश-विंशशताब्दी | ” | (वङ्गाक्षरेषु मुद्रितम्) |
| ३. | गुरुनाथविद्यानिधि-भट्टाचार्यः | कलापव्याकरणम् (वङ्गाक्षरेषु षड्-ग्रन्थानां सम्पादनं वङ्गभाष्यं च) | एकोनविंश-विंशशताब्दी | ” | (वङ्गाक्षरेषु मुद्रितम्) |
| ४. | सीतानाथसिद्धान्त-वागीशः | कातन्त्रगणमालादि-ग्रन्थचतुष्टयस्य सम्पादनं वङ्गभाष्यं च | एकोनविंश-विंशशताब्दी | ” | (वङ्गाक्षरेषु मुद्रितम्) |

| | | | | | |
|---|---|---|---|---|---|
| ५. | आर्यिकारत्नगणिनी श्रीज्ञानमतीमाता | कातन्त्ररूपमालाया हिन्दीभाषानुवाद: | १९३४ यीशवीयाब्दे जन्म | " | (देवनागराक्षरेषु मुद्रित:) |
| ६. | आचार्य(प्रो.)जानकी-प्रसादद्विवेद: | प्रकाशितकातन्त्रीयैकादशग्रन्थानां सम्पादक:, समीक्षको लेखकश्च। | ८।५।१९४१ तमयीशवीयाब्दे जन्म | " | (देवनागराक्षरेषु सर्वे ग्रन्था मुद्रिता:) |
| ७. | भोटटीकाकाराचार्या: | पञ्चचत्वारिंशट्टीका: | द्वादश-शताब्द्यनन्तरम् | " | (प्रायेण सर्वा भोटाक्षरेषु प्राप्यन्ते) |

## भोटानुवादकारतिब्बतदेशीयाचार्यपरिचय:

| | | | | | |
|---|---|---|---|---|---|
| १. | शान्तिप्रभ: | शिष्याहितावृत्ति: | दशम-एकादश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| २. | वज्रध्वज: | उणादिवृत्ति:, त्याद्यन्तक्रिया-विचारितं च | द्वादश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| ३. | स्थिरमति: | कलापसूत्रम्, शिष्यहितावृत्ति: | द्वादश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| ४. | कीर्तिध्वज: | कलापसूत्रवृत्ति: | द्वादश-त्रयोदशशताब्दी | " | (भोटानुवादो मुद्रित:) |
| ५. | बुतोनरत्नसिद्ध: | त्याद्यन्तक्रियापद-रोहणं धातुकायश्च | चतुर्दश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| ६. | बोधिशेखर: | शिष्यहितावृत्ति:, कलापधातुसूत्रं च | त्रयोदश-चतुर्दश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| ७. | मञ्जुघोषखड्ग: | कलापधातुसूत्रम् | चतुर्दश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| ८. | गगनभद्रो व्योमभद्रो वा | कलापोणादिसूत्रम् | चतुर्दश-शताब्दी | " | (भोटानुवादो मुद्रित:) |
| ९. | धर्मकीर्तिश्रीभद्र: | स्यादिविभक्तिप्रक्रिया | अज्ञात: | " | (भोटानुवादो मुद्रित:) |
| १०. | मतिध्वज: | स्यादिविभक्तिप्रक्रिया | अज्ञात: | " | (भोटानुवादो मुद्रित:) |

## भोटानुवादनिर्देशको भारतीयपण्डित:

| | | | | | |
|---|---|---|---|---|---|
| १. | श्रीमणिक: | उणादिवृत्ति: | द्वादश-शताब्दी | " | (भोटानुवादे मुद्रिता) |

## कार्यसारिणी

| क्र.सं. | आचार्याः | संख्या | ग्रन्थ-संख्या | विवरणम् |
|---|---|---|---|---|
| १. | सूत्रकाराः | ११ तोऽपि अधिकाः | ११ | शर्ववर्म-वररुचि-श्रीपतिदत्तप्रभृतयः। |
| २. | वृत्तिकाराः | ६५ | ७३ | दुर्गसिंह-उग्रभूति-भावसेनप्रभृतयः। |
| ३. | टीका-पञ्जी-न्यासकाराः | २६ | ३१ | दुर्गगुप्तसिंह-त्रिलोचन-सुषेण-राजानकशितिकण्ठप्रभृतयः। |
| ४. | विशिष्टरचनाकाराः | ४ | ४ | महाकाव्यमेकम्, स्तव एकः, भट्टिकाव्यस्य टीकाद्वयं च कलापानुसारि। |
| ५. | विशिष्टान्वेषण-कार्यम् | १२ | २४ | ग्रन्थलेखन-सम्पादन-समीक्षा-अनुवाद-वङ्ग-भाष्यं च संगृहीतम्। |
| ६. | भोटानुवादकाराः | १० | १२ | लोचावापदवाच्यास्तिब्बतदेशीया आचार्याः। |
| ७. | भोटानुवादनिर्देशकः | १ | १ | भारतीयपण्डितः। |
| ८. | भोटभाषायामनुवादः | १० | १२ | भोटदेशीयव्यवस्थायाम् अध्ययनाध्यापन-विधावुपयोगाय। |
| ९. | भोटभाषाटीकाः | ४५ | ४५ | कातन्त्रव्याकरणस्य सरलतया ज्ञानाय रचिताः। |
| १०. | जोगराजः | १ | १ | पादप्रकरणसङ्गतिकारः कश्मीरदेशीयाचार्यः। पञ्चाशत् श्लोकाः। |
| ११. | पाँच सीदी पाटी | १ | ५ | मारवाड़क्षेत्रे प्रचलितानि कातन्त्रसन्धिपादीय-सूत्रविकृतरूपाणि, उज्जैन-वि.वि.हस्तलेखे। |
| १२. | विशेषपरिचया-भाववन्तो ग्रन्था ग्रन्थकाराश्च | ३३ | — | काश्मीरक-सम्प्रदायवित्प्रभृतयस्त्रयस्त्रिंशद्-ग्रन्थकारा नाम्ना निर्दिष्टाः। |
| १३. | एकादश हस्तलेखाः | ११ | — | वनमालिप्रणीतकलापव्याकरणोत्पत्तिप्रस्ताव-प्रभृतयो हस्तलेखा अत्र संगृहीताः। |

●

# वैयाकरणमते शब्दप्रामाण्यविचारः

**डॉ. भगवतशरणशुक्लः**
उपाचार्यः, व्याकरणविभागस्य
संस्कृतविद्याधर्मविज्ञानसङ्काये
काशीहिन्दूविश्वविद्यालये, वाराणस्याम्



अखिलमपि वस्तुजातं सामान्यतः प्रमेयम्। प्रमेयसिद्धिश्च प्रमाणाद् भवतीति कृत्वा सर्वे दार्शनिकाः कानिचित् प्रमाणानि स्वप्रमेयसिद्धयेऽङ्गीकुर्वन्त्येव तत्र 'तद्वति तत्प्रकारकोऽनुभवः प्रमा'प्रमितिकरणं च प्रमाणं कथ्यते नैयायिकप्रभृतिदार्शनिकैः। महाभाष्यकारस्तदनुयायिनश्च अनिर्ज्ञातार्थविशेष्यकं सामान्यविशेषधर्मादिरूपसकलसम्भावितधर्मप्रकारकं ज्ञानं प्रमा तत्करणं प्रमाणमिति प्रमाणसामान्यलक्षणमङ्गीकुर्वन्ति। तथा च भाष्यम्—"मानं हि नाम अनिर्ज्ञातज्ञानार्थमुपादीयते अनिर्ज्ञातमर्थं ज्ञास्यामि इति। तत् समीपे यत्र अत्यन्ताय मिमीते तदुपमानम्"[१]। अत्र प्रदीपकारः—"यथा प्रस्थादि। तेन हि साकल्येन मेयं परिच्छिद्यते" इत्याह। उद्योतकारश्चात्र "अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम्। यथा प्रस्थाद्यज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकं, न तथोपमानम्।" इत्याह। स्थलेऽस्मिन् कैयटः प्रमाणसामान्यलक्षणस्योपमानेऽसत्वात् नोपमानं प्रमाणमित्यपि प्रतिपादितवान्। अत्र साकल्येन इत्यत्र स्वार्थे "चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्"[२] इत्यनेन ष्यञ् प्रत्ययः। तृतीयार्थश्च प्रकारत्वम्। "प्रकृत्यादिभ्य उपसंख्यानम्"[३] इत्यनेन तृतीया विभक्तिः। अनिर्ज्ञातार्थस्य इत्यत्र षष्ठ्यर्थो विशेष्यत्वम्। तेन अनिर्ज्ञातार्थविशेष्यकं सामान्यविशेषधर्मादिरूपसकलसम्भावितधर्मप्रकारकं ज्ञानं प्रमा तत्करणं च प्रमाणमिति पूर्वोक्तलक्षणं सिध्यति।

---

१. उपमानानि सामान्यवचनैः।। (म.भा., २.१.५५)
२. पा.सू., ५.१.२४ इति सूत्रस्थं वार्तिकम्।
३. पा.सू., २.३.१८ इति सूत्रस्थं वार्तिकम्।

तस्मात् सामान्यविशेषधर्मादिरूपसकलसम्भावितधर्मावच्छिन्नाप्रकारतानिरूपितानिर्ज्ञातार्थनिष्ठविशेष्यताकज्ञानकरणत्वं प्रमाणत्वमिति लक्षणं पर्यवस्यति। भाष्यस्थं साकल्येन इति पदम् अबाधितार्थविषयकत्वं गमयति तस्यैवार्थौ सामान्यविशेषधर्मौ इति। सामान्यधर्ममात्रग्रहणे विपर्ययः संशयो वा सम्भवेत् विशेषधर्मग्रहणे तु तद्बाधः। सामान्यज्ञानपूर्विकैवविशेषजिज्ञासा भवतीति विषये नागेशः पस्पशाह्निके "विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्यन्ये"[१] इत्युक्तवान्।

वाक्यपदीयकारोऽपि तथैव प्रमाणलक्षणं दर्शयति—

अनिर्ज्ञातस्य विज्ञानं ये तन्मानमुच्यते।
प्रस्थादिकेन मेयात्मा साकल्येनाभिधीयते ।।
अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते।
साकल्येनापरिज्ञानादुपमानं तदुच्यते ।।[२]

वाक्यपदीयानुसारेण यद्यपि प्रत्यक्षम्, अनुमानं शब्दः अभ्यासः अदृष्टमिति प्रमाणानि स्वीकृतानि। प्रमाणविषये तावत् विचारयन् वाक्यपदीयग्रन्थे भर्तृहरिः—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ।।
परेषामसमाख्येयमभ्यासादेव जायते।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ।।
प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः।
पितृरक्षः पिशाचानां कर्मजा एव सिद्धयः ।।
आविर्भूतप्रकाशानामनुपप्लुतचेतषाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ।।
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ।।

१. म.भा. पस्पशाह्निके "गौरित्यत्रकः शब्दः" इति भाष्ये।
२. वा.प. ३.१४.३५९-६०।

चैतन्यमिव यश्चायमविच्छेदेन वर्त्तते।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते॥"[१]

एताभिः कारिकाभिः प्रत्यक्षम्, अनुमानं, शब्दः अभ्यास अदृष्टम् अर्थात् विशिष्टसिद्धिः पितृरक्षःपिशाचदेवतादीनाम्, एतानि प्रमाणानि दर्शितवान्।

वैयाकरणाः प्रत्यक्षम्, अनुमानम्, शब्दः, अर्थापत्तिः इति चत्वारि प्रमाणानि स्वीकुर्वन्ति। तत्र प्रमाणस्य यल्लक्षणमुक्तं तदनुसारेण एतेषां च चतुर्णामेव प्रमाणत्वं सिध्यति। तत्र प्रत्यक्षं द्विविधं लौकिकमलौकिकं च लौकिकमिन्द्रियार्थ-सन्निकर्षजन्यं तद्भिन्नमलौकिकम्। अलौकिकप्रत्यक्षे एव सिद्धिजन्यप्रत्यक्षस्य योगजन्य-प्रत्यक्षस्य अभ्यासजन्यमण्यौषधिविषयकप्रत्यक्षस्य चान्तर्भावात् पृथक् प्रमाणत्वेन तेषां ग्रहणं न भवति। एतेषां सम्यग् विवेचनमाचार्यरामप्रसादत्रिपाठिनः "पाणिनीयव्याकरणे प्रमाणसमीक्षा" इति स्वकीयग्रन्थे कृतवन्तः।

तत्रेयं जिज्ञासा उदेति यत् पाणिनीयव्याकरणमते के च प्रमेयविषयाः तत्रेदमुच्यते। दर्शने तावत् मुख्यं प्रमेयं परमतत्त्वं ब्रह्मैव पूर्वं भवति "यस्मिन् ज्ञाते सति सर्वं विज्ञातं भवति" इति सिद्धान्तात्। व्याकरणदर्शने तावत् "वाग् वै ब्रह्म,[२] वाग्धि ब्रह्म,[३] वागिति तद् ब्रह्म,[४] सा या सा वाग् ब्रह्मैव, तत्,[५] वाग् ब्रह्म,[६] इत्येवं रूपेण शब्दब्रह्मविषयिणी चर्चा ब्राह्मणग्रन्थेषु उपनिषद्ग्रन्थेषु च सम्यक्तया समागतास्ति। कठोपनिषदपि कथयति—

"सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमिति॥
एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥"[७]

इदमेव वाग् ब्रह्म ओमिति वैयाकरणैः अखण्डवाक्यस्फोटरूपेण स्वीक्रियते। यस्य सश्रद्धस्मरणमादौ वाक्यपदीयग्रन्थेऽनुष्ठितवान् भर्तृहरिः—

---

१. वाक्यपदीयम्, ब्र.का.का. ३४-३८, ४१।
२. ऐतरेय-ब्रा., ६.३; शतपथ-ब्रा., २.१.४.१०, १४.४.१.२३।
३. ऐतरेय-ब्रा., २.१५;　　४. जै.उ., २.९.६।
५. जै.उ., २.१३.२;　　६. गो.पू., २.१०।
७. कठोपनिषद्, १.२.१५-१६।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥[१]

धर्मार्थकाममोक्षेति पुरुषार्थचतुष्टये मोक्ष एव परमपुरुषार्थः। व्याकरणदर्शने च मोक्षः शब्दब्रह्मणा सह जीवस्य सायुज्यरूपो विद्यते। इत्युक्तं च वाक्यपदीये।

"तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञः स ब्रह्मामृतमश्नुते॥"[२]

एवं वाग् ब्रह्म स्फोटात्मकं परम प्रमेयं समुपास्यं विद्यते। अपि च प्रमेयविषये वैयाकरणसिद्धान्तानुसारं भर्तृहरिः कथयति यत्—

अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।
अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः॥
कार्यकारणभावेन योग्यभावेन च स्थिताः।
धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु॥
ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः।
स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्॥" इति[३]

एताभिः कारिकाभिः भर्तृहरिरष्टौ प्रमेयाणि प्रादर्शयत्। अत्र प्रथमप्रमेयत्वेन अपोद्धारपदार्थः प्रकृतिप्रत्ययान्यतरस्य अर्थो गृह्यते। यथा घटादिः। द्वितीयप्रमेयत्वेन स्थितलक्षणोऽर्थो यथा नमस्यति, मुण्डयति इत्यादिप्रकारको वाक्यार्थः, पचतीत्यादिरूपः पदार्थो वा अन्वाख्येयप्रतिपादकभेदाभ्यां द्विप्रकारकौ शब्दौ स्वीक्रियेते। तृतीयप्रमेयत्वेन पदरूपो वाक्यरूपो वा शब्दः अन्वाख्येयः स्वीक्रियते। चतुर्थप्रमेयत्वेन प्रकृतिप्रत्ययान्यतररूपः 'घट स्', 'पच् ति' इत्येवं रूपोऽङ्गीक्रियते। पञ्चमप्रमेयत्वेन कार्यकारणभावरूपः सम्बन्धः स्वीक्रियते। षष्ठप्रमेयत्वेन योग्यताख्यसम्बन्धः स्वीक्रियते। सप्तमप्रमेयत्वेन साधुशब्दप्रयोगेण धर्मोत्पत्ति-

---

१. वा.प.ब्र.का., १.१।

२. वा.प.बु.का., १.१३२।

३. ब्र.का., १.२४-२६। अपोद्ध्रियन्ते वाक्यार्थादिभ्यो विभज्यन्ते इति अपोद्धाराः विभक्ताः पदार्थाः। अत्र पदशब्दः पद्यते गम्यतेऽर्थोऽनेन इति पदम् इति व्युत्पत्त्या यौगिकः। अपोद्धारपदार्थो नाम अत्यन्तसंसृष्टः संसर्गादनुमेयेन परिकल्पितेन रूपेण कृतप्रविवेकः सन् अपोध्रियमाणः। स्थितलक्षणाः पदार्थाः वाक्यार्थाः वा। अन्वाख्येयाः प्रकृतिप्रत्ययादयः।

रूपफलं स्वीक्रियते। अष्टमप्रमेयत्वेन च सर्वविधशब्दप्रयोगेऽर्थबोधः फलमिति स्वीक्रियते। अत्र कार्यकारणभावविषये इदमवधेयं यत् श्रोतृबुद्धिस्थोऽर्थः कार्यं शब्दश्च कारणम्। अन्यस्माद् वक्तृबुद्धिनिवेशिनः कारणभूतात् अर्थात् शब्दः श्रोत्रविषयतामनुगतः प्रतीयते, अतः शब्दं प्रति अर्थोऽपि कारणं भवति। अत एवोक्तं भर्तृहरिणा—

"शब्दः कारणमर्थस्य स हि तेनोपजन्यते।
तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते॥"[१] इति।

शब्दे तावत् प्रकृतिर्द्विविधा, प्रातिपदिकं धातुश्च। प्रातिपदिकात् सुप् प्रत्ययाः स्त्रीप्रत्ययाः तद्धितप्रत्ययाः, केचन धातु-सम्पादकाः क्यच् काम्यच्णिच् क्विप् प्रभृतयः प्रत्ययाश्च विधीयन्ते। धातोश्च तिङ्प्रत्ययाः कृत्प्रत्ययाश्च विधीयन्ते। तेषु कृत्प्रत्ययेषु धातुभ्यो विहितेषु कृत् प्रत्ययान्ता अपि प्रातिपदिकसंज्ञकाः सन्तः सुप्प्रत्ययोद्देश्याः भवन्ति। वैयाकरणमते स्वार्थद्रव्यलिङ्गसंख्याकारकशब्दस्वरूपाणि प्रातिपदिकस्य षड् अर्थाः भवन्ति।[२] तत्र प्रमेयत्वेन प्रातिपदिकार्थविषये पञ्च त्रिकाणि भवन्ति—

(१) प्रवृत्तिनिमित्तम् जात्यादिरूपम्, तदाश्रयो द्रव्यादिः तत्सम्बन्धः समवायो, वैयाकरणमते तादात्म्यम् इति प्रथमं त्रिकम्।

(२) लिङ्गं पुंस्त्वादि, तद्वृत्तिधर्मः पुंस्त्वत्वादिः तत्सम्बन्धः स्वरूपसम्बन्धः इत्येवं द्वितीयं त्रिकम्।

(३) सङ्ख्या एकत्वादिः तद्धर्मः एकत्वत्वादिः तत्सम्बन्धः तादात्म्यमिति तृतीयं त्रिकम्।

(४) कारकं कर्मादि तद्वृत्तिधर्मः कर्मत्वादिः तत्सम्बन्धः स्वरूपमिति चतुर्थं त्रिकम्।

(५) शब्दस्य स्वरूपम् तद्वृत्तिधर्मः शब्दत्वव्याप्यो घटशब्दत्वादिः तत्सम्बन्धस्तादात्म्यमिति पञ्चमं त्रिकम्।

इत्थमेते सङ्कलिता पञ्चदश भवन्ति। एतेषां प्रकारता विशेष्यता संसर्गतारूपा विषयता अपि पञ्चदशसंख्याका समेषां गणनया त्रिंशत् संख्याकाः अर्थाः भवन्ति।

---

१. वाक्यपदीय, ३.३.३२।

२. वैयाकरणभूषणसारनामार्थप्रकरणे।

तत्रापि बाह्यबौद्धभेदाभ्यामेते षष्टिसंख्याकाः भवन्ति। अवयवविशिष्टे द्रव्यरूपे प्रातिपदिकार्थे अवयवाः तत्संयोगरूपाकृतिः, गुणः, क्रिया, इत्येवं चत्वारोऽर्थाः अधिका भासन्ते, निरवयवे तु केवले गुणक्रिये भाषेते। वैयाकरणनये पृथिवी जलं तेजः वायुः आकाशं कालः दिग् आत्म मनः तमः इति दश द्रव्याणि मीमांसकवत् स्वीकृतानि सन्ति। एतेषां द्रव्याणां बोधकानि सूत्राणि क्रमशः एवम्भूतानि सन्ति— सर्वभूमिपृथिवीभ्यामणञौ (५.१.४१) ऋक्पूरब्धूःपथामानक्षे (५.४.७४), अग्नेर्ढक् (४.२.३३), वाय्वृतुपित्रुषसो यत् (४.२.३१), (नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्) दिव औत् (७.१.८४), दिगादिभ्यो यत् (४.३.५४), कालाट्ठञ् (४.३.११), आत्मन्विश्वजनभोगोत्तरपदात् खः (५.१.९), मनसः संज्ञायाम् (६.३.४), अपे क्लेशतमसोः (३.२.५०) इति। भाष्यकारः स्त्रियाम् इति सूत्रे "कस्य तावद् भवानेतं गुणं न्याय्यं मन्यते स्त्रीत्वं नाम? द्रव्यस्य। द्रव्ये च भवतः कः सम्प्रत्ययः।।[1] यदि तावद् गुणसमुदायो द्रव्यं का गतिर्य एते भावाः कृदभिहिताः तद्धिताभिहिताश्च चिकीर्षा गोता इति। अथ मतमेतत् कृदभिहितो भावो द्रव्यवत् भवति इति- स्त्रीत्वमपि स्त्रीत्वेन अभिहितं द्रव्यवद् भविष्यति। इत्येवं भाष्ये द्रव्यं गुणसमुदायो कथितः। एवमेव "तस्य भावस्त्वतलौ" इति सूत्रे "अन्वर्थं खल्वपि निर्वचनं गुणसंद्रावो द्रव्यमिति" इत्येवं द्रव्यलक्षणं चकार भाष्यकारः। प्रदीपकारश्चात्र गुणाः सन्द्रूयन्ते आश्रीयन्ते यस्मिन् तद् द्रव्यम् इति व्युत्पत्तिमाह।[2] तयैव रीत्या गुणाः समुदीयन्ते ज्ञायन्ते आधेयत्वेन अस्मिन् सः गुणसमुदायो द्रव्यमिति गुणाश्रयत्वं द्रव्यमिति लक्षणं सिध्यति भाष्यमतेन। एतच्च द्रव्यम् पारमार्थिकलौकिकभेदेन द्विविधम्। तत्र पारमार्थिकं शब्दब्रह्म एव। लौकिकञ्च पूर्वसङ्कलितमस्ति। एवमेव गुणा अपि लौकिकशास्त्रीयभेदाद् द्विविधाः लौकिकाः रूपरसगन्धस्पर्शप्रभृतयो न्यायशास्त्रोक्ताः। शास्त्रीयाश्च अदेङ्गुणः (१.१.२) इति सूत्रबोधिताः अ, ए, ओ इति त्रयः सन्ति।

एवमेव धातुप्रकृतेरपि बहवोऽर्थाः भवन्ति। ते चार्थाः सन्ति—क्रियात्वं क्रिया, कारकम्, संख्या, कालः इत्येवंरूपाः। अत्र क्रियापदेन फलं व्यापारश्चेत्युभयमपि ग्राह्यम्। एवमेव कारकसंख्याकालविषयाः तद्वृत्तिधर्माः स्वाश्रये सम्बन्धाश्च वाच्यतया ज्ञायन्ते। तथैव शब्दस्य स्वरूपं तद्वृत्तिधर्मः शब्दव्याप्यो भूशब्दत्वादिः तत्सम्बन्धश्चापि वाच्या एव इति सङ्कलनेन अष्टादश (५×३=१५+३ =१८) अर्थाः भवन्ति। एषां प्रकारत्वविशेष्यत्वविषयता अपि तत्संख्याका इति सर्वे

---

१. स्त्रियाम् म.भा., ४.१.३;　　　२. म.भा. ५.१.११९।

षट्त्रिंशत्संख्याकाः भवन्ति। पुनश्च बाह्यबौद्धभेदाभ्यां द्वासप्ततिः प्रमेयाः अर्थाः भवन्ति। इत्येवं प्रमेयविषये सम्यक्तया प्रतिपादितवन्तः आचार्यरामप्रसादत्रिपाठिनः स्वग्रन्थे।[1]

एतेषां प्रमेयाणां सिद्धये यानि चत्वारि प्रमाणानि प्रत्यक्षानुमानशब्दार्थापत्तिरूपाणि वैयाकरणाः स्वीकुर्वन्ति। तेषु शब्दप्रमाणे एव अन्यैः दार्शनिकैः सह बहुषु स्थलेषु मतभेददर्शनात् शब्दप्रमाणविषये एवं विमर्शः आवश्यको भवति।

नैयायिकास्तावत् आप्तवाक्यं शब्दः प्रमाणम् आप्तस्तु यथार्थवक्ता। वाक्यं पदसमूहः। तेन आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाणत्वमिति लक्षणं सिध्यति। अत्र आप्तशब्देन प्रयोगहेतुभूतयथार्थज्ञानवान् व्यक्तिविशेषः एव गृह्यते। ईश्वरश्च परम आप्तः अतस्तेन प्रोक्तः उपदिष्टो वा वेदोऽपि प्रमाणम् भवति। शाब्दबोधरूपकार्ये च पदज्ञानं करणं, पदार्थज्ञानं व्यापारः, वृत्तिज्ञानं च सहकारि भवति। इत्थं वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिः कारणम्, वाक्यार्थज्ञानं शाब्दबोधः फलमिति फलति। वृत्तिश्च पदपदार्थनिरूपितसम्बन्धविशेषः। सा च वृत्तिः शक्तिलक्षणान्यतररूपा आकांक्षा योग्यता सन्निधिः वाक्यार्थज्ञाने च हेतवः सन्ति। वाक्यं च लौकिकवैदिकभेदेन द्विविधम्। तत्र वैदिकश्चेश्वरोक्तत्वात् लौकिकश्चाप्तोक्तत्वात् प्रमाणं भवति। अन्यदप्रमाणं भवति इत्याहुः।

वैयाकरणा अपि "शब्दप्रमाणका वयं, यच्छब्दमाह तदस्माकं प्रमाणम्" इति "वृद्धिरादैच्"[2] इति सूत्रभाष्ये उक्तत्वात् आप्तोपदेशरूपः शब्दः प्रमाणमिति स्वीकुर्वन्ति। यद्यपि नैयायिकरीत्या एतल्लक्षणं साधु वर्तते वेदस्यापि ईश्वरोक्तत्वादाप्तोपदेशत्वमायाति तेषां मते। किन्तु ये चान्ये दार्शनिका; वैयाकरणाश्च सनातनपरम्परासम्पालकाः वेदानपौरुषेयान् मन्यन्ते तेषां मते चोक्तं शब्दप्रमाणलक्षणं न समीचीनं भवति अव्याप्तिदोषग्रस्तत्वात्। अतः आप्तविशिष्टः शब्दः प्रमाणम् वैशिष्ट्यं च स्वोच्चारणविषयत्वस्वाभिमतत्वैतदन्यतरसम्बन्धेन। वेदेषु आप्ताभिमतत्वसत्वादव्याप्तिदोषो न भवति। आप्तो नाम अनुभवेन वस्तुतत्त्वस्य कात्स्न्र्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स इति। मौनिश्लोकादौ लिपौ सङ्केतादावपि ज्ञायमानपदस्याभावात् यन्नैयायिकाः पदज्ञानं करणमाहुस्तत्र युक्तियुक्तं विद्यते।

---

१. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ. ३२४-३४७।

२. म.भा., १.१.१।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"[१]

इति भर्तृहरिवचनात् सर्वप्रत्ययस्य शब्दानुविद्धस्य सत्त्वात् ज्ञातपदं कारणं भवितुमर्हति। अपि च "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।"[२] इति न्यायदर्शनसूत्रे प्रत्यक्षलक्षणे अव्यपदेश्यमिति विशेषणं वदता गौतमेन शब्दविषयकत्वेन प्रत्यक्षस्य शब्दत्वापत्तिरिति वदता वात्स्यायनेन, शब्दविषयकत्वमेव च शाब्दत्वं न तु शब्दजन्यत्वमिति अशब्दोपायेऽनुमेयादौ न शब्दसम्भेदेनार्थाधिगमो भवेदस्ति तु इति वदता वाचस्पतिमिश्रेण च शब्दानुमित्योरपि शब्दभानमङ्गीकृतम्। स्वं रूपं. इति सूत्रे भाष्यकारोऽपि शब्दपूर्वकश्च अर्थसम्प्रत्यय इत्युक्तवान्।[३] अपि च अणुदित्सूत्रेऽपि भाष्यकारः "ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणः शब्दः सम्प्रत्यायको भवति न सम्प्रतीयमानः।"[४] इत्याह। तेन मौनिश्लोकादावपि सूक्ष्मोच्चारणं स्वीकरणीयमेव। किं च जपे मन्त्राणां त्रैस्वर्येणैव ज्ञानमावश्यकं भवति। मन्त्रस्य तत्तत्स्थानेषूच्चदेशाद्युपलभ्यमानत्वरूपतया सूक्ष्ममुच्चारणमावश्यकम्। यतो हि यज्ञकर्मण्यजपन्यूङ्खसामसु (१.२.३४) इति सूत्रेण जपे कर्मणि न्युङ्खे सामनि च त्रैस्वर्येणैव मन्त्राणामुच्चारणं बोधितमस्ति यज्ञकर्मणि च मन्त्राणां पाठे एकश्रुतिः भवति। मानसजपलक्षणं चेत्थं विद्यते—

धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम्।
उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः॥[५]

किञ्च यथा घ्राणेन्द्रियरसनेन्द्रियादिगृहीतस्यैव गन्धस्य मधुररसस्य च सुखादिजनकत्वं न च स्मृतस्य तथैव पदानामपि बोधजनकत्वं श्रुतानाम् उच्चरितानामेव न तु यथाकथञ्चित् प्रतीतानाम् इत्यपि भाष्यकारः प्रतिपादितवान्। अतः अतीतानागतानां पदानां वृत्त्यनाश्रयतया वृत्त्याश्रयत्वेन ज्ञानस्य दुरुपपादत्वम्। फलतः तेषु स्थलेषु सूक्ष्मोच्चारणेन मध्यमानादेन व्यङ्ग्यस्य स्फोटात्मकपदस्य वाचकता तत्र सिध्यत्येव।

---

१. वा.प., .....१२४;
२. न्या.द.सूत्र., १.१.४।
३. म.भा., १.१.६८;
४. म.भा., १.१.६९।
५. नृसिंहपुराणे, ५८.८२।

वैयाकरणा अपि पदनिष्ठवृत्तिज्ञानजन्यपदार्थज्ञानमेव व्यापारः पदप्रत्यक्ष-जन्यत्वे सति पदप्रत्यक्षजन्यशाब्दबोधजनकत्वादिति स्वीकुर्वन्ति।[१]

"हलोऽनन्तराः संयोगः"[२] इति सूत्रे भाष्यकारः "ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्त्तते, तद्यथा ग्रामो दग्धः इति। तद् यः सारण्यके ससीमके सस्थण्डिलके वर्त्तते तमभिसमीक्ष्यैतत् प्रयुज्यते अनन्तराविमौ ग्रामौ इति" इत्याह। एतस्मिन् भाष्यग्रन्थे "अस्त्येव शालासमुदाये वर्त्तते" इति वाक्ये 'अस्ति' इति, वर्तते' इति च द्वे क्रियापदे प्रयुक्ते स्तः। अस्ति-पदेनैव सत्तार्थलाभात् 'वर्त्तते' इति पदं वृत्तिमर्थं बोधयति अत्र वर्त्तते इत्यत्र लडर्थोऽविवक्षितः। अतो वृतु-धातुः प्रकृतिभूतवृत्त्यर्थस्यैव बोधको भवति। तेन ग्रामशब्दस्य शालासमुदाये वृत्तिरस्ति इत्यादिरर्थो निष्पन्नो भवति तस्य। इत्थमेतादृशप्रयोगमाध्यमेन भाष्यकारः शाब्दबोधानुकूलपदार्थज्ञानजनकज्ञानविषयः पदपदार्थयोः सम्बन्धविशेषः वृत्तिः इत्येवं वृत्तिपदं बोधितवान्। अत्र वस्तुतः पदपदार्थसम्बन्ध एव वृत्तिः शाब्दबोधानुकूलेत्यादि उपलक्षणं, न तु विशेषणम् अन्यथा वृत्तित्वग्रहे शाब्दबोधपदार्थज्ञानयोः कार्यकारणभावग्रहः तद्ग्रहे च निरुक्तपदपदार्थसम्बन्धत्व-रूपवृत्तित्वग्रहः इति परस्परापेक्षत्वादन्योऽन्याश्रयदोषोऽत्र दुर्वारः स्यात्। अर्थे वर्त्तते शब्दः यया सम्बन्धव्यक्त्या सा वृत्तिः। वृतु-धातोः करणेऽर्थे "स्त्रियां क्तिन्"[३] इत्यनेन क्तिन्-प्रत्यये सति वृत्तिशब्दो निष्पद्यते। एवमुक्ते सम्बन्धे वृत्तिशब्दस्य पङ्कजशब्दवत् योगरूढिः शक्तिरस्ति।

इत्थमेकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति इति नियमात् प्रकृते पदस्य श्रावणप्रत्यक्षे जाते अर्थनिरूपितवृत्त्याख्यसम्बन्धस्य स्मरणं ततश्च सम्बन्धिनोऽर्थस्य च स्मरणमिति वृत्तिज्ञानस्य कारणता पदार्थोपस्थितौ सिध्यति। अत एव वैयाकरणसिद्धान्तलघुमञ्जूषायां नागेशभट्टः तद्धर्मावच्छिन्नविषयकशाब्द-बुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। वैशिष्ट्यं च ज्ञाने स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य-स्वाश्रयपदविषयकत्वोभयसम्बन्धेन इति कार्यकारणभावमाह।[४]

---

१. पाणिनीयव्याकरणे प्रमा., पृ. २०४।

२. म.भा. १.१.७।

३. पा.सू., ३.३.९४।

४. सिद्धान्तलघुमञ्जूषा शक्तिप्रकरणे।

नैयायिकाश्च वृत्तिर्द्विधा शक्तिर्लक्षणा च। शक्तिस्तावत् अस्मात् पदाद् अयमर्थो बोद्धव्यः इति, इदं पदममुमर्थं बोधयतु इति च ईश्वरेच्छा रूपा, इति प्राचीनाः। इच्छारूपैवेति नवीनाः स्वीकुर्वन्ति। तत्रेच्छायां बोधनिष्ठजन्यतानिरूपित-जनकतावत्वेन विषयो वाचकः, बोधविषयत्वेन च विषयो वाच्यः इत्येव वाचकं पदं वाच्योऽर्थः सम्पद्यते। लक्षणा च शक्यसम्बन्धरूपा। तस्याः बीजं च तात्पर्यानुपपत्तिरेव न त्वन्वयानुपत्तिः काकेभ्यो दधि रक्ष्यतामित्यादौ तस्याः अभावात् लक्षणायाश्च सत्त्वात्। यथा गङ्गायां घोषः इत्यादौ भगीरथ-रथखातावच्छिन्नप्रवाहरूपगङ्गापदार्थे घोषाश्रयस्य बाधात् गङ्गापदस्य स्वशक्यप्रवाहसम्बद्धतटे लक्षणया लक्ष्यार्थस्य तटस्य ज्ञानं भवति। एतेषां मते शब्दानां जात्याकृतिविशिष्टव्यक्तावेव शक्तिः न तु केवलायां जातौ व्यक्तौ वा शक्तिः।[१]

मीमांसका अपि शक्तिं लक्षणां च वृत्तित्वेन स्वीकुर्वन्ति तेषं मते शक्तिश्च वाच्यवाचकभावरूपैव इति "अस्ति तु सम्बन्धः प्रत्याय्यप्रत्यायकत्वलक्षणः, असत्येव सम्बन्धान्तरे स्वभावत एव शब्दोऽर्थस्य प्रत्यायकः, अर्थश्च प्रत्याय्यः इत्ययमेव सम्बन्धो भविष्यति।"[२] इत्येवं शास्त्रदीपिकाग्रन्थेन ज्ञायते। गम्भीरायां नाद्यां घोषः इति वाक्यानुरोधेन ते स्वज्ञाप्यसम्बन्धरूपां लक्षणां स्वीकुर्वन्तिः।

प्राचीनाः वैयाकरणा भर्तृहरिभट्टोजिदीक्षितप्रभृतयः

"इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा"।।

इति कारिकया अर्थबोधजनकतारूपां शक्तिं स्वीकुर्वन्ति। तस्याश्च लक्षणास्थलेऽपि सत्वात् शक्त्यैव निर्वाहे लक्षणा न स्वीकरणीया इति वदन्ति। व्यञ्जनाविषये न कापि चर्चा तैर्विहिता।[३]

नवीनाः नागेशभट्टप्रभृतयो मनीषिणः वृत्तिर्द्विधा शक्तिर्व्यञ्जना च। शक्तिश्च द्विविधाप्रसिद्धा अप्रसिद्धा इति वदन्ति प्रसिद्धा शक्तिश्च शक्तिरेव विद्यते। अप्रसिद्धा शक्तिर्लक्षणारूपा कथितास्ति।

---

१. मुक्तावली शब्दखण्डे।

२. शास्त्रदीपिका, १ पा., पृ. ३५६-५८।

३. वैयाकरणभूषणे शक्तिप्रकरणे।

एतेषां मते वृत्तेः पदपदार्थसम्बन्धत्वात् सम्बन्धलक्षणं यस्मिन् संघटते तदेव शक्तेः स्वरूपं भवति। सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रित इति, द्विष्ठः सम्बन्ध इति च, विशिष्टबुद्धिनियामक इति चाभ्युक्तव्यवहारात् इच्छारूपा बोधजनकतारूपा वा शक्तिः न स्वीकर्तुं शक्यते। न हि विषय इच्छावान् इति व्यवहारः कुत्रापि दृश्यते। यद्यपि बोधजनकता पदे अर्थे चास्ति तथापि पदपदार्थयोः परस्परं सम्बन्धत्वेन न स्वीकर्तुं शक्यते विशिष्टबुद्ध्यदर्शनात्। अतः वाच्यवाचकभावाभिधेऽखण्डोपाधिरूपः स्वरूपसम्बन्धविशेषः शक्तिः स्वीकरणीया स च सम्बन्धः वृत्तिनियामकोऽपि भवति। स्वरूपसम्बन्धस्य वृत्तिनियामकत्वात्। तद्ग्राहकश्च इतरेतराध्यासमूलकं तादात्म्यं तच्च सङ्केतः। पदनिष्ठशक्त्युपकारकत्वात् तस्यापि शक्तिरिति व्यवहारतादर्थ्यात् ताच्छब्द्यम् इति मत्वा भवति किन्तु तस्य सम्बन्धत्वाभावः। भेदाभेदरूपः सः सम्बन्धो नास्ति। योगसूत्रभाष्येऽपि "सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः" इत्येवं रूपेण प्रतिपादितम्।[1] अयं सङ्केतश्च वेदादिग्रन्थपाणिन्यादिस्मार्तविहित एव शक्तिनियामक न त्वाधुनिकजनैर्विहितः इत्यपि भाष्ये प्रदर्शितम्। अतः आधुनिकसङ्केतस्थले "दशम्यामुत्तरे एकादशेऽह्नि द्वादशेऽह्नि वा जातस्य पुत्रस्य पिता नाम कुर्यात्"[2] इति वचनसामर्थ्यात् क्रियमाणनामस्थले लक्षणा। तत्र घटगोविन्दादिगुणादीनामारोपेण तन्मूलकप्रवृत्तिनिमित्तारोपेण च बोधः करणीयः तत्र सम्बन्धश्च स्वशक्तसङ्केतविषयत्वमस्ति। स्वं मुख्यार्थः तत्र शक्तं यद् गोविन्दादि पदं तस्य यः सङ्केतः तद्विषयत्वं मुख्यगोविन्दादिगतगुणारोपिते अमुख्ये गोविन्दादिनामके आगतमिति तस्यापि बोधो जायते। एतदर्थमेव सङ्केतोपयोगः इत्यादि सर्वं लघुमञ्जूषायां प्रदर्शितमस्ति।[3] आचार्यरामप्रसादत्रिपाठिनस्तु स्वकीयशब्दशास्त्रीयवृत्तिविमर्शग्रन्थे तादात्म्यमेव शक्तिरिति स्वीकुर्वन्तः कथयन्ति 'वृद्धिरादैच्' 'अदेङ् गुणः' इत्यादिषु सूत्रेषु शक्तिग्राहकेषु समानविभक्तिकनिर्देशं करोति भगवान् सूत्रकारः यथा नीलो घटः इत्यत्र तादात्म्यसम्बन्धेन नीलविशिष्टो घट इति बोधः तथैवात्रापि तादात्म्यसम्बन्धेन वृद्धिपदविशिष्ट आदैच् इति बोधः। एवञ्च तादात्म्यसम्बन्धस्यैव शक्तित्वं पर्यवसन्नम्। अत्र वृद्धिरादैच् इति सूत्रे भाष्यकारोऽपि ब्रवीति 'द्वयोरेव सामानाधिकरण्यं विशेषणविशेष्ययोर्वा, संज्ञासंज्ञिनोर्वा इति। अत्रैव उद्योतकारः स्पष्टं ब्रूते तादात्म्यमेव शब्दार्थयोः शक्तिः।

१. योगसूत्रभाष्ये विभूतिपादे, सूत्र १७।

२. कात्यायनगृह्यसूत्रे।

३. सिद्धान्तलघुमञ्जूषा शक्तिप्रकरणे।

वाक्यपदीयटीकाकारेण हरिवृषभेणापि "तादात्म्यमेव शब्दार्थयोर्नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनः शब्दार्थबोधने कारणम्" इत्युक्त्या उक्त पक्ष एव पूर्णं समर्थित इत्याहुः।[१] अपि च वाच्यवाचकभावरूपा शक्तिरित्यत्र लक्षणे अन्योऽन्याश्रयदोषोऽपि भवति। यतो हि यदा तादात्म्यं तदा वाच्यवाचकभावः, यदा वाच्यवाचकभावः तदा तादात्म्यमायाति। तत्र चेदुच्यते अनादि तादात्म्यमिति तदा नान्योऽन्याश्रयदोष इति तन्न तन्निवेशे गौरवात्। तादात्म्ये च सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टबुद्धिनियामकत्वरूपं सम्बन्धलक्षणमपि संघटते। स्वसामानाधिकरण्य-स्वाश्रयाश्रयवृत्तित्वान्यतरसम्बन्धेन द्वित्वविशिष्टरूपद्विष्ठस्य तत्र सत्त्वात्। "बुद्ध्या गृहीतार्थप्रतिपादनाय शब्दप्रयोगादर्थः शब्दस्य निमित्तम्, कार्यकारणयोश्चाभेदाध्यवसायात् सोऽयमिति प्रतीयमानं तादात्म्यम्" इत्युक्त्या तद्भिन्नत्वे सति तद्भेदेन प्रतीयमानत्वमेव तादात्म्यं शाब्दिकमते सिद्धान्तितमस्ति।

किन्तु प्रतिपादनमेतत् त्रिपाठिचरणानां युक्तिसङ्गतं न प्रतिभाति। वैयाकरणमतेऽभेदस्य सम्बन्धत्वाभावात्। अपि च तादात्म्यस्य सत्त्वादेव वाच्यवाचकभावरूपशक्तेः सिद्धत्वात् तादात्म्यम् सङ्केतः तद्ग्राहकमेव तिष्ठति न सम्बन्धरूपम्। अत एव पातञ्जलयोगसूत्रभाष्ये "स्थितोऽस्य वाचकस्य वाच्येन सहसम्बन्धः सङ्केतस्तूक्तरूप ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते, अयमस्य पिता, अयमस्य पुत्रः" इति[२] अनेन योगसूत्रभाष्येण तादात्म्यस्य शक्तिनियामकत्वं वाच्यवाचकभावस्य च शक्तित्वं स्पष्टतया प्रतीयते। अपि च स्वसामानाधिकरण्य-स्वाश्रयाश्रयवृत्तित्वैतदन्यतरसम्बन्धेन द्वित्वविशिष्टत्वं द्विष्ठत्वमिति परिष्कृत्य अभेदे सम्बन्धलक्षणं संघट्य नैयायिकरीत्या अभेदे तादात्म्ये वा सम्बन्धत्वं त्रिपाठिचरणाः स्वीकृतवन्तः तदपि न समीचीनम् अनुभवविरोधात्। अनुभवे हि वस्तुद्वयनिरूपिताधेयतावत्त्वमेव द्विष्ठत्वं तच्च भेदाभेदरूपे तादात्म्ये नास्ति। अतः सम्बन्धलक्षणमपि तत्र न संघटते। अत एव दर्पणकारप्रभृतयः[३] वैयाकरणभूषणसारटीकाकाराः रत्नप्रभायां सभापतिशर्मोपाध्याया[४] अपि नागेशभट्टमेव समर्पितवन्तः।

तत्र शक्तिग्राहकं च व्याकरणादिकाञ्चानेकविधम्। तच्चेत्थमस्ति—

---

१. शब्दशास्त्रीयवृत्तितिविमर्शः, पृ. १०।

२. योगसूत्र प्रथमपाद २७ सूत्रे भाष्ये।

३. वैयाकरणभूषणसारे शक्तिप्रकरणे।

४. सिद्धान्तलघुमञ्जूषा शक्तिप्रकरणे।

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यशेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।"[१]

अर्थात् अष्टप्रस्थानमिन्द्रचन्द्रकाशकृत्स्नपाणिन्यादिप्रणीतशब्दशास्त्रम् उपमानं (सादृश्यज्ञानात्मकं प्रमाणम्) निघण्टुकोशामरसिंहादिविरचितकोशग्रन्थाः, आप्तवाक्यम् (प्रयोगहेतुभूतयथार्थज्ञानिपुरुषोच्चरितवाक्यम्) व्यवहारः (प्रयोज्य-वृद्धमुद्दिश्य उत्तमवृद्धादिकृतः गामानय इत्यादिरूपः चेष्टात्मकः) वाक्यस्य शेषः (प्रकृतवाक्यातिरिक्ते वाक्ये प्रकृतवाक्यार्थबोधोपयोगी पदसमूहोऽर्थवादात्मकः) विवृतिः विवरणम् पर्यायादिकम्, सिद्धपदस्य सान्निध्यम् एते शक्तिग्राहकाः हेतवः कथिताः।

एतेषु शक्तिग्राहकेषु व्याकरणविषये बहुषु स्थलेषु शाब्दिकैः सहान्येषां नैयायिकमीमांसकप्रभृतिदार्शनिकानां मतभेदोऽपि वर्त्तते। येषां चर्चा चिन्तामणौ शब्दखण्डे मुक्तावलीशब्दखण्डे न्यायमञ्जर्यां भाट्टतन्त्ररहस्ये शास्त्रदीपिकादिग्रन्थेषु च कृतास्ति। नैषां नैयायिकमीमांसककृताक्षेपाणां समाधानं वाक्यपदीये, तट्टीकासु च, वैयाकरणभूषणे "बृहद्मञ्जूषालघुमञ्जूषा पाणिनिव्याकरणे प्रमाणसमीक्षा" प्रभृतिग्रन्थेषु विहितमस्ति। अपि चैषा खण्डनमण्डनपरम्परा शास्त्रचिन्तनपोषिका अधुनापि विचारकैः शास्त्रविचारजन्यमोदाय विधीयते।

वैयाकरणाः अपभ्रंशेष्वपि शक्तिं स्वीकुर्वन्ति। शक्तिग्राहकशिरोमणेः व्यवहारस्य उभयत्र तुल्यत्वात्। व्यवहारदर्शनेन हि पूर्वजन्मानुभूतशक्तिस्मरणेन तेषु शक्तिर्निश्चीयते। अत एव बालानां तिरश्चां बोधो जायते। तेषां तदैव शक्तिग्रहः सम्भवो नास्ति। अपभ्रंशेषु साधुशब्दस्मरणात् बोध इति न वक्तुं शक्यते, साधुशब्दमजानतामपि बोधदर्शनात्। तथैव न शक्तिभ्रमाद् बोधः घटत्वकलशत्वादि-विशिष्टरूपार्थनिरूपितायाः घटकलशादिपदवृत्तित्वेन गृहीतायाः शक्तेः भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वात् साधारणधर्मदर्शनाभावेन च गगरी घघरी इत्यादौ भ्रमस्य उत्पत्त्यभाव एवानुभवसिद्धः भ्रमश्च समानरूपके भिन्नवस्तुनि सत्यनवधानादिके जायते। अत एव तत्तद्देशप्रदेशवासिनां शिष्टानामपि तत्तद्बङ्गाङ्गकलिङ्गपञ्चनदमहाराष्ट्र-द्रविणहिन्दीप्रभृतिषु भाषासु जायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं बिना भ्रमत्वयोगकथनमसङ्गतमेव। अत एव अध्ययनरहितानां पामराणां बालानां साधौ अर्थसंशये तदपभ्रंशेन निर्णयः क्रियते। वैदिककालेऽपि अपभ्रंशशब्दैः बोधः क्रियतेस्म इति प्रतिपादितवान् भाष्यकारः

---

१. न्यायसिद्धान्तमुक्तावली शब्दखण्ड।

वाक्यपदीयटीकाकारेण हरिवृषभेणापि "तादात्म्यमेव शब्दार्थयोर्नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनः शब्दार्थबोधने कारणम्" इत्युक्त्या उक्त पक्ष एव पूर्णं समर्थित इत्याहुः।[1] अपि च वाच्यवाचकभावरूपा शक्तिरित्यत्र लक्षणे अन्योऽन्याश्रयदोषोऽपि भवति। यतो हि यदा तादात्म्यं तदा वाच्यवाचकभावः, यदा वाच्यवाचकभावः तदा तादात्म्यमायाति। तत्र चेदुच्यते अनादि तादात्म्यमिति तदा नान्योऽन्याश्रयदोष इति तन्न तन्निवेशे गौरवात्। तादात्म्ये च सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टबुद्धिनियामकत्वरूपं सम्बन्धलक्षणमपि संघटते। स्वसामानाधिकरण्य-स्वाश्रयाश्रयवृत्तित्वान्यतरसम्बन्धेन द्वित्वविशिष्टरूपद्विष्ठस्य तत्र सत्त्वात्। "बुद्ध्या गृहीतार्थप्रतिपादनाय शब्दप्रयोगादर्थः शब्दस्य निमित्तम्, कार्यकारणयोश्चाभेदाध्यवसायात् सोऽयमिति प्रतीयमानं तादात्म्यम्" इत्युक्त्या तद्भिन्नत्वे सति तद्भेदेन प्रतीयमानत्वमेव तादात्म्यं शाब्दिकमते सिद्धान्तितमस्ति।

किन्तु प्रतिपादनमेतत् त्रिपाठिचरणानां युक्तिसङ्गतं न प्रतिभाति। वैयाकरणमतेऽभेदस्य सम्बन्धत्वाभावात्। अपि च तादात्म्यस्य सत्त्वादेव वाच्यवाचकभावरूपशक्तेः सिद्धत्वात् तादात्म्यम् सङ्केतः तद्ग्राहकमेव तिष्ठति न सम्बन्धरूपम्। अत एव पातञ्जलयोगसूत्रभाष्ये "स्थितोऽस्य वाचकस्य वाच्येन सहसम्बन्धः सङ्केतस्तूक्तरूप ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते, अयमस्य पिता, अयमस्य पुत्रः" इति[2] अनेन योगसूत्रभाष्येण तादात्म्यस्य शक्तिनियामकत्वं वाच्यवाचकभावस्य च शक्तित्वं स्पष्टतया प्रतीयते। अपि च स्वसामानाधिकरण्य-स्वाश्रयाश्रयवृत्तित्वैतदन्यतरसम्बन्धेन द्वित्वविशिष्टत्वं द्विष्ठत्वमिति परिष्कृत्य अभेदे सम्बन्धलक्षणं संघट्य नैयायिकरीत्या अभेदे तादात्म्ये वा सम्बन्धत्वं त्रिपाठिचरणाः स्वीकृतवन्तः तदपि न समीचीनम् अनुभवविरोधात्। अनुभवे हि वस्तुद्वयनिरूपिताधेयतावत्वमेव द्विष्ठत्वं तच्च भेदाभेदरूपे तादात्म्ये नास्ति। अतः सम्बन्धलक्षणमपि तत्र न संघटते। अत एव दर्पणकारप्रभृतयः[3] वैयाकरणभूषणसारटीकाकाराः रत्नप्रभायां सभापतिशर्मोपाध्याया[4] अपि नागेशभट्टमेव समर्पितवन्तः।

तत्र शक्तिग्राहकं च व्याकरणादिकाञ्ञानेकविधम्। तच्चेत्थमस्ति—

१. शब्दशास्त्रीयवृत्तितिविमर्शः, पृ. १०।
२. योगसूत्र प्रथमपाद २७ सूत्रे भाष्ये।
३. वैयाकरणभूषणसारे शक्तिप्रकरणे।
४. सिद्धान्तलघुमञ्जूषा शक्तिप्रकरणे।

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यशेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"[१]

अर्थात् अष्टप्रस्थानमिन्द्रचन्द्रकाशकृत्स्नपाणिन्यादिप्रणीतशब्दशास्त्रम् उपमानं (सादृश्यज्ञानात्मकं प्रमाणम्) निघण्टुकोशामरसिंहादिविरचितकोशग्रन्थाः, आप्तवाक्यम् (प्रयोगहेतुभूतयथार्थज्ञानिपुरुषोच्चरितवाक्यम्) व्यवहारः (प्रयोज्य-वृद्धमुद्दिश्य उत्तमवृद्धादिकृतः गामानय इत्यादिरूपः चेष्टात्मकः) वाक्यस्य शेषः (प्रकृतवाक्यातिरिक्ते वाक्ये प्रकृतवाक्यार्थबोधोपयोगी पदसमूहोऽर्थवादात्मकः) विवृतिः विवरणम् पर्यायादिकम्, सिद्धपदस्य सान्निध्यम् एते शक्तिग्राहकाः हेतवः कथिताः।

एतेषु शक्तिग्राहकेषु व्याकरणविषये बहुषु स्थलेषु शाब्दिकैः सहान्येषां नैयायिकमीमांसकप्रभृतिदार्शनिकानां मतभेदोऽपि वर्त्तते। येषां चर्चा चिन्तामणौ शब्दखण्डे मुक्तावलीशब्दखण्डे न्यायमञ्जर्यां भाट्टतन्त्ररहस्ये शास्त्रदीपिकादिग्रन्थेषु च कृतास्ति। नैषां नैयायिकमीमांसककृताक्षेपाणां समाधानं वाक्यपदीये, तट्टीकासु च, वैयाकरणभूषणे "बृहद्मञ्जूषालघुमञ्जूषा पाणिनिव्याकरणे प्रमाणसमीक्षा" प्रभृतिग्रन्थेषु विहितमस्ति। अपि चैषा खण्डनमण्डनपरम्परा शास्त्रचिन्तनपोषिका अधुनापि विचारकैः शास्त्रविचारजन्यमोदाय विधीयते।

वैयाकरणाः अपभ्रंशेष्वपि शक्तिं स्वीकुर्वन्ति। शक्तिग्राहकशिरोमणेः व्यवहारस्य उभयत्र तुल्यत्वात्। व्यवहारदर्शनेन हि पूर्वजन्मानुभूतशक्तिस्मरणेन तेषु शक्तिर्निश्चीयते। अत एव बालानां तिरश्चां बोधो जायते। तेषां तदैव शक्तिग्रहः सम्भवो नास्ति। अपभ्रंशेषु साधुशब्दस्मरणात् बोध इति न वक्तुं शक्यते, साधुशब्दमजानतामपि बोधदर्शनात्। तथैव न शक्तिभ्रमाद् बोधः घटत्वकलशत्वादि-विशिष्टरूपार्थनिरूपितायाः घटकलशादिपदवृत्तित्वेन गृहीतायाः शक्तेः भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वात् साधारणधर्मदर्शनाभावेन च गगरी गघरी इत्यादौ भ्रमस्य उत्पत्त्यभाव एवानुभवसिद्धः भ्रमश्च समानरूपके भिन्नवस्तुनि सत्यनवधानादिके जायते। अत एव तत्तद्देशप्रदेशवासिनां शिष्टानामपि तत्तद्बङ्गाङ्गकलिङ्गपञ्चनदमहाराष्ट्र-द्रविणहिन्दीप्रभृतिषु भाषासु जायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं बिना भ्रमत्वयोगकथनमसङ्गतमेव। अत एव अध्ययनरहितानां पामराणां बालानां साधौ अर्थसंशये तदपभ्रंशेन निर्णयः क्रियते। वैदिककालेऽपि अपभ्रंशशब्दैः बोधः क्रियतेस्म इति प्रतिपादितवान् भाष्यकारः

१. न्यायसिद्धान्तमुक्तावली शब्दखण्ड।

"यर्वास्तर्वाणो नाम ऋषयो बभूवुः" इत्युदाहरणे शब्दानां ज्ञाने धर्मः इति प्रसङ्गे।[१] अपि च सुन्दरकाण्डे बाल्मीकिरामायणेऽपि अपभ्रंशशब्दैः शाब्दबोधस्य प्रमाणमुपलभ्यते सीताहनुमत्वार्तालापप्रसङ्गे—

यदि वाचं वदिष्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥[२]

इत्थमेव महाभाष्यकारः "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इति पस्पशाह्निके "साध्वनुशासनेऽत्र शास्त्रे" इति 'वृद्धिरादैच्'[३] इति सूत्रे कथितवान्। वाक्यपदीये भर्तृहरिरपि "वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" इत्याह शक्तत्वं साधुत्वमिति न सिद्धान्तः,[४] साधुत्वं नाम व्याकरणं व्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठपुण्यजनकतावच्छेदको जातिविशेषः एव। न च शक्तिमत्वात् अर्थवत्वेन अपभ्रंशशब्दानां प्रातिपदिकत्वं साधुष्वेव शास्त्राणि प्रवर्तन्ते नासाधुषु इति शाब्दिकेषु नियमस्य जागरूकत्वात्।

एषा शक्तिः रूढिः, योगः, योगरूढिः, यौगिकरूढिरिति भेदेन चतुर्विधा सर्वसम्मतास्ति। रूढेः मणिनूपुरादीनि, योगस्य पाचकादीनि, योगरूढेः पङ्कजादीनि, यौगिकरूढेश्च मण्डपाश्वगन्धादीनि उदाहरणानि भवन्ति।

आचार्यरामप्रसादत्रिपाठिनः वृद्धिरादैच् सूत्रस्थभाष्यप्रदीपोद्योतग्रन्थप्रमाणेन तादात्म्यसम्बन्धरूपैव पदपदार्थयोः शक्तिरिति स्वीकृतवन्तः स्वग्रन्थे।[५]

अप्रसिद्धा शक्तिरेव नागेशप्रभृतीनां वैयाकरणानां मते शक्यतावच्छेदकारोपरूपा लक्षणा। अप्रसिद्धार्थे चेयमभ्युपेयते। यथा गङ्गापदस्य प्रसिद्धार्थः भगीरथरथखातावच्छिन्नप्रवाहविशेषः अप्रसिद्धश्च तत्समीपतत्सम्बद्धप्रदेशः तटादिस्तत्र शक्यतावच्छेदकगङ्गात्वस्य आरोपात् लक्ष्यार्थस्य (अप्रसिद्धार्थस्य) तटस्य गङ्गात्वावच्छिन्नत्वेन बोधात् तत्र गङ्गापदव्यवहार्यता सिध्यति। लक्षणायाः विविधाः पक्षाः नैपुण्येन लघुमञ्जूषायां नागेशेन आचार्यरामप्रसादत्रिपाठिभिश्च शब्दशास्त्रवृत्तिविमर्शे निरूपिताः।

महाभाष्ये पस्पशाह्निके "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः" इति वाक्येन नादाभिव्यङ्ग्यो वाचकः स्फोटात्मकः

---

१. म.भा. पस्पशाह्निके; २. वा.रा. सुन्दरकाण्डे।
३. पा.सू., १.१.१; ४. वा.प., ३.३.३०।
५. शब्दशास्त्रीयवृत्तिविमर्शः, पृ. ५-६।

शब्दः भाष्यकारेण स्वीकृतः। तथैव "तपरस्तत्कालस्य" इति सूत्रभाष्ये स्पष्टतया स्फोटात्मकशब्दं ध्वनिव्यङ्ग्यं स्वीकृतवान् "एवं तर्हि स्फोटः शब्दः। ध्वनिः शब्दगुणः कथं भेर्याघातवत्। तद्यथा भेर्याघातो भेरीमाहत्य कश्चित् विंशति पदानि गच्छति कश्चित् त्रिंशत्, कश्चित् चत्वारिंशत् स्फोटश्च तावानेव भवति। ध्वनिकृता वृद्धिः।"[१] एषः व्यङ्ग्यव्यञ्जकभावसम्बन्धः व्यञ्जनाख्यः यावन्न स्वीक्रियते तावत् स्फोटात्मकशब्दस्य सिद्धिर्न भवितुमर्हति इति धिया शाब्दिकसिद्धानुगामिभिरालङ्कारिकैः मम्मटप्रभृतिभिः समादृता व्यञ्जनावृत्तिः शाब्दिकैरपि स्वीक्रियते एव। तस्याश्च लक्षणं नागेशो मञ्जूषाग्रन्थे मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञान-प्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना इत्युक्तवान्। इयं व्यञ्जनावृत्तिः न केवलं शब्दमात्रनिष्ठा, अर्थनिष्ठापि। शब्दनिष्ठा व्यञ्जना च प्रकृतिप्रत्ययपदवाक्यनिष्ठतया च चतुर्विधा। इयं शाब्दी व्यञ्जना पुनरपि अभिधामूला लक्षणामूला इति भेदेन द्विविधा विद्यते।

अर्थनिष्ठा व्यञ्जना च—

वक्तृबोद्धव्यकाकूनां वाच्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।।[२]

इति काव्यप्रकाशकारिकारीत्या अनेकविधा वर्त्तते। अत्र व्यञ्जनाविषयेऽपि नैयायिकानां मीमांसकानां मतभेदो वैयाकरणैः साहित्यशास्त्रिभिश्च विद्यते। यस्य विशेषविचारः तेषां ग्रन्थे दृढतया विद्यते।

शाब्दबोधे च सहकारकारणानि आकाङ्क्षायोग्यतासन्निधितात्पर्यज्ञानानि अन्यानि अपि कारणानि स्वीकृतानि सन्ति। शाब्दिकाश्च योग्यताज्ञानं तत्र हेतुत्वेन न स्वीकुर्वन्ति—

"एष बन्ध्यासुतो याति खपुण्यकृतशेखरः ।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः"।।[३]

इत्यत्रापि शाब्दबोधदर्शनात्।

---

१. म.भा., १.१.७०; २. का.प्र., ३.२१-२२।
३. निरुक्ते, १.१.४।

प्रमाणभूतश्च शब्दः स्फोटात्मक एव इति पूर्वं निरूपितः। स च स्फुट्यते ध्वनिना अभिव्यज्यते इति कर्मव्युत्पत्त्या, स्फुटति अर्थो अनेन इति च करणव्युत्पत्त्या स्फुट विकसने धातोः घञ् प्रत्यये सति स्फोटशब्दो निष्पद्यते। तेन ध्वनिव्यङ्ग्यत्वे सति अर्थविषयकबोधजनकत्वं स्फोटस्य लक्षणं सिध्यति। अयं स्फोटः सूत्रवार्त्तिकभाष्यसम्मतः। यास्कः निरुक्ते, "स्फोटरूपनित्यशब्दात् क्रियाकारकफलं लक्षणं सर्वं जगदभिधेयभूतं प्रभवति।"[१] इत्येव बादरायणः उक्तवान्। तथैव योगसूत्रभाष्ये विवरणेऽपि—"यथा शिविकोद्वाहनादि अनेकसाध्यमेकस्य वैकल्यो न सम्पद्यते, तथैवार्थस्य प्रतिपादनमप्यनेक-साध्यत्वादन्यतमेन वर्णानामशक्यमिति पदस्यैव व्यञ्जितारो वर्णा इति स्थितम्" इति कथनेन स्फोटवादं समर्थितवान्। अयं स्फोटात्मकः अखण्डवाक्यरूपो यद्यप्येकः तथापि शास्त्रप्रक्रियानिर्वाहाय वर्णस्फोटः वर्णजातिस्फोटः पदस्फोटः पदजातिस्फोटः, अखण्डपदस्फोटः, वाक्यस्फोटः, वाक्यजातिस्फोटः अखण्ड-वाक्यस्फोटः इत्येवं रूपेण अष्टविधः स्वीक्रियते। केचनास्य द्वात्रिंशत् भेदान् उद्घाटितवन्तः।[२] तत्सर्वं प्रक्रियानिर्वाहायैव।

अयं स्फोटः वाग्ब्रह्म चिद्रूपः शब्दाद्वैतवादे सिद्धान्तितः यस्य सर्वं स्वरूपं श्रीमच्छङ्कराचार्यस्वीकृताद्वैतवादवद्वर्त्तते इति शम्।



---

१. ब्र.सू., १.३.९.२८।

२. प्रकृतिप्रत्ययरूपवर्णस्फोटौ एकवर्णरूपौ जातिव्यक्तिरूपेण द्विविधौ अनेकवर्णघटित-समुदायरूपौ च द्विविधौ पुनः द्वावपि सखण्डाखण्डभेदाभ्यां द्विविधौ इति चतुर्विधौ। इत्थं व्यक्तिपक्षे मिलिताः षड्विधाः जातिपक्षे च चत्वारः। पदवाक्यस्फोटौ सखण्डाखण्डभेदेन चतुर्विधौ जातिपक्षे च द्विविधौ, एवं व्यक्तिपक्षे दशसंख्याकाः जातिपक्षे च षट् सङ्कलिताः षोडश भवन्ति। पुनश्च आन्तरबाह्यभेदाभ्यां भेदैः। द्वात्रिंशत् संख्याकाः सूक्ष्मदर्शिभिः शाब्दिकैः ज्ञातव्याः। यद्यपि लघुमञ्जूषायामान्तरस्फोटस्य सत्ता सूचिता तथापि घटादिरूपबाह्यपदार्थस्यापि सा सत्ता स्वीकार्या एव।

(पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ. २०६)

# जातेरस्त्रीविषयादयोपधादिति पाणिनिसूत्रसमीक्षा

**डॉ. वृजकिशोरत्रिपाठी**
उपाचार्यः, संस्कृतस्य
लालतासिंहराजकीयमहिलास्नातकोत्तरमहाविद्यालये
अदलहट्टम्, मीरजापुरम्



पुण्ये ज्ञानवताम्पवित्रयशसां जातो द्विजानां कुले,
देव्याराधनलब्धचारुधिषणः विद्यावतामग्रणीः।
शिष्याध्यापनदक्षपण्डितवरेष्वग्रेसरो ब्रह्मवित्,
'पद्मश्री' रघुनाथशर्ममतिमान् ख्यातो गुरूणां गुरुः॥१॥

न्याये वेदान्तशास्त्रेऽविहतगतिरभूद्वादिमानापहारी,
'मिश्रो देवस्वरूपः' सदसि च पटुधीर्यस्य शिष्योऽतिमान्यः।
ख्यातो 'रामप्रसादो'ऽभवदतिगहने पाणिनीये 'त्रिपाठी'
'अम्बाकर्त्री' च टीका प्रथयति निखिलप्रातिभं शास्त्रलग्नम्॥२॥

तत्स्मृतिग्रन्थेऽस्मिन्निबन्धकुसुमाञ्जलिः।
सश्रद्धमर्पिता तेन्न गुरौ भक्तिर्दृढा भवेत्॥३॥

समस्तशास्त्राम्बुधिपारमागतम्, प्रमाणभूतं खलु पाणिनेर्नये।
यथाश्रुताचारपवित्रिताशयम्, दिगन्तविश्रान्तयशःसुपूज्यम्॥४॥

धर्मक्रियानित्यरतं सुसन्तम्, श्रीशारदाभालमणिं वरिष्ठम्।
अमोघवाचं सरलस्वभावम्, 'रामप्रसादं' परमं गुरुं नुमः॥५॥

प्रमाणभूतमाचार्यं परमं पाणिनेर्नये।
वन्दे रामप्रसादाख्यं धर्मप्राणं यशस्विनम्॥६॥

शास्त्रे पाणिनिभाषिते प्रतिभया पारङ्गते सागरे,
काव्ये वा सरसे महाकविकृते निष्णातबुद्धिः कविः।
वेदान्तेऽप्रतिमप्रभावभरितः श्रीशाङ्करे निष्ठितः,
श्रीमत् 'पारसनाथ' एष निपुणः सेव्यः सदा मे गुरुः॥७॥

पदवाक्यप्रमाणज्ञं स्वात्मविद्याविशारदम्।
शास्त्रयोनिं परं ब्रह्म गुरुं नुमो 'द्विवेंदिनम्'॥८॥

मुनित्रयसमारम्भां श्रीरघुनाथमध्यमाम्।
'द्विवेदि'गुरुपर्यन्तां वन्दे गुरुपरम्पराम्॥९॥

इह पाणिनिव्याकरणे कृतभूरिपरिश्रमाणामपि विदुषां निर्भरं पदस्याधाने प्रक्रिया गुर्वी यद्यपि पदशः स्वयमेवारचयति विघ्नानि, तत्रापि च तस्यास्तत्र साहाय्यमाचरति शास्त्रान्तरज्ञानापेक्षा। 'व्याकरणं हि सर्ववेदपारिषदं शास्त्रम्'। अतः प्रायः सर्वाणि दर्शनान्यधिकृत्य पदार्थानां स्वरूपादिविषये चिन्तितमत्र संक्षेपेण। दार्शनिकसम्प्रदायप्रसिद्धपदघटितपाणिनिसूत्राणामर्थावबोधः तत्पदार्थावगतेः प्राङ् न सम्भवति। शास्त्रान्तरे प्रसिद्धानामर्थानां निरूपणं स्वशास्त्रसिद्धान्तानुसारं कृतमत्र व्याकरणशास्त्रे। कथन्नैतत्स्यात्, यतो हि व्याकरणस्य दर्शनत्वन्न तिरोहितं समेषाम्।

तादृशशब्दघटितमस्ति पाणिनीयं सूत्रम्—[1]'जातेरस्त्रीविषयादयोपधात्' इति। अस्य सूत्रार्थस्यावगतये जातिपदार्थोऽवश्यमेव ज्ञातव्यः। तत्र जातिपदार्थः कः? कति भेदा अस्याः? शास्त्रान्तरेभ्यो व्याकरणे जातिपदार्थे को विशेषः? इत्येवमादयः प्रश्ना अत्र निबन्धे विचारयिष्यन्ते। ननु महाभाष्यादारभ्य आसिद्धान्तकौमुदीमेते प्रश्नाः समाधानमवाप्नुवानाः दृश्यन्त एवेति स्थितौ किं नावीन्यमस्मिन्निबन्ध इति चेन्न, महाभाष्यादिग्रन्थानामभिप्रायावगाहनेऽपरिपक्वमतीनाङ्कृते सरलया भाषया पद्धत्या च विस्फुटितकमलमिव मनोहारिसौरभविस्तारकत्वात् नावीन्यानतिरेकित्वात्; किञ्च, बहुपक्षाश्लेषिविषये एकतमपक्षपातियुक्त्याग्रहे युक्तिप्रदायित्वाच्च।

**सूत्रार्थः**

तथा हि, 'जाते'रिति पञ्चम्येकवचनान्तम्, 'अस्त्रीविषयादि'ति पञ्चम्येकवचनान्तमयोपधादिति पञ्चम्येकवचनान्तमिति त्रिपदमिदं सूत्रं 'जातेरस्त्रीविषयादयोपधादि'ति। [2]'स्त्रियाम्' इत्यधिकारसूत्रान्तर्गतत्वादस्य 'स्त्रियाम्' इति सम्बध्यते। [3]'अन्यतो ङीष्' इत्यतो 'ङीष्' इत्यनुवर्तते। अर्थे ङीषादिकार्याभावाज्जातिशब्दो नार्थपरः किन्तु जात्यर्थवाचकशब्दपरः। ननु लोके शब्दानामर्थपरत्वेऽपि व्याकरणे शब्दाः स्वरूपपरा इति, [4]"स्वं रूपं शब्दस्याशब्दसंज्ञे'ति विज्ञानाज्जातिशब्दोऽत्र जातिशब्दमात्रपरः स्यादिति चेन्न,

१. पा.सू. ४.१.६३;
२. तदेव-४.१.३।
३. तदेव-४.१.४०;
४. तदेव-१.१.६८।

'अस्त्रीविषयादि'ति प्रतिषेधवैयर्थ्यात्। जातिशब्दस्य नैयत्येन स्त्र्यर्थकत्वात्[१]। 'अस्त्रीविषयादि'त्यत्र घटकत्वेनोपात्तो विषयशब्दोऽनन्यभावे वर्तते। तेन स्त्रीविषयः = नियमेन वाच्यो यस्येति बहुव्रीहिणा स्त्रीविषयशब्दो नियतस्त्रीलिङ्गपरः। तथा च 'अस्त्रीविषयादि'त्यनेन अनियतस्त्रीलिङ्गादिति विवक्षितम्। नैयत्यलाभायैव विषयग्रहणम्। अन्यथा अस्त्रिया इत्येवावक्ष्यत्। 'य' उपधायां यस्य स योपधः न योपधः अयोपधस्तस्मात्। 'अस्त्रीविषयाद्' 'अयोपधादि'ति च शब्दद्वयं जातिविशेषणम्। तेन अनियतस्त्रीलिङ्गादयोपधात् जातिवाचकाच्छब्दात् स्त्रियां ङीष् स्यादिति सूत्रार्थः सम्पद्यते। तथा च वृत्तिः— [२]"जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यादि'ति। अखिलमिदं सूत्रमुद्देश्यदलमेव, ङीषित्यनुवर्तमानो विधेयः।

**जातिः**

जातिशब्दस्य जात्यर्थवाचकशब्दमात्रपरत्वे जात्यर्थोऽवश्यमेवावगन्तव्यस्तदृते सूत्रार्थावबोधाशम्भवात्। 'जायते समाना प्रतीतिरनयेति जातिः'[३]। 'जनी' प्रादुर्भावे इति धातोः [४]"क्तिन्क्तिचौ च संज्ञायाम्' इति क्तिचि, [५]"जनसनखनां सञ्झलोः' इत्यनेनात्वे जातिशब्दो निष्पद्यते। [६]"तितुत्रतथासिसुरकसेषु च' इत्यनेन नेट्। आहोस्वित् जननेन या प्राप्यते सा जातिः [७]"अकर्त्तरि च कारके संज्ञायाम्' इत्यतः 'अकर्त्तरि च कारके' इत्यनुवर्तनात् [८]"स्त्रियां क्तिन्' इत्यनेन क्तिनि सति जातिशब्दनिष्पत्तिः। जगति किञ्चिदपि तन्नोत्पद्यते यस्य जातिर्न स्यात्। तस्याः सर्वत्र विद्यमानत्वेऽपि व्यक्त्यधीना जात्यभिव्यक्तिरिति। सा कार्येषु विद्यमाना स्वाश्रयव्यक्त्युपजननद्वारा आत्माभिव्यक्तये स्वाश्रयकार्योत्पत्तौ प्रयोजककर्तृत्वमिवावलम्बते। एवञ्च, एकव्यवहारनिमित्तो व्यक्त्यभिव्यक्तो यो पदार्थः स जातिर्भवितुमर्हति।

**शास्त्रान्तरसिद्धा जातिः**

जातिरेव शब्दाभिधेय इति मीमांसकाः। [९]"आकृतिस्तु क्रियार्थत्वात्' इति सूत्रे जैमिनिना आकृतेरभिधेयत्वं प्रतिपादितम्। 'जातिमेवाकृतिम्प्राहु-

---

१. 'जातिः स्त्री गोत्रजन्मनोरि'ति मेदिनी।

२. वैयाकरणसिद्धान्तकौमुदी, प्रथमो भागः, स्त्रीप्रकरणम्, सू. ५१८।

३. दि.आ.से., ११४९;

४. पा.सू. ३.३.७४।

५. तदेव-६.४.४२;

६. तदेव-७.२.०९।

७. तदेव-३.३.१९;

८. तदेव-३.३.९४।

९. जैमिनीयसूत्रम्-१.३.३३।

र्व्यक्तिराक्रियते यया' इत्याकृतिवादे तन्त्रवार्तिके वदता भट्टपादेन जातेराकृतिरूपत्वं प्रतिपादितम्। न तु प्रतिपिण्डभिन्नसंस्थानस्य। पार्थसारथिमिश्रेण च शास्त्रदीपिकायाम्—

[1]'आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः।
सन्देहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः॥
अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः।
आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता॥

एवञ्च शब्दाभिधेयत्वरूपेण जातिरवश्यमभ्युपगन्तव्या मीमांसकैरन्यथा यदि ह्याकृतिव्यतिरिक्ता व्यक्तय एव सर्वत्र शब्दार्थाः स्युः, ततस्ताभिर्व्यक्तिभिर्व्यभिचारात् सम्बन्धः शब्दस्य न सिध्येत्। मीमांसकमते जातेर्वाच्यत्वं स्वीकृत्य जात्याधारस्य द्रव्यस्य क्रियान्वयित्वञ्चाङ्गीकृत्य व्यवहार उपपद्यते। सा च जातिः, [2]'सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्' इति वचनाद् भिन्नेषु पिण्डेषु एकबुद्ध्यालम्बनस्वरूपा।

व्यवहारे भाट्टनय इति धिया इदमेव लक्षणं वेदान्तिनामपि; अत एव लघुशब्देन्दुशेखरे प्रोक्तम्—'[3]भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिरि'त्येकं लक्षणं वेदान्तमते स्थापयति वरवर्णिनी।

'नित्यमेकमनेकानुगतं सामान्यमि'ति नैयायिकाः। 'नित्यत्वे सत्येकत्वे सति समवायसम्बन्धेनानेकवृत्तित्वमि'ति तदर्थः। तच्च सामान्यं परापरभेदेन द्विविधम्।

**व्याकरणे जातिलक्षणम्**

व्याकरणेऽपि किञ्चिच्छब्दान्तरेण तादृशमेव नैयायिकाभिप्रेतं सामान्यमुरीक्रियते। तथा ह्यु महाभाष्ये महर्षिणा पतञ्जलिना[4] 'यत्तर्हि तद्भिन्नेष्वभिन्नं च्छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः'। भाष्योक्त्यानया 'नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वमि'ति जातिलक्षणं ध्वनितं भवति। स्पष्टीकृतञ्चेदं तत्रैव प्रदीपोद्योतयोरपि।

---

१. आकृत्यधिकरणम्, अ. १-३ पादे।
२. श्लोकवार्तिकम्, आकृतिवादः, का. ३।
३. षट्टीकोपेतं लघुशब्देन्दुशेखरम्, पृ. ५८४।
४. महाभाष्यम्, प्रदीपोद्योतसहितम्, पस्पशा., १.१.१, पृ. ९-१०।

**जातिभेदसमीक्षा**

[१]जातिरियं चतुर्विधा उक्ताशब्दशास्त्रे। यथोक्तं महाभाष्ये—

आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या, गोत्रञ्च चरणैः सह॥

तत्र आकृतिग्रहणा जातिः प्रथमा। असर्वलिङ्गा सती एकस्यां व्यक्तौ उपदेशाद् व्यक्त्यन्तरे उपदेशं विना सुग्रहा द्वितीया। तेन 'लिङ्गानाञ्च न सर्वभाक् सकृदाख्यातनिग्राह्ये'ति श्लोकानुसारं द्वितीयो जातिभेदः। 'गोत्र'-मित्यनेनापत्यप्रत्ययान्तः 'चरण'शब्देन च शाखाध्येतृवाची गृह्यते। अनयोरपि जातिकार्यभाक्त्वमातिदेशिकमस्तीति तृतीया। चतुर्थी तु यावद्द्रव्यभाविनी जातिः। तस्याश्चतुर्थ्याः स्वरूपमुक्तं भाष्ये—

[२]प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥

अत्र एषाम्प्रकाराणां विस्तरेण विवेचनमुपस्थाप्यते।

ननु जातेर्लोके तन्त्रे च प्रसिद्धत्वात् किम् आकृतिग्रहणाज्जातिरिति लक्षणकरणप्रयासेनेति चेन्न, लक्षणविप्रतिपत्त्या, शाब्दप्रक्रियोपयोगितया च लक्षणान्तरसाफल्यात्। तथा हि—'जननेन प्राप्यत' इति जातिलक्षणमिदमित्येके, जायेते अनया भिन्नेष्वभिन्नाभिधानप्रत्ययावित्यन्ये, नित्यमेकमनुगतं सामान्य-मित्यप्यपरे। इत्येवं विप्रतिपत्त्या लक्षणानां समासादयितुमेकं लक्षणं शब्दशास्त्रो-पयोगि जातेर्लक्षणप्रकारकरणे सफलः श्रमः।

किञ्च, यद् भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः, नित्यमेकमनुगतं सामान्यमिति च लक्षणद्वयं भिन्नशास्त्रिणां तत् येषाम्मते शुक्लादिगुणानामपि भिन्नेष्वभिन्नाभिधाननिमित्तत्वाद्घटत्ववत्सकलश्वेतपटदुग्धदधिशङ्खाम्बुजादिवृत्तित्वादेकत्वम्, घटत्वादिवच्च नित्यत्वमतस्तत्रातिव्याप्तमिदं लक्षणद्वयम्।

यत्तु केनचिज् 'जननेन प्राप्यते सा जातिरि'ति लक्षणं चिकीर्षितं तदपि युवत्वादावव्याप्तम्। तथा हि—स्वतादात्म्यस्वाधिकरणद्रव्योत्पादकसामग्रीतरा-प्रयोज्यानुयोगिताकसम्बन्धप्रतियोगित्वोभयसम्बन्धेन 'स्वविशिष्टत्वं जातित्वम्' इति तत्पूर्णं लक्षणम्। यस्य जातित्वं चिकीर्षितं तत्स्वम्। यथा, 'घटत्वमि'त्यत्र स्वं, घटत्वं तद्धि घटत्वे तादात्म्येनेति प्रथमसम्बन्धेन वैशिष्ट्यम्। अथ च स्वं घटत्वं तदधिकरणं द्रव्यं घट इति तस्योत्पादिका सामग्री मृद्दण्डचक्र-

---

१. महाभाष्यम्-४.१.६३; २. तत्रैव महाभाष्ये।

चीवरकुलालादिः सा सामग्री 'घटत्ववान् घट' इत्यत्र स्वयमेव घटत्व-प्रतियोगिकसमवायीयघटनिष्ठानुयोगितायाः प्रयोजिका, न तु सा सामग्रीतर-प्रयोज्या तस्य समवायसम्बन्धस्य प्रतियोगित्वं घटत्वे। युवत्वादौ च स्वतादात्म्यसम्बन्धेन युवत्वसत्त्वेऽपि युवत्वप्रयोजकसामग्र्याः देवदत्ताप्रयोजक-सामग्र्या इतरत्वाद्धितीयसम्बन्धाभावादव्याप्तिः। तथा हि, या देवदत्ता युवती तस्यां युवत्वं चिकीर्षितम्; स्वं युवत्वं तदधिकरणद्रव्यं देवदत्ता तस्या उत्पादिका सामग्री, न 'युवत्ववती (युवती) देवदत्ता' इत्यत्र युवत्वप्रतियोगिकसमवायीय-(युवती) देवदत्तानिष्ठानुयोगितायाः स्वयमेव प्रयोजिका; किन्तु युवत्व-प्रयोजकसामग्र्याः प्रयोज्या। तस्याश्च देवदत्ताप्रयोजकसामग्रीतरत्वात्, तस्मात् स्वाधिकरणद्रव्योत्पादकसामग्रीतराऽप्रयोज्यत्वाभावाद् द्वितीयसम्बन्धाभावान्न युवत्वं स्वविशिष्टमतो न जातिः। अत्र एकस्यामेव देवदत्तायां युवत्याम् (एकस्मिन्नेवाधिकरणे) युवत्वप्रयोजिका, अधिकरणप्रयोजिका चेति सामग्रीद्वयं विद्यते, अतस्सामग्रीतरप्रयोज्यत्वमिति हृदयम्। तस्मादिदमपि लक्षणं युवत्वेऽव्याप्तम्, अत एवाकृतिग्रहणेत्यादिलक्षणे प्रयासः।

**आकृतिग्रहणा जातिः**

आकृतिर्ग्रहणं यस्याः सा आकृतिग्रहणा। अवयवसन्निवेशविशेष आकृतिः। गृह्यत अनेन इति ग्रहणं व्यञ्जकम्। अवयवसन्निवेशविशेषो व्यञ्जकं यस्या सा 'आकृतिग्रहणा जातिः'। वैशिष्ट्यमवयवानामनुगतत्वेन। तेनोक्त-मनुगतसंस्थानव्यङ्ग्येत्यर्थः। ईदृशाकारो 'गौ'रित्याकृत्युपदेशादिव्यङ्ग्येत्यर्थः[१]।

ननु करणसाधन'ग्रहण'शब्दस्याऽऽकृतिसमानाधिकरणतया स्त्रीत्वेना-कृतिग्रहणी केति प्राप्नोतीति चेन्न, पदसंस्कारपक्षे गृह्यतेऽनेनेति करणसामान्ये निष्पत्युत्तरमाकृतिशब्दसन्निधाने स्त्रीत्वप्रतिपत्तेर्बहिरङ्गत्वान्न स्त्रीप्रत्ययनिमित्तत्व-मिति युक्तेः क्षतिविरहात्।

एतेन लक्षणेन गोत्वादिर्जातिर्लक्षिता। अस्या मूर्धाभिषिक्तं [२]''तटी'-त्युदाहरणमपि सङ्गच्छते। जलसमीपदेशो हि तटम्। जलसमीपदेशत्वेनानु-गतसंस्थानव्यङ्ग्यमेतत्। सर्वलिङ्गत्वान्न 'लिङ्गानाञ्च न सर्वभाग्' इति द्वितीयलक्षणसङ्गतिः। तस्मा'ज्जातेरस्त्रीविषयादयोपधादि'ति सूत्रेण तटशब्दस्य स्त्रीत्वविवक्षायां ङीषि 'तटी'ति।

---

१. लघुशब्देन्दुशेखरम्, स्त्रीप्रत्ययप्रकरणम् 'जातेरस्त्री.' इति सूत्रम्।

२. अमरकोषः 'तटं त्रिषु'।

कठिनसंस्थानव्यङ्ग्यत्वाद् युवत्वमपि आकृतिग्रहणायाः जातेर्लक्ष्यम्। यतो हि मृदुसंस्थानव्यङ्ग्या कुमारत्वजातिः, कठिनसंस्थानव्यङ्ग्या युवत्वजातिः, शिथिलसंस्थानव्यङ्ग्या च वृद्धत्वजातिः। तेन 'युवतितरे'त्यत्र [1]''स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रमाण्योः' इत्यनेन प्राप्तस्य पुंवद्भावस्य [2]''जातेश्च' इत्यनेन निषेधे 'युवतितरे'त्युक्तं सङ्गच्छते 'ङ्याप्'सूत्रे भाष्ये।

न च बालाद्यवस्थाभेदभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन तत्रातिव्याप्तमिदं लक्षणमिति वाच्यम्, समानकालिकानेकव्यक्तिवृत्त्यनुगत-संस्थानव्यङ्ग्येत्यर्थात्। स्वसमानकालिका या अनेकव्यक्तयस्तद्वृत्तियदनुगतं संस्थानम् आकारप्रकारविशेषः, तज्जन्यज्ञानविषयीभूता जातिरित्यर्थः। यथा समानकालिकानेकगोव्यक्तिवृत्तिसंस्थानविशेषजन्यज्ञानविषयीभूता गोत्वजातिः। देवदत्तत्वादेः समानकालिकानेकव्यक्तिवृत्तित्वाभावान्न जातित्वम्।

किञ्च, अवस्थाभेदेऽपि देवदत्तदेहभेदाप्रतीतेः 'स एवायमि'ति प्रतीतेश्च, तज्जातीयोऽयमित्यप्रतीतेश्च न देवदत्तत्वादेर्जातित्वम्। एवञ्च परस्परं विभिन्नतया प्रतीयमानानेकव्यक्तिवृत्तित्वविशिष्टसंस्थानज्ञानजन्यज्ञानविषयीभूता जातिरिति निष्कृष्टं लक्षणम्। अत एवेन्द्रत्वादिकं न जातिः, पञ्चेन्द्रोपाख्यानादिभिरनेकेषां समकालिकत्वेऽपि सर्वेषां संस्थानस्यैकत्वे मानाभावात्। 'दुर्गा' 'अपर्णा' इत्यादीनां स्त्रीविषयत्वात्, कालभेदेन शरीरभेदेऽपि समानकालिकत्वाभावाच्च न जातित्वमत एव [3]''अजाद्यतष्टाप्' इत्यनेन टाप्।

नन्वेवं जात्याश्रयव्यक्तेरप्याकृतिग्राह्यतया जातित्वापत्तिरिति चेन्न, 'ईदृशाकारो गौरि'त्युपदेशवाक्यस्य गोत्वबोधेच्छया प्रयोज्यत्वात्। न च धर्मिबोधमुपेक्ष्य जातिबोधेच्छयैव प्रयोज्यत्वं कथमिति वाच्यम्, जातिबोधेच्छया प्रयुक्तगोत्वमित्युपदेशवाक्यसमानाकारत्वाज्जातिबोधेच्छयैव प्रयोज्यत्वात्। किञ्च, तादृशाकारविशिष्टधर्मिणः प्रत्यक्षादिनावगमे गोत्वादिजातेरेव तादृशाकारवाक्य-जन्यज्ञानाधीनत्वाच्च।

न चैवमुक्तलक्षणमात्रस्वीकारे वृषलत्वादीनां जातित्वन्न स्यात्, अवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन तस्याकृतिग्रहणाभावात्। अतो लक्षणान्तरमुच्यते—**'लिङ्गानाञ्च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या'** इति। 'लिङ्गानामि'ति कर्मणि षष्ठी। सर्वाणि (लिङ्गानि) भजतीति सर्वभाक्

---

१. पा.सू. ६.३.३४; २. तदेव-६.३.४१।

३. तदेव-४.१.४।

[1]"भजेर्ण्विरि'ति पाणिनिसूत्रेण 'सर्वाणी'ति सुप्युपपदे ण्विः। 'कुगतिप्रादयः' इत्यनेन समासश्च, सर्वभाक् इति शब्दनिष्पत्तिः। ननु सर्वाणि लिङ्गानि भजतीति विग्रहे सर्वशब्दो लिङ्गापेक्षी 'भजेर्ण्विरि'त्यस्य च सुप्युपपदे विधानात् पदविधितयाऽसामर्थ्ये कथं प्राप्तिः? कथं ण्विरिति चेन्न, बोधकत्वात् सर्वसिद्धेः। अबोधकत्वमेव ह्यसामर्थ्ये वृत्त्यप्राप्तौ बीजम्। 'आख्यातम्' इत्यत्र भावे क्तः। आख्यातम् = आख्यानम्,कथनमुपदेश इत्यर्थो वा। निर्ग्राह्येत्यस्य व्यक्त्यन्तरे उपदेशं विनापि सुगमेत्यर्थः। सकृदित्यतः पूर्वमेकस्यां व्यक्ताविति शेषः। तेन सम्पन्नमिदं लक्षणम्—[2]"असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ सकृद् कथनाद् व्यक्त्यन्तरे कथनं विनापि सुग्राह्यत्वं जातिः।

अनेन लक्षणेन वृषलत्वस्य जातिसिद्धिः। वृषलं ह्यसर्वलिङ्गं नपुंसकत्वाभावात्। एकस्यां व्यक्तौ वृषलत्व उपदिष्टे तदपत्यसहोदरादौ सुग्रहमुपदेशं विनापि, अतः असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ सकृदुपदेशाद् व्यक्त्यन्तरे उपदेशं विनापि वृषलत्वस्य सुग्राह्यत्वात्, तदस्य मूर्धाभिषिक्तमुदाहरणं सङ्गच्छते। 'वृषली'त्यत्रानेनैव सूत्रेण जातौ ङीषि सिद्धिः। नन्वेवमपि ब्राह्मणत्वादेर्जातित्वन्न स्यात्, तस्योपदेशगम्यत्वेऽप्येकत्र कथितस्यान्यत्र पुत्रादौ सुग्राह्यत्वाभावात्। ब्राह्मणाद् ब्राह्मण्यामुत्पादितस्यैव ब्राह्मणत्वात्। ब्राह्मणपुत्रस्य ब्राह्मणभ्रातुश्च शूद्रादेरपि सम्भवात्। तथा च ब्राह्मणपुत्रभ्रात्रादिषु न तद् ब्राह्मणत्वं ग्रहीतुं शक्यम्। एवञ्च सति 'ब्राह्मणीभार्यः' इत्यत्र 'जातेश्चे'ति पुंवद्भावनिषेधानापत्तिरिति चेन्न, तत्पित्रादौ सुग्रहत्वात्। एतेन 'वृषली'ति सिद्धान्तकौमुदीकृदुदाहरणेन ब्राह्मणत्वन्नैव जातिरित्युदीरयन्त अपास्ताः, तस्योपलक्षणत्वात्।

तस्मात् "लिङ्गान्वयितावच्छेदकत्वकूटाभाववत्त्वे सति 'अयं ब्राह्मण' इत्याकारकवाक्यात्मकोपदेशविशिष्टत्वं जातित्वम्" इति द्वितीयं परिष्कृतं लक्षणं सम्पद्यते। वैशिष्ट्यञ्च, स्वविशिष्टग्रहप्रकारकत्वसम्बन्धेन। वैशिष्ट्ये वैशिष्ट्यञ्च, स्वजन्यज्ञानजन्यत्वस्वजन्यज्ञानविधेयीभूतब्राह्मणत्वादिधर्मविधेयकत्वस्वजन्यज्ञानीयधर्मिताश्रयेतरधर्मिताकत्वैतत्त्रितयसम्बन्धेन यथा 'ब्राह्मणत्वं जातिः' [3]"स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः' इत्युक्तेरसर्वलिङ्गात्। सकृदेकस्मिन्देवदत्तादावुपदिष्टा 'अयं ब्राह्मण' इति तत्पित्रादौ 'एतत्पिता ब्राह्मण' इत्युपदेशं

---

१. पा.सू. ३.२.६२।

२. असर्वलिङ्गत्वेन सत्येकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। (वै.सि.कौ.स्त्री., 'जातेरस्त्री.' सूत्रम्)

३. अमरकोशे लिङ्गादिसंग्रहवर्गः।

विनाऽपि तत्र गृह्यते। 'स्त्रीपुंसयोरपत्यान्ता' इत्युक्तेः नपुंसकत्वाभावाद् ब्राह्मणे लिङ्गान्वयितावच्छेदककूटाभावत्वं वर्तते। अथ च 'अयं ब्राह्मण' इत्युपदेश-विशिष्टत्वं ब्राह्मणत्वे। 'अयं ब्राह्मण' इत्याकारकवाक्यात्मोपदेशेन यस्मिन् ब्राह्मणत्वं गृहीतं तस्य वैशिष्ट्यं यस्मिन् ब्राह्मणत्वं जिघृक्षिष्यते तत्र। यथा 'अयं ब्राह्मण' इत्याकारकवाक्यात्मोपदेशेन देवदत्तादिधर्मिणि ब्राह्मणत्वं गृह्यते, तस्य वैशिष्ट्यमेतत्पिता ब्राह्मण' इति ज्ञाने। अत एव 'अयं ब्राह्मण' इत्याकारकवाक्योपदेशाज्जायमानज्ञानत्वं स्वम्। वैशिष्ट्यञ्च यथोक्तसम्बन्धैः तेषु प्रथमो यथा, एतत्पितरि ब्राह्मणत्वज्ञानम् अस्मिन् ब्राह्मणत्वज्ञाने सत्येव ततो स्वजन्यज्ञानजन्यत्वमिति। द्वितीयो यथा, स्वजन्यज्ञानविधेयीभूतब्राह्मणत्व-धर्मविधेयकत्वमपि 'एतत्पिता ब्राह्मण' इति ज्ञाने। तृतीयोऽपि, स्वजन्यज्ञानीय-धर्मिताश्रयेतरपितृधर्मिताकत्वमपि 'एतत्पिता ब्राह्मण' इति ज्ञाने। एतत्त्रितय-सम्बन्धैर्विशिष्टं यज्ज्ञानं 'एतत्पिता ब्राह्मण' इत्याकारकं तस्य प्रकारता ब्राह्मणत्व इति तस्य ब्राह्मणत्वस्य जातिसिद्धिः।

पूर्वलक्षणेन यत्र जातित्वन्न प्राप्यते तदर्थमिदं लक्षणम्। एतदभावेऽपि पूर्वलक्षणेन जातिसिद्धिः। अत एव तटादेः सर्वलिङ्गत्वादनेन जातित्वाभावेऽपि पूर्वेण तत्सिद्धिः।

उपदेशापेक्षञ्च, 'लिङ्गानामि'त्यादि जातिलक्षणमिति ब्राह्मणत्वादिजातिरेव लक्ष्यते। तेन देवदत्तेत्यस्यासर्वलिङ्गत्वेऽपि जातिलक्षणङीषभावो जात्यभावात्। उपदेशसहायप्रत्यक्षेणैकत्र गृहीतब्राह्मणत्वस्य तद्भ्रातृपित्रादिपिण्डान्तरे ग्रहणवन्न देवदत्तत्वं क्वचित्पिण्डान्तरे प्रतीयते। यद्यपि पिण्डान्तरेऽप्यस्ति 'देवदत्त'-ज्ञानम्, तथापि वाचकसादृश्यमेव, न त्वर्थसादृश्यम्। 'अयं गौरि'ति सकृदुपदिष्टा गोत्वजातिर्निग्रहीतुं निश्चेतुं पिण्डान्तरे शक्या अतो गोत्वमप्यस्य लक्ष्यम्। 'लिङ्गानाञ्च न सर्वभागि'ति कथनान्न शुक्लादीनां जातित्वम्, तेषां गुणवाचित्वात् सर्वलिङ्गत्वात्[१]। सकृदाख्यातनिर्ग्राह्येति वचनात् 'देवदत्ते'त्यस्य च जातित्वन्निवर्तते।

अत्र 'आकृतिग्रहणा जातिरि'ति लक्षणं नित्यानित्यसाधारणं जातिलक्षणम्। अत एव युवत्त्वादिकमपि जातिरेतेन। 'अपर आहे'त्यादिना 'प्रादुर्भावविनाशाभ्यामि'त्यादि लक्षणन्तु नित्यजातिलक्षणं यावद्द्रव्यभावित्वाद् भाष्ये दर्शितम्। एतल्लक्षणद्वयं भिन्न-ऋषिकर्तृकम् 'अपर आहे'त्युक्तेः। तत्राद्यो नित्यानित्यजातिवादी, नित्यजातिवादी चापरः। उभयमतमाश्रित्य भाष्यं प्रवृत्तम्। तेन 'कुमारीभार्यः' इत्यत्र 'स्त्रियाः पुंवद्भाषिते'त्यादिसूत्रप्राप्तं पुंवत्त्वं पूर्वलक्षणेन

---

१. अमरकोशः।

कुमारत्वजातित्वात् 'जातेश्च' इति निषिध्यते। उत्तरलक्षणञ्चाश्रित्य जातित्वाभावात् पुंवत्त्वमिति 'कुमारभार्यः' इत्यपि साधु।

अत एव 'युवजानि' इत्यत्र 'स्त्रियापुंवदि'त्यादिना प्राप्तस्य पुंवत्त्वस्य 'जातेश्च' इत्यनेन निषेधो न, उत्तरलक्षणेन जातित्वाभावात्। 'युवतितरा' इत्यत्र च [१]'तरप्तमपौ' इति वार्तिकेन प्राप्तस्य पुंवत्त्वस्य निषेधश्च सिद्ध्यति। पूर्वलक्षणमाश्रित्य युवत्त्वस्य जात्यभ्युपगमात्।

यत्तु 'पूर्वोक्तमेव लक्षणं भाष्यकारस्याभिमतम् 'अपर आहे'त्यभिधानादित्याहुः। तथा च 'युवतितरे'ति ङ्याप्सूत्रे उदाहरणं ददौ, [२]तसिलादिष्विति प्राप्तस्य पुंवद्भावस्य 'जातेश्चे'त्यनेन निषेधादिति कैयटः[३]। तन्नातिमानार्हः, भाष्यविरोधात्। लक्षणप्रणेतृ-ऋषिद्वयप्रामाण्याज्जातिकार्यस्य स्वयमेवोदाहरणमुपस्थापयतः[४] भगवतः पतञ्जलेर्द्विविधमप्युदाहरणमभीष्टमनुष्ठितञ्च, अत एव 'युवजानिः' 'युवतितरा' इत्युभयविधमुदाहरणं सङ्गच्छते। नन्वेवं 'वृद्धा' 'स्थविरा' इत्यादावपि जातिकार्यविकल्पः पूर्वलक्षणसङ्गतेरिति वाच्यम्, तत्र त्वजादिपाठाट्टाप्सिद्धेः।

नन्वेताभ्यामपि लक्षणाभ्याम् 'औपगवी' 'कठी'त्यादेरसङ्ग्रहोऽनुगतसंस्थानव्यङ्ग्यत्वाभावात्, कठः, कठी, कठमिदङ्कुलम्, औपगवः, औपगवी' औपगवङ्कुलम् इति दर्शनेनासर्वलिङ्गत्वाभावादिति चेत्तदर्थं लक्षणान्तरम्।

**गोत्रञ्च चरणैः सह**

चरणैः सह गोत्रं जातित्वं लभते। आतिदेशिकजातिवमनेन बोध्यते। अत एवोक्तं सिद्धान्तकौमुदीकारेण 'जातिकार्यं लभते' इति[५]। गोत्रमत्रापत्यपर्यायो गृह्यते[६]। अपत्यञ्चात्र शब्दशास्त्रे तदर्थके प्रत्यये, स च तदन्तपरिभाषया अपत्यप्रत्ययान्ते गृह्यते। चरणशब्दो बह्वृचादिशाखाभेदेषु वर्तते[७]।

---

१. वा. ३९१९, वै.सि.कौ. द्वितीयो भागः, पृ. १४१।
२. 'तसिलादिष्वाकृत्यासुचः' पा.सू., ६.३.३५।
३. 'जातेरस्त्री.' इति सूत्रे कैयटः।
४. कः पुनरेतयोर्जातिलक्षणयोर्विशेषः? यथापूर्वं जातिलक्षणं तथा 'कुमारीभार्यः' इति भवितव्यम्। यथोत्तरं तथा 'कुमारभार्य' इति भवितव्यम्। 'जातेरस्त्रीविषयादि'त्यादिसूत्रमहाभाष्यम्। 'युवजानिः' 'युवतितरा' चेत्युदाहरणमप्यत्र प्रमाणं भाष्यकारस्य।
५. वै.सि.कौ.स्त्रीप्र. 'जातेरस्त्री.' इति सूत्रम्।
६. 'सन्ततिर्गोत्रजननः' अमरकोशः, ब्रह्मवर्गः। 'सन्तानसन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे' इति मेदिनी।
७. 'चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि' इति मेदिनी।

यद्यप्यभियुक्तोक्तेश्चरणशब्दः कठादिशाखाभेदेषु तदध्यायिपुरुषे च वृत्तिस्तथाप्यत्र शाखाध्येतर्येव, शाखायामस्त्रीविषयत्वाभावात्। तस्मात् 'चरण'शब्देन शाखाध्यायिनो गृह्यन्त इति कैयटोक्तौ[1] द्वन्द्वमुपकुर्वाणा उपेक्ष्याः, षष्ठीतत्पुरुषस्यैव तत्रापेक्षितत्वात्।

यद्यप्यनुगताकारप्रत्यवेद्या जननविशेषप्रयुक्ता च या द्विविधा जातिर्लोके प्रसिद्धा सा न गोत्रचरणयोस्तथापि 'अतस्मिन् तच्छब्दस्तद्वाचिषु शब्देषु तत्कार्यार्थः' इत्यभिप्रेत्येदं जातिलक्षणं कृतम्; तस्मान्नेदं सर्वाभिप्रेतजातिलक्षणं किन्तु स्वशास्त्राभीष्टमेव। अस्मिन् च शब्दशास्त्रे शब्दसाधुत्वमेव प्रधानम्। अतः शब्दसाधुत्वबोधनार्थं जात्यर्थकशब्देषु यत्कार्यं ङीषादि, तदेष्वपि शब्देषु लभ्यते, इत्येतदर्थमेवेदं लक्षणम्। अस्मादेव यत्र तत्र अस्यारोपित-जातित्वमुक्तम्[2]। आतिदेशिकत्वदृष्ट्याऽस्य लक्षणस्येदं स्वरूपम्—[3]'अपत्य-प्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभते'। अस्योदाहरणं गोत्रे यथा—'औपगवी'ति। उपगोरपत्यं स्त्रीत्यर्थे [4]''तस्यापत्यम्' इत्यणि [5]''टिड्ढाणञ्'त्यादिना ङीपं बाधित्वा परत्वादनेन ङीष्। चरणे यथा, 'कठी'। कठेन प्रोक्तमधीते इत्यर्थे प्रथमं वैशम्पायनान्तेवासित्वात्प्रोक्तार्थे [6]''कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः, तस्य [7]''कठचरकाल्लुक्' इत्यनेन लुकि 'कठम्' इति। ततः कठेन प्रोक्तम् (कठम्) अधीते इत्यर्थे [8]''तदधीते तद्वेद' इत्यनेनाणि तस्य [9]''प्रोक्ताल्लुक्' इत्यनेन लुकि, ततोऽनेन ङीष्। चरणे उदाहरणान्तरं 'बह्वृची'ति बहवः ऋचः अध्येतव्या यस्या इति विग्रहे 'अनृच बह्वृचावध्येतर्येवे'ति वचनाद् [10]''ऋक्पूरब्धूपथामानक्षे' इत्यप्रत्यये समासान्ते अनेन ङीषि 'बह्वृची'ति सिद्ध्यति।

ननु सत्यपि चरणे 'कठी'त्युदाहरणे 'बह्वृची'त्युदाहरणं किमर्थमिति चेन्न, 'कठी'त्यत्र अध्येत्रर्थेऽणि 'बह्वृची'त्यत्र च तस्य प्रसिद्धिबलात्सिद्धिरिति भेदाद् उदाहरणद्वयोपपत्तेः।

---

१. 'जातेरस्त्री.' इति सूत्रे कैयटः।

२. 'जातिकार्यं लभते' वै.सि.कौ. 'जातेरस्त्री.' सूत्रम्।

३. 'कटी' बह्वृची'ति तत्रैव सिद्धान्तकौमुद्यामुदाहरणम्।

४. पा.सू. ४.१.९२;

५. तदेव-४.१.१५।

६. तदेव-४.३.१०४;

७. तदेव-४.३.१०७।

८. तदेव-४.३.५९;

९. तदेव-४.२.६४।

१०. तदेव-५.४.७४।

लिङ्गानाञ्चेत्यादिलक्षणे 'गोत्रञ्च चरणैः सह' इति लक्षणे च 'ब्राह्मणी'त्युदाहरणम्परित्यज्य 'वृषली' 'औपगवी'ति पर्यन्तानुधावनं ब्राह्मण्यां [1]ङीपा ङीषो बाधनादित्यवबोध्यम्।

**गोत्रार्थे प्राचीननवीनयोर्मतभेदकारणम्**

अत्र गोत्रशब्दः अनन्तरापत्यार्थक इति दण्डिदीक्षितादीनां प्राचीनानां मतम्। गोत्रं पारिभाषिकं पौत्रप्रभृत्यर्थकमिति नवीनाः श्रीमन्नागेशप्रभृतयः।

तत्र मतवैभिन्न्ये इदं बीजम्—शब्दार्थसम्बन्धे लोकव्यवहार एव प्रमाणम्। अपत्यशब्द उत्पादयितारं प्रत्येव प्रयुज्यते, इत्येकं मतम्। न हि लोक एव शब्दार्थसम्बन्धग्राहकः किन्तु व्याकरणमपि[2]। तत्र चापत्यशब्दव्युत्पत्तिः, न पतन्ति पितरो नरके येन सः, तेन एकमप्यपत्यं पितामहादीनां सर्वेषां सम्बन्धि भवति। तथा च सूत्रम् [3]"अपत्यं पौत्रप्रभृतिगोत्रम्"। अत्र सूत्रकारः समानाधिकरणेन निर्दिशति 'तस्मात्पौत्रप्रभृति' अपत्यं गोत्रशब्दवाच्यं पारिभाषिकमित्यन्यन्मतम्। अत्र पूर्वं मतं प्राचीनानामुत्तरञ्च नवीनानामिति विवेकः।

अत्रोभयपक्ष आचार्या महाभाष्यमेव प्रमाणयन्ति। तथा हि—

**प्राचीनमते प्रमाणम्**

अत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते अपत्याधिकारादन्यत्वात्। तथा चोक्तं [4]"यूनि लुक्" इति सूत्रे भाष्ये—'परम् इत्यन्यार्थक' इति। अस्य सूत्रस्यापत्याधिकारादन्यत्र पठितत्वाद् अत्रापि लौकिकमेव गोत्रं गृह्यते। तथा ह्यत्र प्रमाणमपि, [5]"अनुपसर्जनात्" इति सूत्रभाष्यम्।

तत्र हि लौकिकगोत्रमाश्रित्यैव अनन्तरापत्ये 'अवन्ती'त्यत्र जातिप्रयुक्तङीषुक्तिः सङ्गच्छते। अयमत्र प्रसङ्गः—'अनुपसर्जनादि'ति सूत्रं किमर्थमिति जिज्ञासायामुच्यते—'बहुकुरुचरा' इत्यत्र प्रातिपदिकाधिकारात् तदन्तविधिना 'टिड्ढाणञि'त्यादिना ङीप्प्राप्नोति तत्प्रतिषेधार्थमिदं सूत्रम्। नेदम्प्रयोजनं सूत्रस्य [6]"समासप्रत्ययविधौ प्रतिषेधः" इत्यनेन प्रतिषेधात्। एवं तर्हि व्यर्थं सदिदं सूत्रं ज्ञापयति—'अस्मात्सूत्रात्पूर्वं स्त्रियामित्यधिकारे तदन्तविधिर्भवति। अत एव

---

१. पा.सू. ४.१.५।

२. न्यायसिद्धान्तमुक्तावली शब्दप्रमाणम्, पृ.२९६।

३. पा.सू. ४.१.१६२; ४. तदेव-४.१.९०।

५. तदेव-४.१.१४।

६. वार्तिकमेतत्। 'येन विधिस्तदन्तस्ये'ति सूत्रे।

'अतिधीवरी', 'अतिपीवरी' इत्यत्र [१]"वनो र च' इत्यनेन रत्वं ङीप्त्वञ्च सिद्ध्यति एतदपि नास्ति प्रयोजनं [२]"शूद्रा चामहत्पूर्वा जातिः' इत्यत्रामहत्पूर्वेत्यनेनैव तदन्तविधिज्ञापनात्। ततश्च नार्थोऽस्य ज्ञापनस्य। अत्र पुनरुच्यते, यदि पारिभाषिकोपसर्जने 'अनुपसर्जनादि'त्यस्य प्रयोजनं नास्ति तदाऽप्रधानभूतप्रयोजने तस्य सार्थक्यम्। [३]यावद्ब्रूयात्प्रधानादुत्पत्तव्यम् अप्रधानान्नेति तावदनुपसर्जनादिति। किं प्रयोजनं 'आपिशलमधीते ब्राह्मणी आपिशला ब्राह्मणी। अत्र चापिशलिना प्रोक्तमिति [४]"इञश्चे'त्यणि, ततोऽध्येत्र्यां 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुकि सति टापा सिद्धिः। अत्र प्रोक्तप्रत्ययस्याण उपर्जनाद् ङीप् न भवति। ननु 'अनुपसर्जनादि'त्युक्तेऽपि ङीप् स्यात् प्रत्यये लुकि प्रकृतेरेव तदर्थाभिधानादिति चेदत्रोच्यते— [५]नानुपसर्जनग्रहणेनाणन्तं विशेष्यते अणन्तादनुपसर्जनादिति किं तर्हि? अणेव विशेष्यते—'अण्योऽनुपसर्जनमि'ति। तथा चात्र प्रोक्तार्थस्योपसर्जनत्वादर्थद्वारेणाण्प्रत्यय उपसर्जनमिति भावः। यस्त्वध्येत्र्यां प्रत्यय उत्पन्नस्तस्य लुप्तत्वात्तदाश्रयो ङीप् न भवति। प्रत्ययलक्षणेनापि न भवति 'अण् यो अकार' इति विज्ञानात्। एवन्तर्हि 'अनुपसर्जनात्' इत्यनेन प्रधानस्य ग्रहणे प्राधान्यादेव च ङीबादिप्रत्ययविधाने [६]"जातिशब्देभ्यस्त्वतिप्रसङ्गः' जातिशब्देभ्योऽपि प्रतिषेधो प्राप्नोतीति भावः। यथा 'अवन्ती' इत्यत्र [७]"इतो मनुष्यजाते'रिति ङीष् न स्यात्। अत्र हि अवन्तेरपत्यं स्त्री इत्यर्थे [८]"वृद्धेत्कोसलाजादाञ्ञ्यङ्' इत्यनेन ञ्यङि तस्य [९]"स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति लुक्। अत्र प्रत्ययार्थम्प्रति प्रकृत्यर्थस्योपसर्जनादितो मनुष्यजाते'रिति ङीप् न प्राप्नोति।

न च तस्य वैयर्थ्यं 'दाक्षि'रित्यत्र तस्य चारितार्थ्यात्। अस्य समाधानमुक्तं वार्तिककृता [१०]"सिद्धन्तु जातेरुपसर्जनात्'। अस्यायं भावः, अवन्तीत्यादयःशब्दाः उपसर्जनीभूतावन्तीत्याद्यर्थप्रतिपादका अपि जात्यर्थमपत्यरूपमनुपसर्जनीभूतमपि प्रतिपादयन्ति, तस्मात् नावन्तीत्यादिष्वतिप्रसङ्गः। [११]"प्रत्यये लुप्ते

---

१. पा.सू. ४.१.७; २. वा. २४००-२४०१।
३. महाभाष्यम् 'अनुपसर्जनादि'ति सूत्रे; ४. पा.सू. ४.२.११२।
५. महाभाष्यम्, 'अनुपसर्जनादि'ति सूत्रे।
६. वार्तिकम् 'अनुपसर्जनादि'ति सूत्रे भाष्ये।
७. पा.सू. ४.१.६५; ८. तदेव-४.१.१७१।
९. तदेव-४.१.१७६।
१०. वार्तिकम् 'अनुपसर्जनादि'ति सूत्रभाष्ये; ११. तत्रैव कैयटः।

प्रकृतिरेवापत्यलक्षणां जातिमाह, सा चानुपसर्जनमित्यर्थः'। न ह्यत्र जात्यर्थ उपसर्जनीभूतस्तस्मादनुपसर्जनीभूतजात्यर्थप्रतिपादिकत्वात् ङीष् सिद्धिः।

अत्रोद्योते भाष्यसङ्गतिपाठश्चिन्त्यो मुद्रणदोषदुष्टो वेति सुधीभिर्विभावनीयम्—तत्र ह्युक्तम् [1]"उपसर्जनार्थप्रतिपादकत्वादवन्त्यादिशब्दानामि'ति पूर्वपक्षः। [2]'उपसर्जनीभूतजात्यर्थप्रतिपादकत्वादित्यर्थः' इत्युत्तरम्।

तथा चात्र प्रसङ्गे 'अवन्ती'त्यत्राऽनन्तरापत्येऽपि जातौ ङीष्-निषेधादनन्तरापत्यर्थकमेव गोत्रं जातिं लभत इति लभ्यते।

**नवीनमते प्रमाणम्**

'अपत्यं पौत्रप्रभृतिगोत्रम्' इति सूत्रोक्तं शास्त्रीयमेव गोत्रमत्र जातिलक्षणे गृह्यत इति नवीनाः। अत्र प्रमाणम् 'एको गोत्रे' इति सूत्रस्थं भाष्यमेव। तथा चायन्तत्र प्रसङ्गः—'एको गोत्रे' इति सूत्रस्य नियमत्वे स्त्रियां युवत्यां नियमो न प्राप्नोति। तथा हि—पौत्रप्रभृतेरपत्यं स्त्रीति विवक्षायां युवसंज्ञया गोत्रसंज्ञाया बाधनात् स्त्रियाः पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा नास्तीत्येको गोत्रे इत्येष नियमो नास्ति। [3]'गोत्राद्यून्यस्त्रियाम्' इति अस्त्रियामिति निषेधाद् गोत्राद्यूनीत्यपि नास्ति नियमः। तथा च स्त्रियां विवक्षितायामनेकप्रत्ययप्रसङ्गः। एष अनियमप्रसङ्गः सर्वेष्वपत्ययुक्तेषु भवति। सर्वतो ह्यप्रत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्। तत्र नियम उपपद्यते 'एको गोत्रे' 'गोत्राद्यून्यस्त्रियाम्' इति। अत्र अस्त्रियामिति निषेधात् स्त्रियां युवत्यां नियमो न प्राप्नोति, उक्तयुक्तेः। अस्मिन् पक्षे 'अनियम' इत्यस्य 'एको गोत्रे' इति सूत्रनियमस्याप्राप्तिरित्यर्थः।

नन्वस्ति पक्षान्तरमपि [4]"उत्पादयितरि चापत्ययोगः। तस्मिन् सर्वत उत्पत्त्या भवितव्यमिति। एकस्या एव प्रकृतेरेक एव प्रत्ययः प्राप्नोति, न त्वनेकस्तदा सूत्रद्वयं नैव नियमार्थं किन्तर्हि विध्यर्थमिति'। ततो नास्मिन्पक्षे 'स्त्रियां चानियमः' इति चेन्न, तत्पक्षे 'अनियम' इत्यस्याभिधानाप्राप्तिरित्यर्थः। अस्यायं विस्तरः—'अस्त्रियाम्' इति निषेधः 'एको गोत्रे' 'गोत्राद्यून्यस्त्रियाम्' इत्यनयोः शास्त्रयोः नियमत्वे सति भवति। तथा च स्त्रियां युवसंज्ञानिषेधात्, गोत्रापत्ये बहुप्रत्ययेषु एकावशेषे एकेनैव प्रत्ययेन युवत्या अभिधानं भवति। यथा गर्गस्य गोत्रापत्यं युवती इति गर्गस्य पञ्चमादावपत्ये युवत्यां विवक्षितायां

---

१. वार्तिकम् 'अनुपसर्जनादि'ति सूत्रभाष्ये तत्रैव उद्योतः।

२. अत्र उक्तकैयटोक्ते'रनुपसर्जनीभूत' इति पाठेन भाव्यम्।

३. पा.सू. ४.१.९४; ४. 'एको गोत्रे' इति सूत्रीयं भाष्यम्।

गोत्रापत्येऽर्थे फगिञ्सु चतुर्षु प्रत्ययेषु प्राप्तेषु 'एको गोत्रे' इति नियमेन एकस्मादेव यञः, 'अस्त्रियाम्' इति निषेधात् युवसंज्ञायाः, युवत्या अभिधानं भवति। ततश्च स्त्रीत्वविवक्षायां गार्ग्यशब्दात् [१]"प्राचां ष्फः तद्धितः' इत्यनेन ष्फे [२]"षिद्गौरादिभ्यश्च' इत्यनेन ङीषि 'गार्ग्यायणी' इति सिद्ध्यति। इदमेवात्र 'एको गोत्रे' इत्येतन्नियमपूर्वकं स्त्रिया गोत्रप्रत्ययेनाभिधानम्[३]। उत्पादयितरि चापत्ययुक्ते पूर्वोक्तेः प्रत्ययानेकाप्राप्ते 'एको गोत्रे' इति नियमाभावात् नियमपूर्वकं स्त्रियां गोत्रप्रत्ययेनाभिधानं न प्राप्नोति। अयमेवात्र नियमो विवक्षितः। न तु नियमशास्त्रप्राप्तिरूपो यो ह्युक्तः पूर्वस्मिन् पक्षे।

न च यदोत्पादयितुरेवापत्येन योगे नान्यस्य, तस्मिंश्च विवक्षिते एकस्या एव प्रकृतेरेक एव प्रत्ययः प्राप्नोति, न त्वनेकस्तदा सूत्रद्वयं नैव नियमार्थं किं तर्हि विध्यर्थमिति किमुच्यते 'स्त्रियां चानियम' इति वाच्यम्, अनयोर्विधित्वेऽपि गोत्रसंज्ञाया युवसंज्ञया बाधादभिधानाप्राप्तेरुक्तरूपेण। तथा च गार्ग्यप्रकृतिकफकोऽपि स्त्रिया युवत्या अभिधानं प्राप्नोति। ननु 'अस्त्रियाम्' इति योगविभागेन स्त्रियां युवत्वनिषेधे गोत्रप्रत्ययान्तगार्ग्यशब्देन युवत्याः स्त्रिया अभिधानं भविष्यतीति चेन्न, योगविभागसामर्थ्याद् गोत्रादेव यूनीत्यस्य नियमस्य निषेधाभावेऽपि प्राधान्याद्युवप्रत्ययस्यैव निषेधो न तु युवसंज्ञायाः तेन च युवसंज्ञया गोत्रसंज्ञाया बाधादत्र गोत्रलक्षणप्रत्ययाप्राप्तेः। स्त्रिया युवत्या अभिधानस्य तदवस्थत्वात्। गोत्रप्रत्ययाभावे कः प्रत्ययो भविष्यतीति न प्रष्टव्यम्, अपत्यसामान्यलक्षण एव प्रत्ययविधानात्।

अस्यां स्थितौ कश्चित्पूर्वपक्षी प्रौढ्या वदति—'गोत्राद्यून्यस्त्रियाम्' इत्यस्यायमर्थो कर्त्तव्यः; गोत्राद्यूनि प्रत्ययो भवति, ततः स्त्रियां लुक्।तेन 'गार्ग्य' शब्दात्फको लुकि कृते यञाश्रयं रूपद्वयं 'गार्गी' 'गार्ग्यायणी'ति च सिद्ध्यति। तत्रोच्यते—एवमप्यौपगवी माणविका। 'अनुपसर्जनादि'ति ईकारो न प्राप्नोति। अयमस्य विस्तरः—औपगवस्यापत्यं स्त्री इत्यर्थे [४]"अत इञ्' तस्य 'स्त्रियां लुक्' इत्यनेन लुकि कृते अनुपसर्जनाधिकारादणः गोत्रार्थकस्य युवप्रत्ययार्थम् इञर्थम्प्रति अर्थद्वारेणाप्रधानीभूतत्वात्, अत एव 'टिड्ढाणञि'-त्यादिना अण्योऽनुपसर्जनमित्यण्लक्षणो ङीब् न स्यात्। अस्मिन्नेवावस्थितपक्षे उत्तरयति—माभूदेवमण्णन्तादनुपसर्जनादित्येव भविष्यति। 'यः शिष्यते स लुप्यमानार्थाभिधायी'ति न्यायेन प्रत्यये लुप्ते प्रकृतिरेव प्रत्ययार्थमाहेति

---

१. पा.सू. ४.१.७७; २. तदेव-४.१.४१।
३. 'एको गोत्रे' इति सूत्रीयं भाष्यम्; ४. पा.सू. ४.१.९५।

अण्णन्तस्यानुपसर्जनत्वमिति भावः। अणन्तं हि प्रधानीभूतार्थं युवत्वं बोधयति। तस्मादनुपसर्जनमिति। ततोऽग्रे तत्रैव भाष्ये उक्तम्, यदत्र प्रमाणीक्रियते—[१]"इह तर्हि' औपगवी माणविका भार्या अस्य औपगवीभार्यः। जातिलक्षणपुंवद्भाव-प्रतिषेधो न प्राप्नोति। 'औपगवी'त्यत्र उक्तयुक्त्या युवसंज्ञया गोत्रसंज्ञाया बाधात्, गोत्रसंज्ञाया अभावे जातित्वाभावात् 'जातेश्च' इत्यनेन पुंवद्भावप्रतिषेधो न स्यादिति भावः। मा भूदेवं [२]"वृद्धिनिमित्तस्य च तद्धितस्याविकारे' इत्यनेन भविष्यति। यस्तर्हि न वृद्धिनिमित्तः ग्लुचुकायनी माणविका भार्या अस्य 'ग्लुचुकायनीभार्य' इत्यत्र जातिलक्षणपुंवद्भावप्रतिषेधो न स्यात्। ग्लुचुकस्यापत्यमिति विग्रहे [३]"प्राचामवृद्धात्फिन् बहुलम्' इत्यनेन फिन्प्रत्यये ततो यूनि अणि तस्य 'स्त्रियां लुक्' इति विभागेन लुकि क्रियमाणे जातित्वाभावात् 'इतो मनुष्यजाते'रिति पुंवद्भावप्रतिषेधो न प्राप्नोति।

अत्र 'गोत्रञ्च चरणैः सहे'त्यत्र गोत्रशब्देन यदा पारिभाषिकं पौत्रप्रभृति गृह्यते, तदैव 'औपगवीभार्यः', 'ग्लुचुकायनीभार्य' इत्यत्र च युवापत्यस्य जातित्वाभावकथनं सङ्गच्छते, अन्यथा प्राचीनमते लौकिकापत्यमात्रे जातित्वस्य सत्त्वात् 'टिड्ढाणञि'त्यपेक्षया जातिलक्षणो ङीष् एव वक्तुमुचितं स्यात्। 'गोत्रञ्च चरणैः सहे'त्यत्र गोत्रशब्दस्यापत्यमात्रग्रहणे 'औपगवीभार्य' इत्यत्र जाति-लक्षणङीष् पुंवद्भावप्रतिषेधसिद्धेः, 'पुंवद्भावप्रतिषेधो न प्राप्नोती'ति भाष्या-सङ्गतिश्च स्यात्।

'ग्लुचुकायनीभार्य' इत्यत्र 'सर्वतोऽक्तिन्नर्थादित्येके' इति वार्तिकेन तु ङीषि पुंवद्भावप्रतिषेधसिद्धेर्न दोषः।

[४]अत एव (जातौ पारिभाषिकगोत्रग्रहणादेव) [५]"ब्राह्मो जातौ' इति सूत्रेऽपत्ये जातौ नेत्यर्थः सङ्गच्छते। अपत्यमात्रस्य जातित्वे तु अपत्यस्य जातित्वत्वाव्यभिचारात्तदसङ्गतिः 'ब्राह्मो नारदः' इत्यसिद्धिश्च स्यात्। अस्येदं प्रसङ्गपुरस्सरं विवेचनम्—अस्य सूत्रस्य योगविभागः क्रियते। 'ब्राह्म' इत्येकं सूत्रम् 'जातौ' चेत्यपरम्। एकयोगे तु ब्राह्मशब्दादपत्ये अणि [६]"न-म-पूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावनिषेधो जातावेवेत्यर्थः फलति। तथा सति, ब्रह्मणोऽपत्यं 'ब्राह्मण' इति जातिविशेषो न सिद्ध्येत्। 'न मपूर्वे'त्यादिना

१. 'एको गोत्रे' इति सूत्रे भाष्यम्, पृ. १४०।
२. पा.सू. ६.३.३९;
३. तदेव-४.१.१६०।
४. लघुशब्देन्दुशेखरे 'जातेरस्त्री'त्यादि सूत्रे।
५. पा.सू. ६.४.१७१;
६. तदेव-६.४.१७०।

प्रकृतिभावनिषेधे सति [१]"नस्तद्धिते' इति टिलोपस्य दुर्वारत्वात्। 'ब्राह्म' इति स्यात्। किञ्च, ब्रह्मा देवता अस्य ब्राह्मं हविरिति न सिद्ध्येत्, 'न मपूर्वे'त्यादि-प्रकृतिभावनिषेधस्य जातावेवेति नियमितत्वेन [२]"अन:' इति प्रकृतिभावाट्टिलोपासम्भवात्। 'ब्राह्मण' इति स्यात्। इयं महती अनिष्टापत्तिः स्यात्। योगविभागे तु सर्वेष्टापत्तिः। तथा हि—[३]ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते—'ब्राह्मो नारदः' 'ब्राह्मो मुहूर्तः' 'ब्राह्मः स्थालीपाक' इति। अत्र क्रमेण 'तस्यापत्यम्' [४]"तस्येदम्' [५]"साऽस्य देवता' इत्यण्। जातौ त्वपत्ये 'ब्राह्मण' इतीष्यते। अनपत्ये तु जातौ 'ब्राह्मी ओषधि'रिति टिलोप इष्यते। तस्माद् योगविभागः क्रियते। तत्र 'ब्राह्म' इत्यत्र सामर्थ्याद् 'अपत्य' इति न सम्बध्यते। अपत्ये टिलोपस्य 'न मपूर्वे'त्यादिना सिद्धत्वादनेनानपत्ये सर्वत्र जातावजातौ च 'ब्राह्म' इति निपात्यते, अपत्ये च जातावेव टिलोपनिषेधात्, अर्थात् प्रकृतिभावात् 'ब्राह्मण, इति सिद्ध्यति। जातिभिन्ने चापत्ये 'ब्राह्मो नारद' इत्यत्र परत्वाद् 'ब्राह्म' इत्यनेनैव टिलोपो भवति।

अपत्यमात्रस्य जातित्वे प्राचीनमते स्वीकृते सति 'ब्राह्मो नारद' इत्यत्रापि जातित्वं स्यात्। तत्रापत्येऽणि विधानात्, तेन तत्र टिलोपाभावे 'ब्राह्मणो नारद' इति स्यात्। किञ्च, अपत्यस्य जातित्त्वाव्यभिचारात् 'अपत्ये जातावि'ति कथनमग्निरुष्ण इतिवद् व्यर्थविशेषणं स्यात्। पारिभाषिकगोत्रस्य जातित्वे तु अत्र तस्य प्रसङ्ग एव नास्ति इति सर्वं सुस्थम्। जातावित्यनेन च मनुष्यजातिरेव गृह्यते, न तु लाक्षणिकीति। अत एवोक्तमुद्योते—[६]"अत्र मनुष्यजातिनिषेधे ब्राह्मणशब्दप्रयोगस्येष्टत्वात्तत्रैव पर्युदासः फलति। इष्टिमात्रमेतत्, न तु लक्षणेनायमर्थो लभ्यते।

अपत्याधिकारादन्यत्र लौकिकमपत्यमात्रमेव गोत्रं गोत्रशब्देन गृह्यते। अस्य 'गोत्रञ्च चरणैः सह' इत्यस्य अपत्याधिकारादन्यत्र विद्यमानात् लौकिकमेव गोत्रं गोत्रशब्देन ग्राह्यमिति प्राचीनोक्तिर्न युक्ता। यतो ह्यपत्याधिकारादुत्तरत्रैव लौकिकं गोत्रं गोत्रशब्देन गृह्यते। नान्यत्रेति पारिभाषिकगोत्रप्रत्ययान्त एव जातिकार्यं लभते न त्वपत्यप्रत्ययान्तः। 'गोत्रञ्च चरणैः सह' इति वचनस्यापत्याधिकारात्पूर्वभावित्वात्। तथा चापत्यार्थे 'औपगवी'ति ङीबन्त एव प्रयोगः, तस्य जातित्वाभावान्न ङीष्।

---

१. पा.सू. ६.४.१४४; २. तदेव-६.४.१६७।
३. 'ब्राह्मो जातावि'ति सूत्रे कैयटः।
४. पा.सू. ४.३.१२०; ५. तदेव-४.२.२४।
६. 'ब्राह्मो जातावि'ति पाणिनिसूत्रे, ६.४.१७१ उद्योतः।

न चा'नुपसर्जनादि'सूत्रभाष्यविरोध इति वाच्यम्, 'अवन्ती'-त्यादावनन्तरापत्ये गोत्रत्वादावपि सिद्धेः। यथा द्रोणस्यानन्तरापत्ये 'अश्वत्थाम्नि' 'द्रौणायनि' इति प्रयोग उपचारात्सिद्ध्यति। अत्र हि द्रोणस्यानन्तरापत्यं पुमानिति विग्रहे [1]'द्रोणपर्वतजीवन्तरादन्यतरस्याम्' इत्यनेन गोत्रे विकल्पेन फग्न भवितुं शक्यते, यतो हि तत्र द्रोणः कश्चिदनादिर्महाभारते प्रसिद्धादन्यो गृह्यते। सूत्रे प्राप्तानाञ्च शब्दानां सूत्रोपात्ताल्लोकविदितादर्थादन्यत्र प्रयोगनिषेधः [2]'बाह्वादिभ्यश्च' इति सूत्रे भाष्ये कृतः। तथापि यदि अश्वत्थाम्नि द्रोणायन-प्रयोगः क्रियते तर्ह्यारोपित इति। तद्वदत्रापि आरोपितप्रयोगो विज्ञेय इति। ननु तव नवीनमतेऽपि 'ग्लुचुकायनीभार्य्ये'त्यादावेव कथन्न गोत्रत्वारोपः, अस्मादेव प्रमाणादिति चेन्न, तत्र 'युवैव न गोत्रम्' इति नियमेन तत्सञ्ज्ञानिषेधात्।

**उभयमतसमीक्षणम्**

अत्रेदं विचारयामः 'शास्त्रीयमेव गोत्रं गृह्यत' इति नवीनमते 'एको गोत्रे' इति सूत्रस्थं भाष्यं प्रमाणम्। 'लौकिकमेव गोत्रमि'ति प्राचां मते तु 'अनुपसर्जनात्' इति सूत्रस्थं भाष्यं प्रमाणम्। उभयमततुल्यत्वात् कस्य मतं समीचीनमिति।

यत्तु नवीनैः प्राचीनमते 'एको गोत्रे' इंति सूत्रभाष्ये 'औपगवी माणविके'त्यत्र जातिलक्षणङीषापत्तिरापादिता तत्र, प्राचीनमतेऽप्यनुपसर्जनलक्षण ईकारो न प्राप्नोतीत्युक्तेः सामञ्जस्यात्तथा हि—श्रूयमाणोऽनुपसर्जनं यो गोत्र-प्रत्ययस्तदन्तस्य जातित्वमित्यर्थेन लौकिकगोत्रस्य ग्रहणेऽपि 'औपगवी माणविके'त्यत्र श्रूयमाणस्याणोऽनुपसर्जनत्वाभावेन जातित्वाभावाज्जाति-लक्षणङीषः प्रसङ्गाभावादनुपसर्जनलक्षण ईकारो न प्राप्नोतीत्युक्तम्। 'ईकार' इत्यनेन 'टिड्ढाणञि'ति ङीपो ग्रहणम्। 'औपगवीभार्ये'त्यत्रापि एवं रीत्यैव जातित्वाभावकथनम्, न तु शास्त्रीयगोत्रत्वस्य स्वीकारेण।

यत्तु पारिभाषिकगोत्रग्रहणे 'ब्राह्मो जातावि'त्यत्रापत्ये जातौ टिलोपो नेत्यर्थसङ्गतिः, 'ब्राह्मो नारद' इति प्रयोगसिद्धिश्च प्रमाणम्। अन्यथाऽप्रत्यय-मात्रग्रहणेऽपत्यस्य जातित्वावश्यम्भावादपत्ये जातौ टिलोपो नेत्यर्थासङ्गतिः, तत्र, 'ब्राह्मो जातावि'त्यत्र जातिग्रहणसामर्थ्यादाकृतिग्रहणेत्याद्यनतिदिष्ट-जातिग्रहणम्। 'जातावि'त्यस्य समुदायोपाधितयाऽपत्यप्रत्ययान्तेन ब्राह्मणत्वरूप-जातावगम्यायामित्यर्थस्य तवाप्यवश्यं वक्तव्यतयाऽदोषात्। अन्यथा नवीनस्य तव मते शूद्ररूपे ब्रह्मणोऽपत्ये विवक्षिते 'ब्राह्मण' इत्यापत्तेः। अत्र जाताविति

---

१. पा.सू. ४.१.१०३; २. तदेव-४.१.९६।

निषेधेन टिलोपाप्राप्तेः। प्राचीनस्य मम मते तु शूद्रे वाच्ये समुदायेन ब्राह्मणत्वं नावगम्यते। एवञ्च तत्र 'जातावि'ति निषेधाप्रवृत्त्या टिलोपे 'ब्राह्म' इत्येव भवति। 'ब्राह्मो नारद' इति च अजातावेव, नारदे नहि ब्राह्मत्वं जातिः। ब्रह्मणोऽपत्यत्वेन ब्राह्मत्वस्य जातित्वे हि चाण्डालादेरपि तत्त्वापत्तिरित्याहुः।

'अवन्ती'त्यादौ 'द्रोणायनिरि'त्युदाहरणेन गोत्रत्वारोपोऽपि न सम्यक्, तत्र हि उक्तभाष्यवार्तिकयुक्त्या अन्यार्थे विदितस्य शब्दस्यान्यत्रार्थे प्रयोगे आरोपः। प्रयोग आरोपकारणम्। अत्र तु उक्तयुक्तेः अन्यार्थे सम्भवत्यपि प्रवृत्तिनिमित्तं मुधैव प्रौढ्या आरोप्य प्रयोगोपपत्तिः साध्यत इति।

नन्वेवं साधकबाधकयुक्त्या उभयमतसिद्धे कतरः पक्षः श्रेयान्? 'औपगवी'ति मूलोक्तोदाहरणस्य विग्रह उपगोरपत्यं स्त्रीति, उपगोर्गोत्रापत्यं स्त्रीति वेति जिज्ञासायामुच्यते—विरुद्धानुरोध्युभयविधभाष्योपलब्धेर्नवीनमतमेव साधुतरम्। तत्र हि विरुद्धन्तु भाष्यम् 'अनुपसर्जनात्' इति सूत्रस्थमुक्तमेव। अनुरोधिभाष्यन्तु [1]"फाण्टाहृतिमिमताभ्यां णफिञौ" इति सूत्रस्थम्। तथा हि तत्र भाष्यम्—[2]"किमर्थो णकारः? वृद्ध्यर्थः। 'ञ्णिती'ति वृद्धिर्यथा स्यात्। फाण्टाहृतः। 'फाण्टाहृतेः प्रत्यस्य णित्करणमनर्थकं वृद्धत्वात्प्रातिपदिकस्य'। वृद्धमेवैतत्प्रातिपदिकमिति भावः। 'पुंवद्भावप्रतिषेधार्थन्तु' पुंवद्भावप्रतिषेधार्थं णकारः कर्त्तव्यः। फाण्टाहृता भार्या अस्य 'फाण्टाहृता भार्यः'। 'वृद्धि-निमित्तस्ये'ति पुंवद्भावप्रतिषेधो यथा स्यात्। अत्र हि शास्त्रीयगोत्रस्यैव जातिलक्षणे ग्रहणादेव न जातिलक्षणो ङीष्। न च 'जातेश्चे'ति पुंवद्भाव-प्रतिषेधसिद्धेर्णकारकरणप्रयोजनमिति प्रतिपादयति।

ततश्च 'औपगवी'त्युदाहरणं मूलोक्तम् उपगोर्गोत्रापत्यं स्त्रीत्यस्मिन्नेवार्थे अनन्तरापत्यार्थे तु 'टिड्ढाणञि'त्यादिङीबेव। आहोस्विदारोपितगोत्रत्वाद् ङीषपि भवेत्, का हानिः।

**जातौ नागेशस्य विशेषोक्तिः**

वैयाकरणशिरोमणिना श्रीमता नागेशेन 'आकृतिग्रहणा जातिः लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्येति समष्ट्या एकमेव लक्षणं स्वीक्रियते, न तु लक्षणद्वयम्। आकृतिपदम् उपदेशोपलक्षणम्। तस्मादाकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरि'ति लक्षणम्। तत्र ईदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजातिः। 'अयं ब्राह्मण' इति साक्षादुपदेशग्राह्या ब्राह्मणत्वजातिः। यत्र

---

१. पा.सू. ४.१.१५०; २. तत्र सूत्रे भाष्यम्।

समानाकारोपदेशेन जातित्वग्रहस्तत्रोपदेशेन ग्राह्या जातिः। यत्र आश्रयोपदेशेन जातित्वग्रहस्तत्र साक्षाद् ग्राह्या जातिरिति विवेकः।

नन्वेवं शुक्लादिगुणानामपि जातित्वं दुर्वारम्, 'अयं शुक्ल' इत्युपदेशग्राह्यत्वादिति चेदत्राभिधीयते—जातिग्राहकोपदेशस्यैवोपलक्षणन्तत्। स चोपदेश ईदृशाकारो गौरिति, अयं ब्राह्मण इति च। 'अयं शुक्लः' इत्यादिश्च गुणग्राहकोपदेशः।

न च जातिलक्षणे जातेः प्रवेशादात्माश्रय इति वाच्यम्, उपदेशविशिष्टत्वं जातिग्राहकोपदेशत्वम्। वैशिष्ट्यञ्च—स्वतादात्म्यस्वप्रयोजकेच्छीयज्ञान-निष्ठोद्देश्यतानिरूपितावच्छेदकतासमानाधिकरणा या विशेष्यत्वासमानाधिकरणा प्रकारता तादृशप्रकारताकज्ञानजनकत्वोभयसम्बन्धेन। 'अयं ब्राह्मणः' 'ईदृशाकारो गौरि'त्याकारको यो वृद्धोपदेशः तत्प्रयोजिकाया 'अस्य गोत्वज्ञानं जायतामि'-त्याद्याकारिका इच्छा, तादृशेच्छीयोद्देश्यता गोत्वविषयकज्ञाने, तन्निरूपिता-वच्छेदकता विषयित्वसम्बन्धावच्छिन्ना गोत्वे तादृशावच्छेदकतासमानाधिकरणा तादृशोपदेशजन्या च 'अयं गौरि'त्याकारकज्ञानीयप्रकारताख्या विषयता गोत्वनिष्ठा सा च विशेष्यत्वासमानाधिकरणापीति तन्निरूपकज्ञान-जनकस्योक्तोपदेशस्य ग्रहणम्। 'अयं शुक्ल' इत्याद्याकारकोपदेशजन्यज्ञानीया शुक्लादिनिष्ठा तादृशोपदेशप्रयोजकेच्छीयोद्देश्यतावच्छेदकतासमानाधिकरणा प्रकारता न विशेष्यत्वासमानाधिकरणा, अपि तु गुणत्वव्याप्यशुक्लत्वनिष्ठ-प्रकारतानिरूपितविशेष्यतासमानाधिकरणैवेति नात्र तादृशोपदेशस्य जाति-ग्राहकोपदेशपदेन ग्रहणमिति तत्त्वम्। न चायमभाव इत्याकारकोपदेश-ज्ञानीयाभावत्वनिष्ठप्रकारतायास्तादृशत्वात्तन्निरूपकज्ञानजनकस्य 'अयमभाव' इति ज्ञानजनकोपदेशस्यापि ग्रहणापत्तिरिति वाच्यम्, अभावत्वस्यानुयोगिता-विशेषरूपत्वेन तन्निष्ठप्रकारताया विशेष्यत्वासमानाधिकरणत्वाभावादित्याहुः।

ननु 'जातिग्राहकोपदेशग्राह्या जातिरि'ति लक्षणे किं 'लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्ये'ति अंशो व्यर्थः? अत्राभिधास्यामस्तत्र हि 'लिङ्गानाञ्च न सर्वभाग्' इत्यंशो [1]"विशेषणानाञ्चाजातेः' इति सूत्रभाष्ये जातेर्यत्स्वरूपमुक्तम् 'आविष्टलिङ्गत्वमि'ति तस्यानुवादकः। 'आविष्टलिङ्गत्वं नियतलिङ्गत्वमि'ति वदता कैयटेन[2] जातेरसर्वलिङ्गत्वमनुमोदितम्। न च जातिशब्दा अनियतलिङ्गा अपि दृश्यन्ते यथा 'तटं त्रिष्वि'ति चेत्, उक्तभाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता। तटं त्रिष्वित्यादि तु कोशकृतां प्रमाद एव। अथवा आविष्टलिङ्गत्वं प्रायिकमिति न दोषः।

१. पा.सू.१.२.५२; २. तत्रैव कैयटः।

'सकृदाख्यातनिर्ग्राह्या' इत्यंशेनैकत्वमनेकानुगतत्वञ्च बोधितम्। तदित्थम्—सकृद् = एववारं क्वचिद् व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्या जातिरिति पूर्णं लक्षणं फलति।

'गोत्रञ्च चरणैः सह' इति तु प्राग्वदेवातिदेशिकं जातिलक्षणम्।

तस्माच्छ्लोकोक्तलक्षणद्वयमेकस्मिन् सङ्ग्राह्य गोत्वब्राह्मणत्वयोः सङ्ग्रहादेवोभयसङ्ग्राहकं लक्षणान्तरमुक्तम्—'प्रादुर्भावविनाशाभ्यामि'त्यादि। अस्यार्थः कैयटेनोक्तम्—सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां जातौ प्राप्नोति सा जातिरिति जातिलक्षणम्। यावद्द्रव्यभाविनीति तदर्थः। अनेन गोत्वब्राह्मणत्वयोरुभयोरपि संग्रहः। सा जातिः गुणैर्युगपद्द्रव्येण सम्बध्यते। तथा च, यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा नातिरहितस्यापीति। अत्र लक्षणे 'असर्वलिङ्गमि'त्येतत्पूर्ववदेव न तु लक्षणान्तरम्, अनुपयोगात्पूर्वयुक्तेरेव। 'बह्वर्थमि'त्यस्य सर्वव्यक्तिव्यापिनीमित्यर्थः।

गोत्वब्राह्मणत्वोभयसङ्ग्राहकैतल्लक्षणैकवाक्यादेव पूर्वोक्तमप्येकमेव लक्षणमुभयसङ्ग्राहकम्—सकृद् = एकवारं क्वचिद् व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्या जातिरिति। एकलक्षणत्वादेव[1] 'कः पुनरेतयोर्जातिलक्षणयोर्विशेषः। यथा पूर्वलक्षणं तथा 'कुमारीभार्य' इति भवितव्यम्, यथोत्तरं तथा 'कुमारभार्य' इति भाष्ये 'लक्षणम्' इत्येकवचनमेव प्रयुक्तम्'[2]। 'आकाडार'सूत्रे च भाष्ये 'आकृतिग्रहणा जातिः' इत्येवोक्तं लक्षणम्।

ननु 'लिङ्गानाञ्च न सर्वभाक्' इत्यस्य लक्षणान्तराभावेऽपि 'गोत्रञ्च चरणैः सह' इत्यस्य विद्यमानत्वाद् एकमेव जातिलक्षणमिति व्याहतं वच इति चेन्न, तस्यारोपादेव सिद्धेः, अर्थात्—गोत्रचरणयोरारोपित्ता जातिर्वक्तव्या। तत्रोक्तलक्षणासङ्गतेः।

न च 'प्रादुर्भावे'त्यादिलक्षणान्तरत्वे न लक्षणैकत्वसिद्धिरिति वाच्यम्, तस्य पूर्वोक्तलक्षणाभिन्नत्वात्। अत एवैतद्भाष्यप्रदीपोद्योतयोर्निष्कर्षभूतं वचनं श्रीमतां नागेशाचार्याणाम्।

**निष्कर्षः**

वस्तुतस्तु 'भिन्नेष्वभिन्नं च्छिन्नेष्वच्छिन्नमि'ति पस्पशास्थभाष्यबोधितं नित्यत्वे एकत्वे च सत्यनेकानुगतत्वमेव जातिलक्षणं भाष्यसम्मतं ब्राह्मणत्वघटत्वादिसाधारणम्। शुक्लादीनां नित्यैकत्वमतेऽप्यौपाधिकभेदेनानेकत्व-

---

१. जातेरस्त्री. सूत्रे भाष्यम्; २. पा.सू.१.४.१।

व्यवहाराभावाच्च न जातित्वम्। अत एव[१] 'जात्याख्यायाम्' इति सूत्रे 'यत्तद् व्रीहौ व्रीहित्वं गार्ग्ये गार्ग्यत्वं तस्यैकत्वादेकवचनम्' इति भाष्योक्त्या तत्र जातित्वारोपो दर्शितः। 'गोत्रञ्च चरणैः सहे'त्ययमपि तयोस्तत्त्वारोपबोधकमेव। डित्थत्वादौ तु न तत्त्वारोपः, जातिकार्यादर्शनात्। वयस्यपि जातित्वारोपः कार्यानुसारेण व्यवस्थितः अत एव 'युवजानिः' 'युवतितरा' इति तद्विषयरूपद्वयसिद्धिः। 'अवन्ती'त्यादौ गोत्रत्वारोपवत्। तस्मादेव, 'लिङ्गानाञ्च न सर्वभाक्, सकृदाख्यातनिर्ग्राह्या' 'गोत्रञ्च चरणैः सह' इत्यनयोर्लक्षणयो-र्व्याख्यानलेशोऽपि भगवता भाष्यकारेण नाकारि। तथा हि, 'कः पुनरेतयो-र्लक्षणयोर्विशेष' इति भाष्यप्रवृत्तिः 'आकृतिग्रहणे'त्येव लक्षणमाश्रित्य सम्पद्यते। अन्यत्रापि एतस्यैवोपयोगः कृतः।

अस्मिन्सूत्रे 'जातेरि'ति पदस्य फलं 'मुण्डा' इति। मुण्डगुणयोगान्मुण्डा। मुण्डत्वन्नाम विलुप्तसर्वकेशम्। तत्तु नाकृतिग्रहणं केशदशायामपि तदाकृति-सत्त्वात्। अतो न जातिरिति। तदभावे ऽत्वत्रापि स्यादेव। 'अस्त्रीविषयादि'त्यनेन 'बलाका' व्यावर्त्यते। अयं बलाकाशब्दः विसकण्ठिकापदवाच्यजातिविशेषवाची। बलाकात्वस्य आकृतिव्यङ्ग्यतया जातित्वेऽपि नियतस्त्रीलिङ्गत्वान्न ङीष्। ननु 'बलं कायती'ति विग्रहे यौगिकोऽयं शब्दः सर्वलिङ्ग इति ङीषापत्तिरिति चेदत्रोच्यते—'अस्त्रीविषयादि'त्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितादित्यर्थः। जातिविशेषेऽयं शब्दः लिङ्गान्तररहितः। ततो न दोषः। 'क्षत्रिये'त्यादौ ङीषाभावोऽयोपधादिति वचनादिति शम्।

●

---

१. पा.सू. १.२.५८।

# व्याकरणशास्त्रे परिसंख्या

**डॉ. दिव्यचेतनब्रह्मचारी**
अतिथि-प्राध्यापकः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
दत्तात्रेयमठः, नारदघट्टः
वाराणसी



समेषाम् ऋषिमुखोच्चरितानां शब्दानां साधुत्वान्वाख्यानाय प्रवृत्तोऽयं व्याकरणशास्त्रविशेषः, प्रयुक्तानामन्वाख्यानमित्यभ्युक्तव्यवहारात्। तेषां शब्दानां साधुत्वं व्याकरणप्रतिपादनेनैव समायाति। तद्व्याकरणशास्त्रम् ऋषिप्रयुक्तेषु शब्देषु सूत्रमाध्यमेन साधुत्वं संस्थापयति। तत्र हि सूत्रलक्षणमित्थम्—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः[1]॥

एतस्यायमर्थः—सूत्रं विदन्ति जानन्ति ये ते सूत्रविदः, सूत्रज्ञा महर्षयः, अल्पान्यक्षराणि यस्मिन् सूत्रे तदल्पाक्षरम्, स्वल्पवर्णकमित्यर्थः। असन्दिग्धम्—नास्ति सन्देहो विरुद्धकोटिद्वयावगाहिज्ञानं यस्मिन् तदसन्दिग्धम्, सन्देहशून्यमित्यर्थः। सारवत्—तत्त्वयुक्तम्। विश्वतोमुखम्—विस्तृतमुखम् अर्थाद् अपवादादिकं निरस्य प्रणीतं सर्वत्रान्वयम्। अस्तोभम्—नास्ति स्तोभं स्तम्भनं यस्मिन् तदस्तोभम् अर्थाद् अर्थावगतिप्रतिबन्धक-निरर्थकशब्दरहितम्। अनवद्यम्—अवद्यं दोषः तद्रहितं निर्दोषमित्यर्थः। विदुः—जानन्ति। अल्पाक्षरत्वम्—प्रतिपादयिषितार्थविषयबोधजनकप्रकारान्तरापेक्षया न्यूनवर्णात्मकम्। असन्दिग्धत्वम्—स्वगतसन्देहनिवर्तकप्रमाणान्तरानपेक्षत्वम्। अस्तोभत्वम्—झटित्यर्थबोधजनकत्वम् अनिरर्थकत्वं वा। अनवद्यत्वम्—पारायणेनाप्यदृष्ट-जनकत्वम् इति सूत्रस्वरूपम्, तच्च व्याकरणशास्त्रे षड्विधम्। तथा हि—

---

१. अग्निपुराणे।

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥

अस्मिन् पद्ये लक्षणपदं स्वरूपपरं न त्वसाधारणरूपलक्षणपरम्। अत्र क्रमेण षड्विधसूत्राणां लक्षणानि यथाधीतानि प्रस्तूयन्ते—

**संज्ञासूत्रलक्षणम्**—शक्तिनियामकत्वं संज्ञासूत्रत्वम्, यथा 'वृद्धिरादैच्'[१] इत्यत्र आदैच्-निरूपित-शक्तिः वृद्धिपदे इति तत्सूत्रस्य शक्तिनियामकत्वेन लक्षणसमन्वयो भवति।

**परिभाषासूत्रलक्षणम्**—शक्तिग्राहकभिन्नत्वे सति शब्दधार्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारितया पाणिन्युच्चरितत्वम्। यथा—'इको गुणवृद्धी'[२] इदं शास्त्रं शक्तिग्राहकभिन्नत्वविशिष्टं सत् शब्दधार्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दित-बोधविषयकज्ञानसहकारितत्वं पाणिन्युच्चरितत्वं चास्ति इति कृत्वा भवत्यत्र लक्षणसमन्वयः।

**विधिसूत्रलक्षणम्**—साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वम्। यथा—'इको यणचि'[३] इति शास्त्रं दध्यत्रेत्यादिलक्ष्यसम्बन्धिसाक्षात्संस्कारजनकसाधुत्वप्रकारकशाब्दबोधजनकत्वमिति लक्षणसमन्वयः।

**अधिकारसूत्रलक्षणम्**—स्वदेशे लक्ष्यसंस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधोपकारकवाक्यार्थमनुभावकत्वे सति विधिशास्त्रीयलक्ष्यसंस्कारोपयोगिवाक्यार्थबोधप्रयोजकत्वम्।

लक्षणे संज्ञादिवाराणाय सत्यन्तम्। शेष इत्यत्रातिव्याप्तिवारणाय वाक्यार्थे विधिशास्त्रीयवाक्यार्थबोधोपकारकेति विशेषणमुपात्तम्। इति भूतिः। यथा—'अङ्गस्ये'[४]त्यादिकम्।

**अतिदेशसूत्रलक्षणम्**—शब्दतोऽर्थतो वा वतिप्रत्ययघटितत्वमतिदेशसूत्रत्वम्। यथा—'स्थानिवदादेशोऽनल्विधौ'[५] इत्यत्र शब्दतो वतिप्रत्ययेन घटितत्वमस्ति। 'असंयोगाल्लिट् कित्'[६] इत्यत्र किद्वद् इत्यर्थकरणेनार्थतो वतिघटितत्वमिति लक्षणसमन्वयः।

---

१. पा.सू. १.१.१; २. तदेव-१.१.३।
३. तदेव-६.१.७७; ४. तदेव-६.४.१।
५. तदेव-१.१.५६; ६. तदेव-१.२.५।

**नियमसूत्रलक्षणम्**—बहुत्र प्राप्तौ सङ्कोचः नियमः, अथवा अन्यनिवृत्ति-फलकसिद्धविषयकविधित्वं नियमत्वम्। तथा च प्रकृतविषये परिसंख्यानियमस्य कथं ग्रहणमिति विचारः प्रस्तूयते।

तथा हि शास्त्रेषु त्रयो विधयः समुपलभ्यन्ते—(क) अप्राप्तविधिः, (ख) नियमविधिः, (ग) परिसंख्याविधिश्चेति।

अपूर्वो नियमोऽन्यस्य परिसंख्येति च क्रमात्।
त्रयो हि विधय इति[1]।

तथा ह्युक्तम्—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते[2]।।

अयम्भावः—यादृशश्चार्थः प्रमाणान्तरेणाप्राप्तो विद्यते, स चाज्ञात-प्रयोजनवदर्थविधानेनार्थवान् अपूर्वविधिः। लक्षणान्तरं तत्र कालत्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिकालको विधिः अपूर्वविधिः। यथा 'इको यणचि' इत्यत्र लक्ष्ये दध्यत्रेत्यादौ कालत्रयेऽपि केनापि यणः अप्राप्तस्यानेन प्राप्तिः कृता। अतः 'इको यणचि' इति कालत्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिकालको विधिः। शास्त्रान्तरे उदाहरणम्—व्रीहीन् प्रोक्षति इत्यत्र, नात्र व्रीहीणां प्रासनस्य संस्कारकर्मणां विना नियोगमानान्तरेण कथमपि प्राप्तिरस्ति, अतोऽयमपूर्वविधिः।

**नियमविधिलक्षणम्**—पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको विधिर्द्वितीयः। 'व्रीहीन् अवहन्ति' इत्यत्र विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलनिष्पत्त्याऽऽक्षेपादेवावहननप्राप्तिर्भविष्यति न तत् प्राप्त्यर्थोऽयं विधिः। किन्त्वाक्षेपादेवावहननप्राप्तौ तद्वदेव।

लोकावगतकारणत्वाविशेषात् नखविदलनादिरपि पक्षे प्राप्नुयादिति। अवहननाप्राप्तांशस्य सम्भवात् तदंशपरिपूरणफलकः। व्याकरणशास्त्रे नियमस्योदाहरणं कर्मणि द्वितीयैवेत्येतदपरं 'कर्मणि द्वितीया'[3] इत्यादि-पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः। उदाहरणं पूर्वोक्तमेव।

**परिसंख्यालक्षणम्**—द्वयोः शेषिणोरेकस्य शेषस्य वा, एकस्मिञ्छेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिः

---

१. सिद्धान्तलेशे प्र.परिच्छेदे; २. अर्थसङ्ग्रहे।

३. पा.सू. २.३.२।

तृतीयः। अन्यत्र चोभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिःपरिसंख्याविधिः। यथा—

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघवः।
शल्यकः श्वाविधो गोधाः शशः कूर्मश्च पञ्चमः[१]॥

इत्यत्र 'पञ्च पञ्चनखा भक्ष्याः' इदं वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात्। तत्र पूर्वोक्तेन 'पञ्च पञ्चनखाक्तेन भक्ष्याः' इति रागप्रमाणेन प्राप्ते प्राणिभक्षणेऽनेन सङ्कोचः क्रियते, पञ्चनखत्वावच्छिन्नातिरिक्तत्वेन। अतश्च परिसंख्यावाक्यमेतत्। तथा हि मांसभक्षणं मदिष्टसाधनमिति प्रमा रागतोऽपि जायते, अतो रागस्य प्रमाकरणता प्रमाणपदेन कथम्? अर्थाद् रागप्रमाणेनेत्युक्तं शास्त्रेषु।

निरुक्तप्रमाणे मांसभक्षणं मे जायताम् इतीच्छा भवति, ततश्च प्रवृत्तिर्भवति। अत्रेच्छात्मकं रागानुमितिप्रमाकरणत्वं बोध्यम्। अनुमितिश्च अयमुक्तेष्टसाधनत्व-प्रकारकनिश्चयवान् उक्तेच्छात्वाद् इत्याकारा आस्तिकपुरुषस्य अनिष्टसाधनत्ववति मांसभक्षणे इष्टसाधनत्वारोप्यैव प्रवृत्तिर्बोध्या। तत्रारोपे रागस्य कारणता। एवञ्च प्राणिनो मे भक्ष्याः, विषयतासम्बन्धेन मदीयरागवत्त्वाद् इत्यनुमाने रागस्यानुमिति-करणत्वं बोध्यम्। अयञ्चानुमानस्य द्वितीयः प्रकारः।

अत्रोद्देश्यतावच्छेदकं प्राणित्वं तद् व्याप्यं पञ्चनखत्वं पञ्च पञ्चनखा इत्यस्योद्देश्यतावच्छेदकं पञ्चसंख्याकत्वविशिष्टं पञ्चनखत्वं तद् व्यावर्तकञ्च पञ्चनखत्वम् इदमेव मध्यपातिरूपं तद्रूपावच्छिन्नातिरिक्तत्वेन प्राणित्वावच्छिन्ने सङ्कोचे सति पञ्चनखा भक्ष्याश्चेत् तर्हि पञ्चैव अतोऽन्येऽभक्ष्या इति अन्यनिवृत्तिफलक आयाति।

१. अत्रान्यनिवृत्तिसाम्यं नियमपरिसंख्ययोः, अतोऽन्यनिवृत्तिफलकत्वात् परिसंख्यापि व्याकरणशास्त्रे नियमपदेनोच्यते।

२. यथा नियमकरणे कामाचारो न भवति परन्तु परिसंख्यायां भवति, अर्थात् नियमविधाववश्यकर्त्तव्यताकत्वं तदकरणे प्रत्यवायो भवति; परन्तु परिसंख्यायां तदकरणे प्रत्यवायो न भवति। व्याकरणशास्त्रे अवश्यकर्त्तव्यताकत्वेन परिसंख्यापि नियमपदेन संगृह्यते। अथवा परिसंख्याया भेदद्वयम्—एका श्रौती परिसंख्या, अपरा लाक्षणिकी परिसंख्या। या लाक्षणिकी परिसंख्या सैव व्याकरणशास्त्रे नियमपदेन व्यवह्रियते। अस्यां लाक्षणिकी परिसंख्यायां दोषत्रयम्। तथा हि श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति तथा चोक्तं दृष्टान्तत्वेन—

---

१. सिद्धान्तलेशे प्र.परि.

श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा[१]॥

यथा पञ्च पञ्चनखा भक्ष्या इत्यत्र श्रुतस्य पञ्चनखभक्षणस्य हानाद् अश्रुताऽपञ्च नखभक्षणनिवृत्तेः कल्पनात् प्राप्तस्य चापञ्चनखभक्षणस्य बाधादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्। प्राप्तबाधस्त्वर्थनिष्ठम्। एतस्यायं विशेषः—

१. श्रुतस्य शब्दप्रतिपन्नार्थस्य हानः परित्यागः।

२. अश्रुतस्य शब्दप्रतीतार्थस्य कल्पना।

३. प्राप्तप्रमाणविशेषेण कर्त्तव्यतया प्रतीतस्य बाधो व्यवहाराख्यावर्तनमित्यर्थः।

४. व्याकरणशास्त्रे निषेधमुखेन प्रवृत्तिपक्षे एते त्रयो दोषाः प्रतिपादिताः शास्त्रकारैः। तेन समायाति यद् दोषत्रयसाम्यादपि व्याकरणस्य नियमः परिसंख्यासदृशः।

तथा हि एतस्य व्याकरणे प्रसिद्धमुदाहरणं 'कृत्तद्धितसमासाश्च'[२] इति। तदेवात्र प्रस्तूयते लक्षणसमन्वयपूर्वकम्। तथा हि कृत्तद्धितसमासाश्चेति शास्त्रेण समासस्य यदा प्रातिपदिकसंज्ञा समास इत्यंशेन क्रियते, तदा 'कृत्तद्धितसमासाश्च' इत्येतत्सूत्रघटकसमास इति नियमार्थो भवति, यतो हि 'राज्ञः पुरुषः' इति लौकिकविग्रहानन्तरम् अलौकिकविग्रहे 'राजन् ङस् पुरुष सु' इत्यवस्थायां 'षष्ठी'[३] इति सूत्रेण समासः, पश्चाच्च समासत्वात् प्रातिपदिकसंज्ञा भवति समासेन। परन्तु 'राजन् ङस् पुरुष सु' इति समुदायस्य धातुप्रत्ययप्रत्ययान्ततदादिभिन्नत्वाद् अर्थवत्वाच्च 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[४] इति सूत्रेण सिद्धे प्रातिपदिकसंज्ञकत्वे पुनः तत्रैव प्रातिपदिकसंज्ञाकरणार्थं प्रवृत्तं कृत्तद्धितसमासाश्चेति सूत्रघटकसमासः नियमार्थो भवति। यतो हि वैयाकरणनिकाये सिद्धे सति आरभ्यमाणो विधिर्नियमाय कल्पते इति सिद्धान्तः।तथा नियमः क्रियते कृत्तद्धितसमासाश्चेति सूत्रेण। तत्र नियमः कः? इति जिज्ञासायाः प्रादुर्भावः स्वाभाविकः, तत् शमनायादौ नियम इत्यस्य कोऽर्थ इति प्रतिपाद्यते।

नियमत्वन्नाम सामान्यप्राप्तेः स्वसजातीयाद् व्यवच्छेदेन लब्धनिष्कम्पप्रवृत्तिविषयत्वं हि नियमः। यथा पञ्च पञ्चनखा भक्ष्या इत्युक्ते रागतः प्राप्ते पञ्चपञ्चनखसजातीयात् प्राणिपञ्चनखात् व्यवच्छेदेन पञ्चपञ्चनखभक्षणरूप-

---

१. अर्थसङ्ग्रहे;    २. पा.सू. १.२.४६।
३. तदेव-२.२.८;    ४. तदेव-१.२.४५।

विषयस्याप्राप्तस्य लाभो निष्कम्पप्रवृत्तिकः। ततश्च पञ्चातिरिक्ता प्राणिशर्वरादिप्रकृतिः पञ्चनखे पञ्चनखविजातीये प्राणिन्यप्राणिनि च भक्षणन्नानु ज्ञायते। एवं प्रकृतेऽपि।

समासः प्रातिपदिकमित्युक्ते सामान्यतः प्राप्तेरर्थवत् प्रातिपदिकमित्यस्य समाससजातीयाद् व्यवच्छेदे समासप्रातिपदिकत्वरूपविषयस्याप्राप्तस्य लाभो निष्कम्पप्रवृत्तिकः। ततश्च समासाद् विजातीये अर्थवन्मात्रे प्रातिपदिकत्वमभ्यनुज्ञेयम्। समासः सजातीयाद् व्यवच्छेदश्च समासत्ववृत्तिसमानधर्मज्ञानमन्तरेण दुर्निरूपः, साधर्म्यरूपत्वात् सजातीयत्वस्य। तत् साजात्यं किमिति विशेषजिज्ञासायामाह भट्टोजिदीक्षितः—

'यत्र संघाते पूर्वो भागः पदं तस्य चेद् भवति तर्हि समासस्यैव'।

अत्रेदं बोध्यम्—यत्र नियमस्तत्र द्विविधं शास्त्रं नियम्यशास्त्रं नियामकशास्त्रञ्च।

**नियम्यशास्त्रलक्षणम्**—समानविधायकत्वे सति व्यर्थताप्रयोजकशास्त्रं नियम्यशास्त्रमिति।

**नियामकशास्त्रलक्षणम्**—समानविधेयकत्वे सति व्यर्थीभूतशास्त्रं नियामकशास्त्रम्।

एवञ्च तत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकधर्मव्याप्यं, नियामकशास्त्रीयोद्देश्यतावच्छेदकधर्मव्यापकञ्च यद्धर्मस्तेनैव धर्मेण नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नसादृश्यस्य व्यावृत्तिरिष्यते।

प्रकृते नियामकशास्त्रं समासः प्रातिपदिकसंज्ञा स्याद् इति तदीयोद्देश्यतावच्छेदकं समासत्वं तदवच्छिन्नः समासः स च पदत्वयोग्यपूर्वोत्तरभागघटितो अर्थवाँश्चेति। पदत्वयोग्यपूर्वोत्तरभागघटितार्थवत्समुदायत्वावच्छिन्नस्य प्रातिपदिकत्वञ्चेत् समासस्यैव नान्यस्येति नियमाकारः। तथा च राज्ञः पुरुष इति वाक्यस्य पूर्वेण प्रातिपदिकसंज्ञा प्राप्नोति। अनेन च निषिध्यत इत्युभयोर्विरोधपरिहाराय पदत्वयोग्यपूर्वोत्तरभागघटितार्थवत्समुदायभिन्नत्वेन पूर्वसूत्रोद्देश्यदले सङ्कोचेन तादृशसमुदायभिन्नं यदर्थवत्तस्यैव तेन प्रातिपदिकसंज्ञाविधाने वाक्यस्य समासस्य च पदत्वयोग्यपूर्वोत्तरभागघटितसमुदायभिन्नत्वाभावेन पूर्वेण प्रातिपदिकत्वप्राप्त्या समासस्यानेन प्रातिपदिकसंज्ञा विधीयते। वाक्यस्य तु न पूर्वेण नाप्यनेन उद्देश्यतावच्छेदकधर्माक्रान्तत्वात्।

अत्र हि समासशास्त्रं नियामकं भवति, तच्च अर्थवत्सूत्रं नियमयति। यदि च स्वातिरिक्तत्वेन नियमयति तर्हि श्नुषाश्वश्रून्यायः प्रसज्येत। स च न्यायो व्यर्थप्रयोजक एव। तथा हि कश्चन वटुः तक्रस्य भिक्षणार्थं क्वचिद् गृहे गतवान्, तत्रावोवदच्च मह्यं तक्रं दीयताम्, तदा तस्मिन् गृहे समागता नूतनवधूः

प्रत्याख्यातवती यत् 'भो ब्रह्मचारिन् मद्-गृहे तक्रन्नास्ति'। एवं प्रत्याख्यातो वटुः ततः परावृत्तः। मध्येमार्गं तस्याः श्नुषायाः श्वश्रूर्मिलिता। सा पृष्टवती 'भो ब्रह्मचारिन् कुतः समागच्छति'? तेनोक्तं 'भवत्याः गृहात् प्रत्यागच्छामि' मया तत्र तक्रभिक्षा प्रार्थिता परन्तु वध्वा निषेधः कृतः' एतच्छ्रुत्वा सा वृद्धा श्वश्रूः उक्तवती 'भवान् पुनः मद्गृहे चल्यताम्'। स च वटुः पुनः.....आगतः। सा वृद्धा गृहं प्रविश्य तत आगत्य चोक्तवती यद् 'भो वटो मद्गृहे तक्रन्नास्ति'। तदा वटुनोक्तम् 'इदमेवोत्तरं वध्वापि दत्तम्, भवत्यापि दत्तम्. तर्हि मम प्रत्यावर्तनस्य किं फलम्'? तदा तया चोक्तम्—'गृहस्वामिन्यहमस्मि मया कृत एव विधिनिषेधो प्रामाणिको भवति न तु वध्वा कृतः'। एतत् संवादेन किमपि तत्त्वन्न निःसृतम् अतश्चायं न्यायो वैयर्थ्यसूचक एव।

तथैव यदि समासशास्त्रं स्वोद्देश्यभूतसमासातिरिक्तत्वेनार्थवत्-सूत्रीयोद्देश्येऽर्थवति सङ्कोचं कुर्यात्, अर्थात् तत् प्रतिवदेद् यद् भवता समासस्य प्रातिपदिकसंज्ञा न विधेया। तदा प्रश्नो भवति यत् समासस्य प्रातिपदिकसंज्ञा केन करिष्यते? इत्येवं प्रश्ने समासशास्त्रेणोच्यते—मया करिष्यते। अस्मिन्नुत्तरे परिहास एव भविष्यति यद् भो समासशास्त्रमहोदय! भवता समासस्य प्रातिपदिकसंज्ञाकरणे यत्नो न विधेयः, अर्थवत् सूत्रमेव यथान्यस्य पूर्वभागपदघटितसमुदायरूपवाक्यस्य तां संज्ञां करिष्यति, तथैव समासस्यापि तत्संज्ञाकरणे को भारः। भवता श्नुषाश्वश्रून्यायो न परिपाल्यताम्।

अतो नियमसूत्रं स्वोद्देश्यतातिरिक्तत्वेन सङ्कोचमकृत्वा स्वोद्देश्य-सजातीयातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्ये सङ्कोचं विदधाति। तच्च रूपम्—नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं, नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च भवति तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति। इदमेव परिष्कृतं नियमशास्त्रस्वरूपमस्ति। स्वोद्देश्यसजातीयस्य स्वीयोद्देश्यतावच्छेदकरूपव्यापकरूपावच्छिन्नोऽर्थ इत्यवगन्तव्यम्।

अतश्च प्रकृते समासशास्त्रोद्देश्यतावच्छेदकरूपमर्थवत्त्वविशिष्टसमासत्वम्। तद्व्याप्यरूपं पूर्वभागपदघटितसमुदायत्वम्। अर्थवत्सूत्रीयोद्देश्यतावच्छेदकं धात्वादिभेदविशिष्टमर्थवत्त्वं तद्व्याप्यमपि पूर्वभागपदघटितसमुदायत्वं तस्य चेत् प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमाकारः। तेन वाक्यस्य प्रातिपदिकसंज्ञा न भवतीत्यन्यानिवृत्तिः फलिता भवति। एषा विधिमुखेन प्रवृत्तिः प्रदर्शिता।

नियमशास्त्रस्य निषेधमुखेन प्रवृत्तौ प्राप्तप्रातिपदिकत्वबाधः स्वार्थपरित्याग-परार्थकल्पनादिदोषप्रसक्तिरिति नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिः स्वीकार्या, लाघवात्।

यदि तु मूलोक्तनियमप्रतिपादितशरीरे पूर्वभागपदघटितत्वनिवेशे 'वृषण्वसुः, वृषणश्वः' इत्यादौ 'वृषन् वस्वश्वयोः' इति वार्तिकेन वृषन् इत्यस्य भसंज्ञया पदत्वबाधे सर्वत्र समासे पूर्वभागपदघटितत्वन्नास्ति। एवञ्च पूर्वभागपदघटितत्वं न समासत्वव्यापकमित्युच्यते तदा पदशब्देन न पदसंज्ञकपदं ग्राह्यमपि तु पदशब्देनात्र स्वातन्त्र्येण प्रयोगार्हमर्थवद् गृह्यते। अत एवार्थवत्समुदायानां समासग्रहणं नियमार्थम् इत्यत्रत्यं भाष्यं सङ्गच्छते। अतश्च गवित्ययमाह इत्यादौ गो इत्यादीनां सुबन्तत्वाभावेऽपि समुदायस्य न प्रातिपदिकत्वम्। अनुकरणञ्चानितिपरमिति सूत्रप्रामाण्येनातिपरस्यापि अनुकरणस्य साधुत्वेन प्रथमप्रयोगार्थता युज्यते। ईषदूना पटवो बहुपटव इत्यादौ बहुच्प्रत्ययस्य शास्त्रे प्रयोगार्हत्वेऽपि लोके तदभावेन स्वातन्त्र्येण तत्त्वन्नास्ति। अतो न नियमेन तत्र प्रातिपदिकत्वव्यावृत्तिः।

अतो नियमशरीरे पूर्वमित्यनेनाक्षिप्तं परेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणं भवति। अतः पुत्रकाम्यधातोः 'अप्रत्ययात्' इति अप्रत्यये ततष्टापि स्त्रीत्वविवक्षायां पुत्रकाम्याशब्दस्य न प्रातिपदिकत्वव्यावृत्तिः, काम्या इत्यत्र परभागस्य स्वातन्त्र्येण प्रयोगाहार्थवत्वाभावात्। अत एव देवदत्तो गार्ग्य इत्यस्य समुदायस्य यञन्तत्वेन प्रातिपदिकसंज्ञाया अभावः 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमि'ति परिभाषायाः फलत्वेन भाष्यकृतोक्तः।

समासग्रहणकृतनियमफलन्तु 'देवदत्तो गच्छति ग्रामम्' इत्यादेः प्रातिपदिकसंज्ञाव्यावृत्तिः, अन्यथा सति प्रातिपदिकत्वे वाक्योत्तरं सुबुत्पत्तिः, वाक्यघटकसुपां लुगापत्तिः प्रसज्यते, एकस्वरोऽप्यापद्येत। यथा लोके नियामकस्य नियमेनैव राष्ट्रव्यवस्था प्रचलति। राष्ट्रे समासे शक्तिरनुभूयते प्रजाजनेन सामाजिकप्राणिना तथैव शास्त्रेऽपि नियमसूत्रस्वभावो बोध्यः।

लोके नियामकानां नियमाभावत्वे ध्रुवं समाजे प्लावनं दृश्यते, तथैव शास्त्रेऽपि नियमसूत्राणामभावे भूयसी दुर्व्यवस्था स्यात्, यथा सम्प्रत्येवोक्तं समाससूत्रनियमाकाभावे वाक्यस्य प्रातिपदिकत्वापत्तिः। इदं सर्वं प्रदर्शितमेव।

निबन्धोऽयं गौरीकेदारेश्वरयोः भगवतोः चरणकमलेषु समर्प्यते। तेन असाधुरपि साधुतां यातीति मे मनीषेति शम्।



# पाणिनीयव्याकरणस्य व्यावहारिकत्वम्

**डॉ. किरण-आर्या**
प्राध्यापिका
जगद्गुरुस्वरूपानन्दसरस्वतीसंस्कृतमहाविद्यालये
केदारघट्टः, वाराणसी



बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।
यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेरणा तदेषां निहितं गुहाविः॥

ऋग्वेदादारभ्य उपनिषदं यावद् वैदिकसाहित्यम् उच्यते ततः, अर्थात् औपनिषदसाहित्यानन्तरं वाल्मीकिरामायणतः अद्य यावत्साहित्यं लौकिकसाहित्य-संज्ञया अभिभाष्यते। वैदिकसाहित्यं वैदिकसंस्कृतभाषायाम् उपनिबद्धम्, लौकिकसाहित्यञ्च लौकिकसंस्कृतभाषायाम्। परमवैदिकसाहित्यस्य व्याख्यातारो येऽपि सङ्कलिता ग्रन्थाः ग्रन्थकारैः, ते ग्रन्थाश्च लौकिकसंस्कृतभाषायामेव विद्यन्ते इति प्रत्यक्षम्।

साहित्य इति पदं 'सहितयोः भावः साहित्यम्' इति व्युत्पत्त्या शब्दार्थयोः सामञ्जस्यस्याभिव्यञ्जकमिति सर्वेषां साहित्यकाराणामभिमतम्। तदेव साहित्यम्— शब्दार्थसम्बन्धत्वं साधयितुं महर्षिपाणिनिना व्याकरणं निरमायि। तद्व्याकरणं नैव भगवतः पाणिनेरुपक्रमम्, अपि तु सा व्याकरणस्य सलिला धारा वेदादेव प्रभूता इति अत्र यथा प्रस्तूयते अपि च तस्य व्याकरणस्य कथम् अद्यत्वे व्यावहारिकत्व-मिति च दिग्दर्श्यते।

गणानां गणपतिना गणितेयं गणितिः[१] = सृष्टिः, यत्र प्रजापतिना प्रजाहिताय प्रजासुखाय च प्रजनयाञ्चकार सकलसृष्टिगतपदार्थाः, तत्रैव तेन विचाराणाम् आदानप्रदानाय वाग्व्यवहारसम्पादनाय संस्कृता वागपि प्रदत्ता[२]। या च भाषा इति व्यवह्रियते। वाक् = उच्यते भाष्यते याऽसौ भाषेति निगद्यते। भाषात्वं नाम

---

१. सांख्यदर्शनमनु पञ्चविंशतितत्त्वेन निर्मिता।

२. बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधाना। (ऋग.)

विचारवाहिकात्वम्, लोकव्यावहारिकत्वञ्च। ऐतिह्यं साक्षि सर्गारम्भे संस्कृतभाषा एव व्यावहारिकी भाषा मानवानां सम्बभूव। संस्कृतभाषिणश्च प्राच्यर्षिमहर्षयस्ते संस्कृतभाषोपनिबद्धसंस्कृतौ ओतप्रोताः सानन्दाः आध्यात्मिकाधिदैविकाधि-भौतिकदुःखात् पारङ्गताः देवकोटौ प्रविष्टा आसन्। त्रिकालज्ञेन परमात्मना अर्वाचीना मानवाः पूर्वमेव सावधानीकृताः—

दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।
अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः।। (यजु.)

अर्थात् हे मानवाः! सत्ये श्रद्धां विधेहि माऽनृते। सत्यं हि देवाः, अनृतं मनुष्याः। सत्यञ्च सत्सु भवं सात्विकं श्रेष्ठमाचारव्यवहारम्, सत्या च वाक् त्वया प्रवचनीया। अतस्सत्यप्रतिष्ठापनायाहं प्रजापतिः प्रजापालकः सत्यानृते (स्फोटध्वनिरूपे व्याकरणम्) व्याकरोमि, येन सक्तुमिव तितउना पुनन्तः वाचं वदन्तः यूयं भद्रां लक्ष्मीं वाचि निधाय 'वाचस्पतिः' इत्युपाधियुक्ताः स्युः। व्याकरणं वै व्याक्रियन्ते व्युत्पाद्यन्ते विविच्यन्ते शब्दा येन तदुच्यते। प्रकृतिप्रत्यय-विभागपूर्वकमिदं भवति।

भाषागत-सांस्कृतिकं वैज्ञानिकं तत्त्वमनुगन्तुं तद्व्यवहर्त्तुं भाषायामधिकार आवश्यको भवति। भाषाञ्च खलु अधिकर्तुं व्याकरणसोपानारोहणं परमावश्यकम्। भाषाधिकारी एव भाषाव्यासत्वमधिगच्छति। अत एव 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' आदिगुरुणा वेदेषु समासशैल्याम्—'चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य', 'चत्वारि वाक् परिमिता पदानि'[१] इत्यादिभिः पद्यैः व्याकरणशिक्षा सम्प्रदायि। 'आचार्यात् पादमादत्ते पादं शिष्यः स्वमेधया' इत्यनुरूपं प्राक्कालतः परमात्मप्रदत्तं ज्ञानं परम्परया सततं प्रवर्धितं वैयाकरणैः। सर्वतो प्राक् आदि-महावैयाकरणः बृहस्पतिर्बभूव। यस्मादिन्द्रेण अधीतम्—'बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः'[२]। ततश्च देवैः प्रार्थितः इन्द्रः ताम् अखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्। सैव व्याकरणगङ्गा—ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्। सारस्वतं चापिशलं शाकल्य[३] इत्यादिरूपे प्रवहमाना इदानीं पाणिनीयत्वं गृह्णाति।

पूर्वीभूतानामेतेषां व्याकरणानां तत्तत्समये सुप्रसिद्धानामपि कालमाहात्म्येन दुर्लभता एव, पुनरपि यत्र कुत्रचित् व्याकरणजगति तेषामुद्धरणमात्राध्ययनेन

१. ऋग्वेदीया ऋचा; २. पातञ्जलमहाभाष्ये पस्पशाह्निके।
३. श्रौतत्वविधिनामकवैष्णवग्रन्थे।

एतद्वक्तुं शक्यते यद्यावन्माहात्म्यं पाणिनीयस्य न तावदन्येषां यथाक्रमं हि तानि व्याकरणानि प्रकृतिप्रत्ययविभागे एव सङ्कुचितानि, परं पाणिनीयव्याकरणं सप्रकृतिप्रत्ययं तस्य व्यावहारिकपक्षमप्याविर्भावयति, एषैव पाणिन्युपज्ञा, महती सूक्ष्मेक्षिका च। अस्मादेव कारणात् संस्कृतभाषाविज्ञानजगति पाणिनीय-योगदानमतुलनीयं लोकविश्रुतं प्रख्यातञ्च विद्यते।

महर्षिपाणिनिना अष्टाध्यायीसूत्रव्याकरणमाध्यमेन न केवलं भाषाधिकारः प्रदत्तः, अपि तु कथन्नु ऐतिह्यं लोकव्यवहारमासीदिति ज्ञापयति, कथञ्चेदानीं समाजे व्यवहर्त्तव्यमित्युपदिशति च।

### १. विद्यार्थिनां व्यवहारः

समाजस्य प्राणभूता विद्यार्थिनः कीदृशा भवन्ति स्म, कथञ्च भवितव्या इत्यत्र पाणिनीया दृष्टिः—'इत्थंभूतलक्षणे' (२.३.२१) कमण्डलुना छात्रमद्राक्षीत्, कमण्डलुपाणिं छात्रमद्राक्षीत्, अर्थात् प्राच्यारण्यकगुरुकुलवासिनो राजपुत्रा अपि विद्यार्थिनः अध्ययनकाले केवलं कमण्डलुपाणयो भवन्ति स्म, स्वाध्यायशीलाः ब्रह्मचर्यरताः विद्यां विमुक्तये, न च नियुक्तये मन्यमानाः, अध्यात्मधनेप्सुकाः, अत एव सुचरित्राः समाजेन समादृताः देशभूषणाः भवन्ति स्म। ये च दुश्चरिता अध्ययनात्पराङ्मुखास्ते कठोरतरं गर्हिताः निर्भर्त्सिताः भवन्ति स्म। 'ध्वाङ्क्षेण क्षेपे' (२.१.४२) ये गुरुकुलेषु गत्वा विद्याध्ययनकार्ये काकचेष्टा इव चाञ्चल्यं विधाय कदाचित् शालायाम्, आपणे वा बाभ्रम्यमाणाः, शयने, हसने, वार्त्तालापे वा रताः न चिरमध्ययनाय तिष्ठन्ति स्म, ते तीर्थकाका अभिधारकाः दण्डिताः भवन्ति स्म। तथैवेदानीमपि वर्त्तितव्यम्। अद्यत्वे विद्यार्थिनः केवलं यतः कुतश्चिदपि येन केन प्रकारेण प्रमाणपत्रलोलुपाः दरीदृश्यन्ते, तेषाङ्कृते विद्या व्यवसायः वर्तते, कुत्रापि नियुक्तिरेव तेषां लक्ष्यम्। अत एव गुरोः गुरुता महत्ता तेभ्यः नगण्यमिव, न त्वा तृणं मन्ये इव विद्यते। 'छत्रादिभ्यो णः' (४.४.६२) छात्रस्तु सः भवति येन छत्रमिव गुरुः परिपाल्यते। 'आख्यातोपयोगे' (१.४.२९) नियमपूर्वकं विद्याध्ययनं विधीयते, यदैवं भवति तदा गुरुणाऽपि स शिष्यश्छात्रश्छत्रवत् छाद्यते तथा च गुरोराशीर्वादेन विद्यया सुभूषिताः सच्छात्राः समाजद्वारा पुरस्कृताः सम्मानिता अर्थवन्तस्स्वयमेव भवन्ति। पाणिनेर्मते गुरुशिष्ययोः सम्बन्धस्तु विद्यायोनिकृत-सम्बन्धेन पितापुत्रवद् भवति—'विद्यायोनिसम्बन्धेभ्यो वुञ्' (४.३.७७)। अद्यतनीने समाजे तु एषा दुरवस्था यत् रूप्यकादानप्रदानद्वारा अध्यापक-प्रोफेसरपदादिकं गृह्यते यस्य परिणामः अर्थबलेन न च विद्याबलेन योग्यताबलेन, पदं लब्धास्तथाकथिताः अध्यापका अशिक्षितानेव छात्रान् समाजाय प्रददति,

अशिक्षिताश्च ते छात्रा अनुशासनविहीनाः स्वतन्त्रमनस्काः भ्रष्टाचारे निर्लिप्ताः समाजमधोगतिं नयन्तीति सर्वेषां दृष्टिगतम्।

महर्षिपाणिनेः कथनं यत्—'तदधीते तद्वेद' (४.२.५८) यः केवलं व्याकरणमधीते न स वैयाकरणः अपि तु साध्ययनं व्याकरणं वेत्ति व्याकरणस्य रहस्यं, तस्य व्यवहारपक्षं, तस्य विज्ञानम्, तस्य लक्ष्यं जानाति, प्रयोजयति तत्रात्मानं योऽसौ वैयाकरणो भवति। इयं हि वै व्याकरणपद्धतिः मोक्षमाणानामजिह्मा राजपद्धतिः[1]। पतञ्जलिरपि ब्रवीति महाभाष्ये—शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते[2]। एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवति।

## २. सामाजिक-राजनैतिकव्यवहारः

'समर्थः पदविधिः' (२.१.१) समर्थानां पदानामेव विधिर्भवितव्या। तात्पर्यम्—समाजे कस्यापि पदस्याधिकारः—स च नगराधिकारी स्यात् समाजाधिकारी वा, राष्ट्रपतिः प्रधानमन्त्री वा भवेत्, कस्यापि दलस्य नेता वा भवेत्, सभासदः सांसदो वा स्यात्, सः समर्थः = सर्वप्रकारेण अर्हः योग्य एव भवितव्यः। न केवलं समः अर्थेन धनेन युक्तो भवेदपितु सङ्गतः अर्थः = समर्थः, सङ्गतः[3] = ज्ञानान्वितोऽपि स्यात्। सम्प्रेक्षितार्थः = समर्थः चतुर्षु दिक्षु तस्य परार्था दृष्टिस्स्यात् नैव स्वार्था। सम्बद्धार्थः = समर्थः आबालवृद्धेन सहात्मीय-सम्बन्धभावना भवेत्, बालानां प्रति स्नेहमयी दृष्टिः, यूनां प्रति सङ्गतिकरणभावना, वृद्धानामादरपूजाभावो भवेत्। संसृष्टार्थः समर्थः सर्जनात्मकविचारयुक्तः सन् समाजदेशराष्ट्रविकासाय निरन्तरं नवीनांनूतनां सर्जनां = सृष्टिं विधीयते। एवमुक्तः समर्थः मानवः कस्यापि पदस्य योग्यः शपथपत्रग्रहीता भवितव्यः, अद्यतनीनः समाजः उन्नतिविमुखः अतः भवन्नस्ति यतो ह्यस्माकं नेतारः धनबलेन, शरीरबलेन अशिक्षितजनबलेन च तत्-तत् पदं गृह्णन्ति तस्यैव परिणामः यत्ते देशस्य रक्षितारः भक्षितारः भवन्ति। 'वारणार्थानामीप्सितः' (१.४.२७) ईप्सितेभ्यः पदार्थेभ्यः अनीप्सितांशस्य वारणम् निवारणं अर्थः = प्रयोजनं सदैव राजनेतॄणां भवितव्यम्। यद्यस्माकं देशविकासः ईप्सितः, तस्य सुरक्षां चतुर्दिगुन्नतिश्च वयं वाञ्छामस्तर्हि आवश्यकं भवति यदनीप्सितस्य अर्थात् अत्याचार-भ्रष्टाचार-बलात्कार-निर्धनता-धनेप्सित-कारणनिवारणे समूलोन्मूलनाशनाय सदैव यतनीयम्। तच्चानीप्सितवारणं

---

१. वाक्यपदीये उक्तम्; २. पस्पशाह्निके उक्तम्।

३. गतेस्त्रयोऽर्थाः-ज्ञानं गमनः प्राप्तिश्च।

समर्थेन पदविधिनैव भवितुं शक्यम्। 'परिषदो ण्यः' (४.४.१०१) परिषदि साधुः पारिषद्यः, 'सभायाः यः' (४.४.१०५) सभासु साधुः सभ्यः उच्यते। अनया दृष्ट्या अवलोकने सति अद्य कोऽपि लोकसभायां राज्यसभायां वा पारिषद्यः सभ्यः सांसदः वक्तुमयोग्योऽस्ति, यतो हि नास्ति कस्यापि अनवगतमेतत् यत् किं भवति संसदि तत्तु दूरदर्शनमाध्ययेन सर्वेषां दृगीभूतमेव।

### ३. पारिवारिकव्यवहारः

नारी एव परिवारस्य सा मूलभूता दृढतमेष्टिका, या परितः सर्वतः दुःखेन वारयति सुखेनावृणोति च परिवारम्। तस्यामेतावत्सामर्थ्यं साहसं बुद्धिचातुर्यं भवति यत्सा परिवारस्य दशा दिशा उभयोर्निर्धारणं कर्त्तुं पारयति। अतो या देवी परिवारे शक्तिरूपेण संस्थिता तस्याः सम्मानं, समुदाचारः सर्वैर्विधेय इति भावना पाणिनिना कैश्चित्सूत्रैः प्रदर्शिता-'मातृपितृभ्यां स्वसा' (८.३.८४) 'मातुःपितुर्भ्यामन्यतरस्याम्' (८.३.८५) 'मातरपितरावुदीचाम्' (६.३.३१) इत्यादिषु सूत्रेषु मातृशब्दस्य पूर्वनिपातकरणस्य अयमेवाशयः यत्प्रथमं सैवादरणीया, पूजनीया, महनीया च। 'यू-स्त्र्याख्यौ नदी' (१.४.१) पाणिनेर्चिन्तने नारी नदीसदृशा गहना, गभीरा, शीतला, कार्यादिक्रियाकलापेन सततं प्रवहमाना विद्यते। प्रसन्ना भवति चेन्नारी तर्ह्यनुकूला सती नदी इव कूलयोर्तटयोर्मध्ये आत्मानमनुशिष्य प्रवहमाना परोपकाराय सदोद्यता वसति। यदि च पारिवारिकात्याचारेण व्यथिता स्यात् तदा प्रतिकूला सती कूले उल्लंघ्य बाढसदृशविकरालरूपधारिणी दुर्गाकालीरूपधारिणी इव सन्तिष्ठते। 'पत्युर्नो यज्ञसंयोगे' (४.१.३३) सा पत्नी तदाऽभिधीयते यदा यज्ञेन संयुक्ता स्यात्, महर्षिपाणिनिः स्त्रियं यज्ञाधिकारिणीं मनुते। 'वृद्धस्य च पूजायाम्' (काशिका, अ. ४.१.१६६) परिवारेषु योऽपि वृद्धः ज्येष्ठः स्यात् सः सदैवादरणीयः भवितव्यः। 'आद्यन्तवदेकस्मिन्' (१.१.२०) यदि कस्या अपि मातुः एक एव पुत्रः स्यात्तर्हि तमेकमेवात्मानं कनिष्ठं मध्यमं ज्येष्ठं मन्तव्यम्।

### ४. धार्मिकव्यवहारः

'धर्मं चरति' (४.४.४१) धर्माचरणं सदा विधेयम्। 'अस्तिनास्तिदिष्टं मतिः' (४.४.६०) परलोकोऽस्तीति यस्य मतिर्विद्यते सोऽधर्माचरणात् स्वतः विरम्येत, सः आस्तिकः कथ्यते। ततो भिन्नः नास्तिकः भवति। 'धर्मपथ्यर्थन्यायादनपेते' (४.४.९२) धर्मेण अनपेतः = युक्तो भूत्वैव न्यायादिकं कार्यं विधीयते तत्कार्यं तदा धार्मिककृत्यं निगद्यते, न्याय्यमित्युच्यते।

स्थालीपुलाकन्यायेन कैश्चन एव सूत्रैः पाणिनीयव्यावहारिकपक्षः मयाऽत्र उद्भावितः। 'मुखं व्याकरणं स्मृतम्' इत्याधारे यथा मुखे पञ्चज्ञानेन्द्रियाणां निवासः, तैरेव प्रेरितानि कर्मेन्द्रियाणि कर्मसु प्रवृत्तानि भवन्ति, तथैव व्याकरणस्य व्यावहारिकपक्षम्।

पाणिनेर्व्याकरणस्य विस्तृता विशिष्टा वा व्याख्यात्री या पातञ्जलकृतिर्विद्यते सा तु अतिशयेन इष्ट्युपसंख्यानेन परिभाषया वाऽलङ्कृत्यास्य व्यावहारिकत्वमुद्भावयति। पतञ्जलिना एतस्य भाष्यस्य कृते महच्छब्दस्य प्रयोगः एतस्मादेव हेतोः कृतः यत्तत्र न केवलं व्याकरणस्य निबन्धनम्, अपि तु सर्वेषां न्यायबीजानां समावेशः, अतः न तद्भाष्यमपि तु महाभाष्यमित्युच्यते लोके। आत्म-परमात्मनोर्योगप्रशिक्षकस्य महर्षिपतञ्जलेः व्याकरणभाष्यकरणस्येदमेवोद्देश्यं प्रयोजनमासीत् यत् प्रकृतिप्रत्यययोगद्वारा विद्यार्थिनः पदवाक्यप्रमाणज्ञपदेन आत्मानं भूषयन्तः वेदरक्षादायित्वं सम्भालयेयुरपि च जीवनस्य चरमलक्ष्यम्—'तदा द्रष्टुः स्वरूपेऽवस्थानम्' प्राप्नुयुः। स्वयं च ब्रूते पतञ्जलिः महाभाष्ये—

'अथ किमर्थमुपदेशः क्रियते? वाग्विषयो यत्र च ब्रह्म वर्त्तते। तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते। सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः। सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति माता-पितरौ चास्य स्वर्गे लोके महीयेते' इति।



# भारतीयदर्शनेऽक्षरस्वरूपम्

**प्रो. राममूर्तिशर्मा**
पूर्व-कुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणस्याम्



अक्षरतत्त्वं भारतीयदर्शनस्य गरीयान् सिद्धान्तविशेषो वर्त्तते। सर्वप्रथममक्षरशब्दस्य प्रयुक्तिः साधुतया ऋग्वेदे—'यदक्षरात् सम्भवतीह विश्वम्'[१] इत्यत्र दृश्यते, यत्राक्षरतत्त्वप्रयोगो जगत्कारणत्वेन विहितोऽवलोक्यते। भारतीय-दर्शनस्याधारस्वरूपासूपनिषत्सु अक्षरतत्त्वं सर्वाङ्गीणतया विवृतम्, यत्राक्षरतत्त्वं ब्रह्मस्वरूपमेवेति सम्यङ् निर्णीतम्। अत एव कठोपनिषदि अक्षरतत्त्वस्य ब्रह्मस्वरूपता, 'अक्षरं ब्रह्म यत् परम्'[२] इत्यभिधाय निर्दिष्टा।

अनेकासूपनिषत्सु अक्षरविषयिणी विविधा दृष्टिरवलोक्यते। निदर्शनाय, श्वेताश्वतरोपनिषदमनुसृत्य अक्षरतत्त्वं विद्याऽविद्ययोरधिष्ठानम्। अतश्च इयमविद्या क्षरा विद्या चाक्षराऽमृतस्वरूपिणी। अनयोर्यमयिता साक्षी परमेश्वरः[३]। अत्राक्षरतत्त्वस्य विद्यात्त्वमविद्यात्त्वञ्च वेदान्तस्य परापरब्रह्मविवृतिं सुस्पष्टं निर्दिशति। अस्माच्चाविद्यावानीश्वरः क्षरो मायावी परमेश्वरः सविद्योऽक्षरश्च सत्यज्ञानानन्तस्वरूपं 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २.१.१) ब्रह्मैवेति निर्गलितम्। मैत्रेय्युपनिषदि चापि अक्षरस्य स्वरूपं निरूपयन् तस्य प्राज्ञत्वं, सर्वान्तरत्वं शुद्ध-पूतभावः, प्रकाशस्वरूपश्च साधितम्[४]। मुण्डकोपनिषदि तु ब्रह्मणोऽक्षरादपि परतस्त्वं बोद्ध्यते।मुण्डक एव सृष्टेः स्वरूपं वर्णयन् उक्तम्—यथा प्रदीप्ताग्नेः स्फुल्लिङ्गा उत्पद्यन्ते[५], तद्वदक्षरादपि जडचेतनस्वरूपिणी द्विविधा सृष्टिरुत्पद्यते, तत्रैव च

---

१. ऋग्वेदः, १.६४.३९;
२. कठोपनिषद्, ३.२।
३. श्वेताश्वतरोपनिषद्, ५;
४. मैत्रेय्यु उपनिषद्, ७.६।
५. अक्षरात् परतः परः, मुण्डकोपनिषद्, २.१.२।

प्रविलीयते, 'तत् प्रयन्ति, अभिसंविशन्ति[१] च' इतिवत्। प्रश्नोपनिषदि तु अक्षरविषयिकीं नूत्नां दृष्टिं प्रस्तुवन्, अक्षरतत्त्वस्य विषय्यात्मनोऽधिष्ठानता निरूपिता। तदित्थम्—इयं सुषुप्त्यवस्था, यस्यां विषयविषयिणोर्भेदो न दृश्यते। विषय्यात्मनः स्वरूपविषये प्रश्नोपनिषदि स्पष्टीक्रियते, यद् विषय्यात्मा हि द्रष्टा स्पष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्त्ता, विज्ञानात्मा, पुरुषः स परेऽक्षरात्मनि सम्प्रतिष्ठते[२]। अथर्वशीर्षोपनिषत् तु अक्षरतत्त्वं कालस्य मूलं मनुते। कालविषयेऽन्यत्रापि सूक्तम्—

कालः कलयति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्त्ति कालः प्रत्यक्ष ईश्वरः।।

संक्षिप्त्या उपर्युक्तोपनिषदाऽक्षरतत्त्वस्य निरूपणेनाक्षरस्य ब्रह्मस्वरूपतैव प्रतिभाति।

**अक्षरसिद्धान्ते सृष्टिप्रक्रिया—**

अक्षरसिद्धान्तेन सृष्टिप्रक्रिया सम्यङ् निरूप्यते। मुण्डकोपनिषदि, तदित्थं विव्रियते—यथा लूता स्वभावत एव तन्तुजालं वितनोति, यथा पृथिव्यामोषधयः सम्भवन्ति, यथा शिरसि शरीरे च प्राणिनः केशोत्पत्तिस्तथैवाक्षराद् विश्वोत्पत्तिः सञ्जायते[३]। अत्रैतद्वैशिष्ट्येन विचारणीयं यदत्रोपनिषदि स्रष्टुर्ब्रह्मणः साहाय्यनिमित्तेन न किञ्चिदपेक्ष्यते, न माया न वाऽविद्या। अत एवात्रोपनिषत्सु जगतो मिथ्यात्वदृष्टिरपि न निर्दिष्टा। अत एवाचार्येण श्रीशङ्करेणापि सुभाषितम्—'कारणान्तरमनपेक्ष्य स्वयमेव सृजते'[४]। अत्रेयं स्वाभाविकी जिज्ञासा—यन्नामरूपविरहितं ब्रह्म कथं स्रष्टुं प्रवर्त्तते। तत्रोत्तरयति मुण्डकम्—

'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्'[५]।।

किञ्च सुविशदमनेन यद् ब्रह्मतत्त्वं तपसा जगद्रूपेण वर्द्धते। ब्रह्मण इत्यस्य बृंहणार्थकबृहधातुरपि ब्रह्मणः संसाररूपेण वृद्धिं व्यनक्ति। मौण्डकीं सृष्टिप्रक्रियामनुसृत्य शक्तिमतो ब्रह्मणः प्रथममन्नमुत्पद्यते, तत्र क्रमशः अन्नात् प्राणो

---

१. राधाकृष्णन् द्वारा सम्पादित एम.यू. प्रिंसिपल उपनिषद्, एलेन अनविन, लंदन।
२. प्रश्नोपनिषद्, ४.९, गीता-प्रेस, गोरखपुर, द्वितीय संस्करण, २००७।
३. एस. राधाकृष्णन् संपादित एम.यू. १.६ प्रिंसिपल उपनिषद्, एलेन अनविन, लंदन।
४. मुण्डकोपनिषद् शांकरभाष्य, १.१.६, प्रिंसिपल उपनिषद्, राधाकृष्णन्।
५. मुण्डकोपनिषद्, १.१.८, शङ्कराचार्यग्रन्थावली, श्रीरंगम्।

मनः सत्यमर्थात् पञ्चतत्त्वानि, ततो लोकास्ततश्च यज्ञादिकर्मसु अमृतमुत्पद्यते[१]। अत्रेदमपि बोध्यम्, यदेषा सृष्टिप्रक्रिया न युगपत् सञ्जायते, अपि तु क्रमेणैवेति[२]। अत्रेयं स्वाभाविकी जिज्ञासा यत् सम्पूर्णस्य ब्रह्मणः स्रष्टुं कीदृशी चिकीर्षा। कथं ब्रह्मणि सङ्कल्पः। अत्र गौडपादेन समाहितम्—

देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा[३]। किमत्र तपो नाम, तपश्चर्या, तपस्या वा। मैवम्, अत्र भारतीयदर्शनस्य विश्वविश्रुतपण्डितेन डॉ. राधाकृष्णन्महोदयेन लिखितम्—

'Tapas' contemplative power is the energy, by which the world is produced. Radhakrishnan, p. 673.

वस्तुतस्तु अत्र तपसोऽभिप्रायस्तपसश्चर्या या न भूत्वा, ब्रह्मतत्त्वस्य शक्तेः (Energy) वर्त्तते। अणुशक्ति-(Atomic energy) विशेषज्ञेनानुसन्धात्रा डॉ. राजारमन्नानाम्ना विदुषा वैज्ञानिकेन ब्रह्मशक्तिः इनर्जीरूपेण व्याख्यायते। तन्मते मायाशक्तिः इनर्जी (Energy) एव उच्यते। अत्रेदं वैलक्षण्यमवलोकनीयं यदाचार्येण श्रीशङ्करेण ब्रह्मसूत्रभाष्ये संसारकर्तृत्वविषयेऽविद्यात्मकबीजशक्तेरुल्लेखः कृतः[४]। अत्र बीजशब्दो न सामान्योऽपि तु शक्तितत्त्वविशेषात्मकः पोटेन्शियल (Potential) इति। अमेरिकादेशवासिना एलक्सवेमननामकेन विदुषाऽपि स्वकीयशोधनिबन्धे बीजशक्तेर्बहुधा विवेचनं कृतम्[५]।

अनेन 'तपसा चीयते ब्रह्म' इत्याद्यनुसृत्य ब्रह्मणो बीजशक्तेः अन्नादि-संसारसृष्टिः, यत्पूर्वं व्याख्यातम्, सर्वथा सुसङ्गतं सिद्ध्यति। नो चेत्, सच्चिदानन्दस्वरूपाद् ब्रह्मणः केवलात् कथं सृष्टेः कल्पना कर्त्तुं शक्यते। परमापेक्षितोऽत्रायं सङ्केतो यज्जगत्कर्त्तृत्वे अविद्यात्मिकाया बीजशक्तेरूहः श्रीशङ्कराचार्यस्यैव, अत एव मायावादनाम्न उपजीविसिद्धान्तस्य परिकल्पनं श्रीशङ्कराचार्यस्यैव, नोपनिषदाम्[६]। अत एवाचार्यः श्रीशङ्कर एव मायावाद-

---

१. लोकः कर्मसु चामृतम्, मुण्डकोपनिषद्, १.१.८, द्र. शाङ्करभाष्य।

२. मुण्डकोपनिषद् शाङ्करभाष्य, १.१.७।

३. गौणपादकारिका, १.९, श्रीरंगम्।

४. मुण्डकोपनिषद्, १.१.८ पर राधाकृष्णन् की टिप्पणी।

५. एलेक्स वेमैन, बीज पर पेपर, ४, डब्ल्यू.एस.सी. फिलेडेल्फिया।

६. मायावती, कन्सेप्ट ऑफ माया (प्रो. राममूर्ति शर्मा अभिनन्दनग्रन्थ) पृ. १६६,ई.बी.एल., दिल्ली, १९९०।

सिद्धान्तस्य प्रवर्त्तकः प्रख्यातः[१]। नात्र विप्रतिपत्तिर्यत् श्वेताश्वतरोपनिषदि 'मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'[२] इत्यत्र मायाशब्दप्रयोगो दृश्यते, परन्तत्र मायाशब्दार्थः प्रकृतिरेव। भाष्यकर्तुर्दृशा—'ईश्वरस्य मायाशक्तिः प्रकृतिः'। इतः पूर्वम् ऋग्वेदेऽपि पौनःपुन्येन मायाशब्दप्रयोगो दृश्यते, यथा—इन्द्रो मायाभिः पुरुरूप ईयते'। परं तत्रापि मायाशब्दप्रयोगः शक्त्यर्थे न वर्ततेऽपि तु कपटार्थे इन्द्रजालार्थे वा[३]। अतोऽविद्यात्मिकायाः बीजशक्तेराविष्कृतिर्भगवतः श्रीशङ्कराचार्यस्यैव।

अत्रैवेदमपि ऊह्यं यद् ब्रह्मणि या सृष्ट्युन्मुखताऽवलोक्यते सा मायोपहिते सगुणब्रह्मण्येव[४] न तु परब्रह्मणि निर्गुणे। अत एव श्रुतौ 'सोऽकामयत' इत्युक्तम्, न तु तद् (ब्रह्म) अकामयत इति। अत्रैवेदमपि कथनं समीचीनं स्याद् यदीश्वरब्रह्मणोर्द्वयी न वर्त्ततेऽपि तु ब्रह्मैव ब्रह्माण्डसम्बन्धादीश्वर इति संज्ञां लभते।

पुनश्चोपरि 'तपसा चीयते ब्रह्म' इत्यत्र अन्नस्य या प्रथमा सृष्टिरुक्ता तत्रान्नेन न गोधूमादिकमन्नं गृह्यते, प्रत्युत किञ्चिदव्याकृततत्त्वमेव, यदुक्तं भगवता भाष्यकृता श्रीशङ्कराचार्येण[५]। राधाकृष्णन्महोदयेनाऽप्युक्तमत्र विषये या खलु द्वितीया प्राणसृष्टिरुक्ता (अन्नात् प्राणः) तया हिरण्यगर्भः विश्वात्मा इति ज्ञेयम्। अत एव ऋग्वेदे हिरण्यगर्भः समवर्तताग्रे इत्युक्तम्। अत्रायं राद्धान्तः श्रीभगवता शङ्कराचार्येणेत्थं विशदीकृतः—

'हिरण्यगर्भो ब्रह्मणो ज्ञानप्रक्रियाशक्त्यधिष्ठितजगत्साधारणोऽविद्या-कामकर्मभूतसमुदायबीजोऽङ्कुरो जगदात्मनि जायते'[७]।

अत एव सामान्येन सर्वज्ञाद् वैशिष्ट्येन सर्वविधो ज्ञानमयतपसोऽक्षराद् हिरण्यगर्भो नामरूपमन्नञ्चेति जायन्ते।

अत्रैवेदमपि वक्तव्यं यज्ज्ञानगङ्गास्वरूपासूपनिषत्स्वेव न केवलमक्षराद् ब्रह्मणो जगत्सृष्टिः सम्पादिता, अपि तु महावैय्याकरणेन दार्शनिकेन भर्तृहरिणाऽपि तदेव व्याख्यातम्—

---

१. राममूर्ति शर्मा, डॉक्ट्रिन ऑफ माया, ए क्रिटिकल स्टडी, माया पर अध्याय, मेरठ, १९६६।
२. श्वेताश्वतरोपनिषद्, १.४.३, संपादक–एस. राधाकृष्णन्, प्रिंसिपल्स ऑफ उपनिषद्।
३. द्र. प्रो. राममूर्ति शर्मा, डॉक्ट्रिन ऑफ माया (माया पर अध्याय)।
४. एस. राधाकृष्णन्, मुण्डकोपनिषद्, १.१.८।
५. मुण्डकोपनिषद् शाङ्करभाष्य, १.१.८।
६. एस. राधाकृष्णन् सम्पादित मुण्डकोपनिषद्, १.१.८।
७. मुण्डकोपनिषद्, १.१.८।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः[१]॥

अनेनापि 'अक्षरात् सम्भवतीह विश्वम्' इति सिद्धम्, पुनः प्रसिद्धम्। उपनिषत्सारस्वरूपायां श्रीमद्भगवद्गीतायामपि अक्षरप्रयोगः सम्यग् दृश्यते। अतो गीतायामपि अक्षरतत्त्वं सम्यग्विचारितम्। तदेवम्—

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्चते'[२]॥

इत्युपदिश्य अक्षरतत्त्वस्य कूटस्थता निष्पाद्यत इति निःसंशयम्। परमत्रेयं विचिकित्सा यत् पञ्चदश एवाध्याये गीतायाः कथं पुरुषोत्तमस्याक्षरापेक्षयोत्तमता प्रदर्शिता, यदनेन श्लोकेन स्पष्टीभवति—

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः'[३]। अत्राऽयं विमर्शो यदुपरि निर्दिष्टम्—अक्षरस्य कूटस्थस्य सर्वोच्चता स्वत एव सिद्धा। अत इयं विप्रतिपत्तिर्यत् सर्वोच्चस्वरूपात् कूटस्थात् (अक्षरात्) पुरुषोत्तमस्योत्कृष्टता 'अक्षरादपि चोत्तमः' इत्युक्त्वा कथं सङ्केतिता। अत्रेत्थमवधेयम्—यत् संसारवृक्षस्य बीजस्वरूपादक्षरात् (मूलप्रकृतेः) अपि पुरुषोत्तमः अतिशयेनोत्तमोऽर्थात् क्षराक्षराभ्याम् उभाभ्यामपि पुरुषोत्तम उत्तमः स्वीक्रियते।

अयञ्च पुरुषोत्तमः नित्यशुद्धबुद्धमुक्तस्वभावो निर्गुणं ब्रह्मतत्त्वम् इत्यस्माद् उपरि उत्थापिता विप्रतिपत्तिर्न समीचीनेति साधु, इति भागवतं श्रीशाङ्करं मतम्[४]।

अत्रेदं न विस्मर्तव्यं यद् 'अक्षरादपि चोत्तमः' इत्यत्र अक्षरशब्दार्थः अनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षरः पुरुष ईश्वरः, न तु निर्गुणं ब्रह्म। अत एवात्र कूटस्थस्यार्थोऽनेकमायादिप्रकारेण स्थितो मायावी ईश्वर इति ज्ञेयम्। एवञ्चेत्, कथं नामरूपात्मकेन श्रीकृष्णेन 'अक्षरादपि चोत्तमः' इत्युक्त्वा सगुणाक्षरापेक्षया स्वकीया उत्तमता प्रकीर्त्तिता, इति न शङ्कनीयम्, परमात्मनः श्रीकृष्णस्य मूलस्वरूपस्य ब्रह्मस्वरूपसिद्धेः।

---

१. भर्तृहरि, वाक्यपदीय, १.१, पूना।

२. भगवद्गीता, १५.१६, सम्पादित–एस. राधाकृष्णन्, जार्ज एलेन और अनविन, लंदन।

३. वही १५.१८।

४. भगवद्गीता शाङ्करभाष्य, १५.१८, गीताप्रेस, गोरखपुर, ५वाँ संस्करण, सं. २०६१।

वस्तुतस्तु, अक्षरतत्त्वस्य गरिमा महिमा च विलक्षण एवात एवाभिव्यक्तम्—

विज्ञानात्मा सह देवैश्च सर्वैः
प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र।
यदक्षरं वेदयते यस्तु सोम्य
स सर्वज्ञः सर्वमेवाविवेश॥ इति। (प्र.उ. ४.४.११)

मन्येऽलमतिविस्तरेण।



# दर्शनेषु शक्तिस्वरूपविमर्शः

**प्रो. रामकिशोरत्रिपाठी**
आचार्यः, वेदान्तविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



यस्माज्जातमिदं सर्वं स्थितं यत्र विनश्यति।
यन्निमित्तं प्रभूतानां सा शक्तिरिति गीयते।।
शक्तिमतः शिवस्येयमिच्छा शक्तिस्वरूपिणी।
कार्यकारणभेदेन काली लक्ष्मीति भेदभाक्।।

गुणसाम्ये पराशक्तिः सा मूला प्रकृतिः स्मृता।
काली रजस्वती प्रोक्ता लक्ष्मीः सत्त्ववती मता।।

तमस्वती महानिद्रा यत्र सुप्तो जगत्पतिः।
निद्रां गते प्रजानाथे क्रियानाशे जगल्लयः।।

यद्वा सत्त्वप्रधानाऽसौ सरस्वतीति धीयते।
सैव जगद्विनाशाय मायामात्रमिदं स्मृतम्।।

पुरुषः केवलः प्रोक्तस्तत्तच्छक्तिसमाश्रयात्।
ब्रह्मविष्णुमहादेवाः ख्याता लोकप्रवर्तनात्।।

शक्तिं श्रितं ब्रह्म दधाति विश्वं
तदाश्रितं पाति विमर्शयुक्तम्।
सामर्थ्यशीलं च विनाशकर्तृ
शुद्धं हि मोक्षाय न भोगहेतुः।।

सर्गस्थित्युपसंहारकारणीं शक्तिं श्रितः परमात्मा सृष्टिस्थितिविनाशहेतुर्भवति। शक्तिहीनस्तु सर्वोपाधिरहिततया [1]"असङ्गोऽयमुच्यते'। शक्तिरेव प्रकृतिमायादिपदेन

---

१. असङ्गो ह्ययं पुरुषः (बृ. ४.३.१५)।

व्यपदिश्यते। सा चैका सती स्वगुणमहिम्ना काली लक्ष्मी सरस्वतीति नाम्ना लोके व्यवह्रियते। क्रियात्मको हि रजोगुणस्तद्वती शक्तिर्महाकालीति गीयते। तामाश्रित्य हिरण्यगर्भः सृजति चराचरम्। प्रकाशात्मकः सत्त्वगुणः, ज्ञानमन्तरा रक्षणस्यासम्भवात् पालनाय सत्त्वगुणात्मिका शक्तिर्महालक्ष्मीत्युच्यते। सत्त्वगुणात्मिकां शक्तिमाश्रितो विष्णुर्विभर्ति विश्वम्। तमसोऽज्ञानरूपत्वात् तमोगुणात्मिका शक्तिर्महानिद्रेत्यभिधीयते। तया प्रेरितो निद्रां गतो हिरण्यगर्भस्ततश्च लीयते जगत्। सा च शक्तिः सांख्यशास्त्रे मूलप्रकृतिरित्युच्यते।

**सांख्यशास्त्रे शक्तिस्वरूपम्**

त्रयाणां गुणानां साम्यावस्था मूलप्रकृतिरित्यभिधीयते।मूलप्रकृतिरविकृतिः। गुणानां च वैषम्यावस्था महदादिरूपेण विकृतिरित्युच्यते। अत्र मते पुरुषः कार्यकारणहीनो निर्लिप्तश्चास्ति।'असङ्गोऽयं पुरुष इति'[१]। विहिताविहितकर्मभिरपि न पुरुषोऽनुबध्यते, कर्मणश्चित्तधर्मत्वात्, न घटत्वं पटे समारोप्यते, अन्यधर्मस्यान्यत्रारोपे बन्धमुक्तव्यवस्थाऽनापत्तेः। न च दुःखयोगरूपबन्धस्य पुरुषासम्बन्धितया कश्चिदेव दुःखभोक्ता कश्चिन्नेतीति कथमिति वाच्यम्, पुरुषतादात्म्येन भोगोपपत्तेः। चित्तगतं दुःखं पुरुषे प्रतिबिम्बात्मनाऽवभासते। वास्तविकमधिष्ठानं चित्तमेव, स्वोपाधिपक्षपातित्वात् प्रतिबिम्बस्य।

यथा हि केवलो रक्तः स्फटिको लक्ष्यते जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः[२]।।

त्रिगुणसाम्यावस्थात्मकप्रकृतेः प्रथमोऽवस्थाविशेषपरिणामो बुद्धिः, सा चान्तःकरणं महत्तत्त्वमिति सांख्यैरुच्यते। तस्या एव सत्त्वासत्त्वाभ्यां बन्धमोक्षौ भवतः पुरुषस्य। बुद्धेः सत्त्वं नाम पुरुषेण सह संयोगः, तेन बध्यते पुरुषः। बुद्धेरसत्त्वं नाम संयोगाभावः, वियोग इति बुद्धिवियोगेन अपवर्गः आत्यन्तिकदुःखध्वंसात्मको मोक्षः पुरुषस्य। कर्त्री भोक्त्री सुखदुःखादिमती बुद्धिरेव। अयं घट इत्याकारा चित्तवृत्तिः प्रमाणम्, तज्जन्यो घटमहं जानामीति बोधः, स च बुद्धौ वर्तमानोऽपि बुद्धिगते पुरुषस्य प्रतिबिम्बे स्वाश्रयप्रतिबिम्बितत्वसम्बन्धेन वर्तते। तेन पौरुषेय इत्युच्यते। बुद्धेरेव ज्ञानवृत्त्यात्मकपरिणामश्चक्षुरादीन्द्रियात्मकनालिकाद्वारा घटादिविषयेण सह विषयाकारत्मकः सम्बन्धः। स च ज्ञानरूपो नान्यः। विषयाकारेणाऽऽकारितमिन्द्रियवृत्तिरूपं ज्ञानं बुद्धेरेव धर्मो न त्वात्मनः। एवमिच्छाकृतिसुखदुःखादयोऽपि परिणामा बुद्धेरेव।

---

१. सां.सू. १.१५; २. सांख्यवृत्तिसारे।

ननु 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः'[१]। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति'[२] इति श्रुत्यनुरोधेनात्मन एवोपादानत्वे सिद्धे प्रकृतेः कारणत्वं विफलमिति चेन्न, पुरुषस्य कारणत्वे कार्याविनाशित्वप्रसक्तेः। अथ च कार्यकारणयोरभेदात् कार्यनाशे कारणीभूतस्यात्मनोऽपि नाशापत्तेः। तथा हि सांख्यमते कार्यस्य कारणेनोपादानेन सहाभेदात् तादात्म्यसम्बन्धात्, कार्यस्य घटादेर्नाशे सति कार्यरूपतया घटाद्यभिन्नतया कपालादेर्नाशो भवति, तद्वदात्मनोऽपि नाशः स्यात्। पुरुषस्य घटादिकारणत्वे घटादिकार्यस्यापि नाशो न स्यात्। अनुमानप्रयोगश्च पुरुषः कारणत्वाभाववान् चेतनत्वात्, यन्नैवं तन्नैवं यथा प्रकृतिः। अत्र मते चेतनत्वं न ज्ञानाश्रयत्वं ज्ञानस्य पुरुषेऽभावात्। चेतनत्वञ्चात्र चेतन इत्यनुगतप्रतीत्या चेतनपदशक्यतावच्छेदकतया सिद्धजातिविशेषवत्त्वम्, तदेवात्मत्वम्। एवं बुद्धेरेव कर्तृत्वं कर्ताऽहमिति प्रतीतिस्तु बुद्धिधर्मारोपाद् भवति। तदुक्तम्—'पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्'[३]।

बुद्धिपुरुषयोरसत्यपि संसर्गे प्रतिबिम्बाश्रयदर्पणबिम्बभूतमुखसम्बन्ध इवोभयोराध्यासिकः सम्बन्धोऽस्ति। मुखदर्पणयोर्वास्तविकसम्बन्धाभावेऽपि दर्पणस्य स्वच्छतया तत्र प्रतिबिम्बिते मुखे स्वच्छत्वरूपोपाधिप्रयुक्ताध्यासिकमुखसम्बन्धत्वम्। एवमेव जगत्सिसृक्षया 'ममेदं कर्तव्यम्' इति अंशत्रयवती बुद्धिर्भवति। तत्र मदंशो बुद्ध्या सह पुरुषोपरागः चैतन्यसम्बन्धः स चारोपिताभेदात्मको बोध्यः।

ननु जडचेतनयोः कथम् अभेदः, अत्रोच्यते जडभूताया अपि बुद्धेः सत्त्वोद्रेकात् स्वच्छतया कथञ्चित् पुरुषसाम्यता भ्रमाद्भवति। मदंशः अस्मच्छब्दार्थः पुरुषस्तस्य बुद्धौ प्रतिबिम्बपतनाद् अभेदः समारोपितो भवति। अतो मदंशो बुद्धौ भासते। एवम् इदमंशो घटपटादिविषयस्तस्योपरागः बुद्ध्या सह ज्ञानात्मकवृत्तिरूपः सम्बन्धः। ज्ञानञ्चात्र चक्षुरादीन्द्रियद्वारा जायमानं बुद्धिपरिणामविशेषात्मकम् अयं घट इत्याकारकम्। स च सम्बन्धो वास्तविकः। तद्यथा फूत्कारजन्यवायुनाऽभिहितं यद् दर्पणं तत्र फूत्कारगतं वाष्पात्मकं मालिन्यमुपसंक्रामति। तथा विषयस्य बुद्ध्या सह संम्बन्धो ज्ञानात्मको वास्तविकः। एवमेव कर्तव्यं घटादिनिष्ठ उत्पादनादिक्रियात्मको व्यापारांशः, तस्य बुद्ध्या सह सम्बन्धो घटः कर्तव्य इत्याकारकज्ञानवत्त्वमेव बोध्यः। सोऽपि वास्तविकः। एवमंशत्रयवती बुद्धिरेव सृष्टौ कारणम्। कार्यकारणनिर्लिप्तः पुरुषः। तथा चोक्तम्—

---

१. तै.उप. २.१; २. तै.उप. ३.१।

३. न्या.सि. प्रत्यक्षे।

प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम्।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा।।
बन्धमोक्षौ सुखं दुःखं मोहापत्तिश्च मायया।
स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी[१]।।

सा च प्रकृतिः सांख्यदर्शने शक्तिः, तयाऽधीनं जगत् सृज्यते, स्थीयते, लीयते च।

**योगशास्त्रे शक्तिः**

योगशास्त्रेऽपि सांख्यशास्त्रवत् पञ्चविंशतितत्त्वानि अभिमतानि। सांख्यशास्त्रे ईश्वरो नैवाभिमतः, योगशास्त्रे हि ईश्वरतत्त्वमप्यभिमतमिति सेश्वरवादियोग-दर्शनमित्युच्यते। योगशास्त्रेऽपि जगतो जन्मस्थितिलयकारणं सांख्यदर्शनाभिमता मूलप्रकृतिरेव। इतोऽन्यत् सम्यगवलोक्य योगदर्शनं सांख्यदर्शनाद् व्यतिरिक्तमिति केचन।

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्[२]।।

एकमेव शास्त्रं संख्यामधिकृत्य सांख्यमित्यभिधीयते। तदेव चाध्यात्मविद्यापरत्वेन योग इत्युच्यते।

'संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकीर्तिताः'[३]।।

'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते'[४], 'योगश्चित्तवृत्तिनिरोधः'[५] इति योगार्थनिर्वचनेन योगोऽध्यात्मविद्या समाधिर्वोच्यते। तथा चोक्तम्— 'अध्यात्मयोगाधिगमेन देवं मत्त्वा धीरो हर्षशोकौ जहाति'[६]। अध्यात्मविद्याऽत्र समाधिरूपा वाच्या। समाधिश्च द्विधा सम्प्रज्ञातसमाधिः, असम्प्रज्ञातसमाधिश्च। यथा नैकसमित्समेधितोऽग्निरेकाकारतामापन्नः समित्समूहं भस्मसात्कृत्य स्वयं शाम्यति, तद्वच्चित्तवृत्तयो यदैकत्र वस्तुनिरता भवन्ति। यदा तासां नैकत्वं व्याहन्यते। या शिष्यते सा ध्यानोपयोगिनी प्रज्ञा इत्युच्यते। तद्युता समाधिः सम्प्रज्ञातसमाधिः

---

१. सांख्यवृत्तिसारे; २. गीता-५.४।
३. योगदर्शनभूमिकायाम्; ४. तत्रैव।
५. यो.सू. ६. कठ.उप. १.२.१२।

कथ्यते। 'वितर्कविचारानन्दास्मितारूपानुगमात्सम्प्रज्ञातः'[१]। यदा ध्यातृध्यानध्येयादीनां लये सति वृत्तिहीनं निश्चेष्टितं निरालम्बनञ्च चित्तं भवति, तदा निर्बीजसमाधिरसम्प्रज्ञात उच्यते। समाहितचित्तस्य या प्रज्ञा जायते सा ऋतम्भरेत्युच्यते। सा च प्रज्ञा श्रवणमनननिदिध्यासनादिना द्रढीभूताऽमृतत्वाय कल्प्यते।

आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्[२]।।

**तन्त्रशास्त्रे शक्तिः**

शक्त्यधीनं जगज्जन्म शक्त्या स्थितिर्लयस्तथा।
कार्यकारणनिर्मुक्तं शिवतत्त्वमुदाहृतम्।।

मातृकाधामतत्त्वञ्च पीठलिङ्गमिति त्रयम्।
ततोऽपि या पुराऽऽसीत् सा त्रिपुरेति कथ्यते।।

बिन्दुवर्णक्रमेणासौ ऋग्यजुःसामरूपिणी।
शब्दार्थव्यवहारेऽपि कारणं मन्यते बुधैः।।

शब्दशक्तिः पुरा जाता ततश्चार्थो विवर्तते।
ततः प्रवर्तते लोकव्यवहारः सनातनः।।

निरवयवा बिन्दुरूपिणी पराशक्तिश्शिवेच्छया वर्णरूपपदरूपवाक्यरूपा सती वेदस्वरूपं भजते।ततश्च क्रियारूपोपाधिना ऋग्यजुःसामरूपतामापद्यते।

ममैवाज्ञा परा शक्तिर्वेदसंज्ञा पुरातनी।
ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते[३]।।

साक्षिभूत उदासीने च शिवे यदा प्राणिनामदृष्टवशात् स्वान्तःसंहृतविश्वसिसृक्षा जायते। तदा विमर्शात्मिका परा शक्तिस्तत्तत्कर्मानुरूपं विश्वं सृजति। ज्ञानेच्छाक्रियाणां सृष्टावुपयोगित्वम्, अतः सैव शक्तिर्ज्ञानरूपा इच्छारूपा क्रियारूपा च भवति। उदासीनः साक्षिभूतश्च शिवः प्राणिनामदृष्टवशाज्जायमानं जगत् पश्यति।

न तस्य कार्यं करणञ्च विद्यते।
न तत्समश्चाभ्यधिकश्च दृश्यते।
स्वाभाविकी ज्ञानबलक्रिया च[४]।।

---

१. यो.सू. १.१७; २. व्या.भा.यो.सू. १.४८।
३. कूर्मपुराणे; ४. श्वेता.उप. ६.८।

जगतः सृष्टिप्रलयविषये श्रुतिस्मृतीतिहासपुराणादयो मानानि। तत्र प्रलयो नामानन्तशक्तिकस्य ब्रह्मणः स्वरूपमात्रेण कञ्चित्कालमवस्थानम्। पूर्वसृष्टिदशायां येषां जीवानां ज्ञानानुदयान्मोक्षो न जातस्तेषामदृष्टरूपाणि पञ्चमहाभूतानि कार्पासबीजे पटा इव सूक्ष्मरूपेण प्रलयकालीनब्रह्मणि तिष्ठन्ति।

सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति।
पुनश्च जन्मान्तरकर्मयोगात् स एव बीजः स्वपिति प्रबुद्धः[१]।।

तान्वेवादृष्टानि परमेश्वरेच्छया फलोन्मुखानि वियदादिरूपेण पूर्वमपञ्चीकृतानि सूक्ष्मरूपाणि ततश्च पञ्चीकृतानि स्थूलरूपाणि शक्त्या जायन्ते। जगज्जन्महेतुरसौ शक्तिर्लोकस्थितौ लये च कारणं भवति।

लोके यत् पदार्थजातस्य कारणसामर्थ्यं दृश्यते, यथा घटं प्रति कपालस्य पटं प्रति तन्तूनां तत्सर्वं सर्वेश्वरी शक्तिरेव नान्यत् किञ्चित्।

यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता।
सा सा सर्वेश्वरी देवी स स सर्वो महेश्वरः[२]।।

**आगमेषु शक्तिः**

यतो जगत् समुद्भूतं यत्र स्थितं समेधते।
यत्र च लयतां याति तत्तत्त्वं परमेश्वरः।।
स च कूटस्थरूपत्वान्न किञ्चिद्विचेष्टते।
तद् भिन्ना क्रियाशक्तिर्ज्ञानशक्तिश्च कारणम्।।
आगमा द्विविधाः प्रोक्ता वैष्णवशैवभेदतः।
सर्वत्रापि पराशक्तेः कार्यकारणहेतुता।।

वैष्णवागमेषु पाञ्चरात्रस्यैव साहित्यं प्रधानतयोपलभ्यते, तदपि स्वल्पम्। अत्र शास्त्रे शक्तिपदेन लक्ष्मीः शक्तिमाँश्च विष्णुरित्यभिधीयते। सा च शक्तिः सृष्टिदशायामिच्छापरिणतिभेदेन द्विधा विभज्यते। तत्र जगत्सिसृक्षात्मिका शक्तिः क्रियाशक्तिः, परिणामोपादानशक्तिर्भूतशक्तिरित्युच्यते।

क्रियाख्यो योऽयमुन्मेषः स भूतिपरिवर्तकः।
लक्ष्मीमयः प्राणरूपो विष्णोः सङ्कल्प उच्यते[३]।।

---

१. योगिनीहृदये सेतुबन्धे; २. योगिनीहृदये, ३१।
३. अहिर्बुध्न्यसंहिता।

जगत उत्पत्तौ स्थितौ पालने विनाशे च शक्तिरेव कारणम्। उक्तञ्च मार्कण्डेयपुराणे—

त्वयैतद्धार्यते विश्वं त्वयैतत् सृज्यते जगत्[1]।
त्वयैतत् पाल्यते देवि त्वमत्स्यन्ते च सर्वदा[2]।।

शैवदर्शनानां साहित्यं हि अद्यापि विपुलरूपेणोपलभ्यते। तत्र प्रसिद्धानि प्रत्यभिज्ञादर्शनं, पाशुपतदर्शनं, रसेश्वरदर्शनं, वीरशैवदर्शनं, व्याकरणदर्शनञ्च।

**प्रत्यभिज्ञादर्शने शक्तिः**

प्रत्यभिज्ञादर्शनं कश्मीरक्षेत्रे समुद्भूतं तत्रैव च प्रचारतामगमत्, अतः कश्मीरशैवदर्शनपदेन ख्यातम्। अत्र दर्शने बन्धमोक्षयोर्हेतुः शक्तिः नैकजन्मार्जितकल्मषध्वान्तधूसरितान्तःकरणो मायाकल्पितवासनावशान्निषिद्धाचरणाधिगतक्लेशनिवृत्तये प्रयतमानोऽपि सद्गुरूपदेशमन्तराऽनधिगततत्त्वविज्ञानत्वाज्जन्मजरामरणजननीजठरशयनादिदुःखतप्तः सद्गुरुमुपसरति समित्पाणिः।

'शक्तिपातवशाद्देवी जीयते सद्गुरुम्प्रति'[3]। परमेश्वरः शक्तिसम्पन्नो विभर्ति विश्वमखिलं चराचरम्। शक्तिश्चात्र मायाप्रकृतिपृथ्व्यादिरूपा शक्तिमाँश्च महेश्वरः। पदार्थद्वयसमन्वितं प्रपञ्चजातं चिद्भिन्नं शक्तिरूपं शक्तिमच्चिदुच्यते। उक्तञ्च—

शक्तिश्च शक्तिमाँश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत्सर्वं शक्तिमाँस्तु महेश्वरः[4]।।

पशुभूतस्य जीवस्य शक्त्यैव बन्धमोक्षौ।अविद्याशक्तिसम्पादितकालुष्यवशात् सर्गादिषु प्रवृत्तिस्ततश्च बन्धो जीवानाम्। साधनचतुष्टयसम्पत्त्यनन्तरमात्मसाक्षात्कारे जाते सकलानर्थमूलाऽविद्या निवर्तते। अविद्यानिवृत्तौ हि बन्धनिवृत्तिः।

बध्नाति काचिदपि शक्तिरनन्तशक्तेः
क्षेत्रज्ञमप्रतिहता भवपाशजालैः।
ज्ञानासिना च विनिकृत्य गुणान् अशेषान्
अन्या करोत्यभिमुखं पुरुषं विमुक्तौ[5]।।

---

१. मा.पुरा. देवीमाहात्म्ये १.७५;  २. मा.पुरा. देवीमाहात्म्ये, १.७६।
३. परमार्थसारे, पृ. १२;  ४. श्रीसर्वमङ्गलाशास्त्रे।
५. अवधूतसिद्धपादग्रन्थे।

परमेश्वरस्य पराशक्तेः समुद्भूतासु नैकासु शक्तिषु प्रमुखाः चिद्-आनन्द-इच्छा-ज्ञान-क्रिया-शक्तयः सन्ति। ताभिरेव महेश्वरः प्रकाशितः सन्नानन्दमनुभवन् सर्वतन्त्रस्वतन्त्रः सर्वज्ञः, जगदुपादानश्च भवति।

पराशक्तेस्तु सञ्जाता चिच्छक्तिस्तु तदुद्भवा।
आनन्दशक्तिस्तज्जा स्यादिच्छाशक्तिसमुद्भवा।।
ज्ञानशक्तिस्ततो जाता क्रियाशक्तिस्तु पञ्चमी[१]।।

तत्र 'प्रकाशरूपा चिच्छक्तिः'[२], 'स्वातन्त्र्यमानन्दशक्तिः'[३], 'तच्चमत्कार इच्छाशक्तिः'[४], 'परतस्तस्मिन् विश्वलक्षणे कार्ये यज्ज्ञानम्, तत्प्रकाशनशक्तिरूपता सा ज्ञानशक्ति'[५], 'निर्माणात्मिका क्रियाशक्तिः'[६]। तदित्थं प्रत्यभिज्ञादर्शने सकलोऽपि क्रियाव्यवहारः शक्त्यधीनः।

**वीरशैवदर्शने शक्तिः**

स्थूलसूक्ष्मविशिष्टाऽसौ चिदचिद्रूपधारिणी।
द्विधा शक्तिरसौ ज्ञेया शिवजीवविशेषिका।।

एकमेव हि चैतन्यं शक्तिधर्मविशेषितम्।
जीवशिवस्वरूपेण कार्यकारणमाश्रितम्।।

वीरशैवदर्शने शक्तेः स्वरूपं द्वयं सूक्ष्मचिदचिद्रूपं स्थूलचिदचिद्रूपञ्च। तत्र सूक्ष्मशक्तिविशिष्टं तत्त्वं शिवः स्थूलशक्तिविशिष्टञ्च जीव इत्युच्यते। तयोश्च शक्तिविशिष्टयोरद्वैतं शक्तिविशिष्टाद्वैतपदेनोच्यते। अग्नेराविर्भूतस्फुलिङ्ग इव जीवः शिवादाविर्भूतस्तदंशत्वान्न ततो भिन्नो न वाऽभिन्नः। अंशांशिनोरभेदे जीवः शिव इव सर्वज्ञः स्यात्, सर्वथा भेदे हि जीवो घटादिवज्जडः स्यात्। अतोंऽशांशिनोर्न भेदो न वाऽभेदः, अपि तु भेदाभेद इति केचित्। धर्मिधर्मयोरिव शक्तिशक्तिमतोरभेदः, तत्र धर्मी शिवः धर्मश्च शक्तिः। अत्र मते शक्तेरेव कारणत्वं कार्यत्वञ्च।

तत्र सूक्ष्मचिदचिद्रूपशक्तेः कारणत्वम्, स्थूलचिदचिद्रूपशक्तेः कार्यत्वमिति। शिवशक्त्योरभेदाङ्गीकारेऽपि तन्निष्ठासाधारणकारणरूपायाः शक्तेरेव परिणामित्वं न शिवस्य। शक्त्यादिपृथिवीपर्यन्तस्य सकलतत्त्वसमुदायस्य शक्तिस्वरूपत्वं प्रतिपादयन्नाह—

---

१. शिवपुराणम्-६.१६.५४-५५;
२. तन्त्रसारे, पृ. ६।
३. तत्रैव;
४. तत्रैव।
५. शिवदृष्टिवृत्तौ, पृ. १८;
६. तन्त्रसारे, पृ. १।

'शक्तिरेव जगत् सर्वं शक्तिमाँस्तु महेश्वरः'[१]।

तथा भगवती श्रुतिः—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्[२]॥

सूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिवः 'तत् सृष्ट्वा तदेवानुप्राविशत्'[३] इति श्रुत्यर्थानुगतः स्वस्मिन्नविनाभावमापन्नविमर्शशक्तिपरिजृम्भितशुद्धमायासहकृतत्वेन कलादिभूम्यन्तत्रिंशत्तत्त्वात्मना स्थूलचिदचिद्रूपशक्त्यात्मकप्रपञ्चाकारं सकलकार्यजातं सृष्ट्वा स्वयमात्मतया प्रविश्य 'सच्च त्यच्चाभवत्' निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च'[४] इति श्रुत्युक्तसर्वान्तर्यामित्वेन सर्वशरीरकतया विराजते।

शैवाद्वैतमतप्रसिद्धपतिपशुपाशादिरूपपदार्थानां विभागोऽपि शक्तिकृतः। एतेष्वेव प्रेरयितृभोक्तृभोग्यव्यवहारोऽभिमतः। तत्र शुद्धोपाध्युपहितः सूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिवः सर्वाधिपतित्वेन सर्वज्ञः प्रेरयितेत्युच्यते, 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः'[५] इति श्रुतेः। तथा च मिश्रोपाध्युपहिताः स्थूलचिदचिद्रूपशक्तिविशिष्टा जीवाः पशुभूता वह्नेर्विस्फुल्लिङ्गादिवत् शिवांशाः किञ्चिज्ज्ञा भोक्तार इत्युच्यन्ते। 'यथा सुदीप्तात् पावकाद् विस्फुलिङ्गा सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधा सौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति'[६] इति श्रुतिः, 'अंशो नानाव्यपदेशात्'[७] इति सूत्रम्। तथा च शुद्धतामसरूपमत्यन्तगूढचैतन्यं जडमव्यक्तं पाशत्वेन भोज्यमित्युच्यते।

किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान्।
अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः॥
परिभ्रमन्ति संसारे निजकर्मानुसारतः[८]॥

एवमनादिमलत्रयाश्रयत्वेन संसारदाहदन्दह्यमानो जीवोऽनेकजन्मार्जितसुकृतजन्यस्वकर्मपरिपाकवशाद् विनष्टमलवासनत्वेन शुद्धान्तःकरणो यदा जायते, तदाऽस्य किञ्चिज्ज्ञत्वकिञ्चित्कर्तृत्वादिशक्तयो भक्तिरूपेण परिणमन्ते। तथा

---

१. सि.शि. २०.४; २. श्वेता.उप. ४.१०।
३. तै.उप. २.६; ४. तत्रैव।
५. महाना.उप. १९; ६. मुण्ड.उप. २.१.९।
७. ब्र.सू. २.३.४३; ८. सिद्धान्तशिखामणिः, ५.४६।

चोक्तम्—'कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते'[१]। शिवभक्तिसम्पन्नो जीवः पिण्ड इत्युच्यते। सा च भक्तिर्न शक्तेर्भिन्नाऽपि तु शक्तिरूपैवास्ति।

शक्तिरेव स्मृता भक्तिर्भक्तिरेव हि सा सदा।
शक्तिभक्त्योर्न भेदोऽस्ति परमार्थनिरूपणे[२]।।

**व्याकरणदर्शने शक्तिः**

अनादिध्वंसहीनं यच्छब्दतत्त्वमिहोच्यते।
व्यापकत्वात् परं ब्रह्म जगदस्माद् विवर्तते।।

शब्दतत्त्वमुपादानं निमित्तं शक्तिरुच्यते।
कार्यश्चार्थात्मको लोकः शब्दाद्वैतनये स्मृतम्।।

व्याकरणदर्शनेऽक्षरमेव परब्रह्म परशिवश्चोच्यते। वाक्शक्तिश्च पराशक्तिरिहोच्यते। व्याकरणदर्शने शब्दो हि धर्मविशेषोऽवस्थाविशेषो वा प्रपञ्चोपादानहेतुः।

ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते[३]।।

तथा हि सकलं नामरूपात्मकं जगत् स्वरूपहीनं क्रमहीनञ्च परस्यां वाचि निलीनं परबोधेच्छया वक्तृकृतकण्ठताल्वाद्यभिघातजन्यध्वन्यात्मकं नामरूपं तदर्थबोधे च रूपात्मकं जायते। शब्दब्रह्मणो निष्पन्नं तत्रैव स्थितमर्थात्मकं जगत् तत्रैवोपहृतक्रमेण विलीयते। अतः 'यतो वा इमानि भूतानि जायन्ते'[४] इति श्रुतिबोधितं कारणत्वं शब्दब्रह्मण एव। तच्च शक्तिनिबद्धं शब्दतत्त्वमेकमेवाद्वितीयं भिन्नशक्त्याश्रयत्वेन भिन्नमिव प्रतीयते।

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते[५]।।

सा च शब्दशक्तिः सच्चिदानन्दरूपा क्रियारूपा चास्ति। तत्रानादिनिधनरूपा परावाक् त्रिकालाबाध्यस्वरूपत्वात् सद्रूपा, पश्यन्ती वाग् हि योग्यभिगम्यानहद-नादरूपत्वाद्रानन्दरूपा, मध्यमावाक् स्फोटरूपतयाऽर्थप्रकाशकत्वाच्चिद्रूपा, वैखरीवाग्ध्वनिरूपत्वात् क्रियारूपा।

---

१. शिवगीता, १.१६;
२. अनु.सू. २.२६.२८।
३. स्वोपज्ञवृत्तौ;
४. तै.उप. ३.१।
५. वाक्यपदीये-१.२।

तत्र पूर्वं वर्णपदवाक्यादिक्रमेण शब्दस्वरूपमुत्पद्यते, ततश्च मध्यमानादोऽभिव्यज्यते। अभिव्यक्तमध्यमानादोत्साहितस्फोटरूपार्थाभिव्यक्तिः। द्विविधं जगत् शब्दरूपमर्थरूपञ्चेति। वर्णमालाया आद्यक्षरोऽकारो ब्रह्मरूपो निर्गुणः स्वतन्त्रोऽनुत्तरशिवरूपः। स च चित्कलारूपमिकारमाश्रित्य सगुणः सावयव ईश्वरोऽर्थप्रकाशनक्षमो भवति।

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु।
चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः[१]।।

एकमद्वितीयमव्यक्तञ्च शब्दतत्त्वं बिन्दुनादवर्णपदवाक्यादिरूपेणाभिव्यक्तं तत्तद्ध्वनिभाग् भवति। वर्णपदवाक्यध्वनिभी रूषितं तत्तदर्थबोधकतया स्फोटपदाभिधेयमिति। स्फुटति अर्थोऽस्मादिति व्युत्पत्तेः। तत्र बिन्दुरूपिणी परावाक् ततो नादोऽभिव्यज्यते। स च नादः कण्ठदेशमधिगतस्तत्तत्स्थानेष्वभिव्यक्तो वर्णरूपतां भजते। वर्णसमुदायः पदम्, आकाङ्क्षायोग्यतासन्निधिमत् पदसमुदायो वाक्यम्। तद्ध्वनिभी रूषितोऽर्थबोधकस्फोटरूपशब्दः, वर्णस्फोटपदस्फोट-वाक्यस्फोटभेदभाग् भवति।

शब्दस्यार्थबोधसामर्थ्यं शक्तिपदेनाभिधीयते। तच्च सामर्थ्यं पदपदार्थयो-स्तादात्म्यरूपं वाच्यवाचकभावापरपर्यायरूपञ्चास्ति। तदेव शब्दार्थयोः सम्बन्धः। इदं शब्दार्थतादात्म्यं शक्तिरित्युच्यते। शक्तिरसौ शब्दधर्मत्वात्तदभिन्ना सती अर्थबोधोपकारिका भवति।

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः[२]।।

**न्यायदर्शने शक्तिः**

यत्सत्त्वे कार्यसद्भावो यद्विना जायते न तत्।
अन्वयव्यतिरेकाभ्यां स्वकार्यात् पूर्ववृत्तिकम्।।
कार्यं प्रति स्वभावेन कारणं वस्तु सर्वदा।
इति न्यायविद आहुः किमर्थं शक्तिकल्पना।।

शक्तिः वह्नौ दाहजननसामर्थ्यं यद्वा कपालादिषु घटरूपकार्यजननसामर्थ्यं शब्देषु चार्थबोधसामर्थ्यं न द्रव्यादिपदार्थव्यतिरिक्तम्। तस्य कार्यजनन-

---

१. नन्दिकेश्वरकाशिका-१.२; २. वाक्यपदीये-२.३२।

सामर्थ्यस्यान्वयव्यतिरेकाभ्यां सिद्धत्वान्न पदार्थान्तरत्वम्। सा च शक्तिस्त्रिधा— सहजा शक्तिः, आधेयशक्तिः, पदशक्तिश्च। तत्र दाहादिकार्यजननसामर्थ्यरूपा वह्न्यादिनिष्ठा सहजा शक्तिः। आधेयशक्तिश्च प्रोक्षणादिजन्या व्रीह्यादिनिष्ठा, भस्मादिजन्या कांस्यपात्रादिनिष्ठा शुद्ध्यात्मिका चाधेयशक्तिः। पदशक्तिश्च तत्तदर्थनिरूपिता तत्तत्पदनिष्ठा। ताः सर्वा अपि पदार्थान्तरमिति प्रभाकरः। तन्न स्वीकुर्वन्ति तार्किकाः। तथा हि चन्द्रकान्तमणिमन्त्रौषध्यादिविशिष्टेन वह्निना दाहो न जन्यते, मणिमन्त्रौषध्यादिवैशिष्ट्यशून्येन उत्तेजकसूर्यकान्तमण्यादिसमवहितेन वा वह्निना दाह उत्पद्यते, अतोऽस्ति काचिद्दाहानुकूला वह्नौ शक्तिः, या चन्द्रकान्तमण्यादिप्रतिबन्धकेन प्रतिबध्यते, प्रतिबन्धकराहित्ये उत्तेजकसमवहिते च जायते। यदि शक्तिरतिरिक्तपदार्थो न स्यात् तदा सत्यपि प्रतिबन्धके तृणादिकारणकूटसामग्रीसमवहितेन वह्निना दाह उत्पद्येत, न चोत्पद्यतेऽतोऽतिरिक्तः शक्तिपदार्थ इति मीमांसकाः।

अतिरिक्तशक्तिकल्पनायां पूर्वोक्तनाश्यनाशकभावकल्पनायाञ्च महद्गौरवमिति मत्वा लाघवाद्दाहत्वावच्छिन्नं प्रति चन्द्रकान्ताद्यभावविशिष्टवह्नित्वेन चन्द्रकान्ताद्यभावविशिष्टवह्नेः कारणत्वस्वीकारेणैव मण्यादिसमवधाने दाहापत्तिवारणे सम्भवेऽतिरिक्तशक्तिकल्पनाया निरर्थकत्वात्। यद्वा दाहत्वावच्छिन्नं प्रति चन्द्रकान्तमण्यभावस्य, मन्त्राभावस्य, ओषध्यभावस्य वह्नेश्च पृथक् पृथक् कारणत्वं स्वीकार्यम्। 'मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते'[१]। एतन्मते प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वरूपं बोध्यम्। तथा हि दाहरूपकार्यस्य कारणीभूतोऽभावः चन्द्रकान्तमण्याद्यभावस्तत्प्रतियोगित्वं चन्द्रकान्तमण्यादौ प्रतिबन्धके। कार्यानुकूलधर्मविघटकत्वं नात्र प्रतिबन्धकत्वं तथा सति बाधज्ञानस्यानुमितिप्रतिबन्धकत्वमापद्येत।

ननु प्रतिबन्धकाभावस्य स्वतन्त्ररूपेण न साधारणकारणत्वं सत्यपि प्रतिबन्धक उत्तेजकसमवधाने दाहरूपकार्यजननादिति चेन्न, उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात्। दाहं प्रति न केवलं चन्द्रकान्तमणिः प्रतिबन्धकः, किन्तु उत्तेजकाभावविशिष्टचन्द्रकान्तमणिः प्रतिबन्धकः, तदभावश्च कारणम्, तथा च यत्र सूर्यकान्तमणिचन्द्रकान्तमणी वर्तेते, भवति च तत्र दाहः, तादृशस्थले सूर्यकान्तस्य, सत्त्वात् सूर्यकान्तात्मकोत्तेजकाभावो न वर्तते, किन्तु देशान्तरे वर्तते, अतः सूर्यकान्तात्मकोत्तेजकाभावविशिष्टः कश्चिद्देशान्तरीयचन्द्रकान्तप्रतिबन्ध-

---

१. न्या.सि. प्रत्यक्षखण्डे।

कत्वेनाभिमतः। स चात्र नास्ति किन्तु उत्तेजकाभावविशिष्टतादृशदेशान्तरीय-चन्द्रकान्ताभावरूपकारणस्यात्र सत्त्वाद् भवति दाहः।

प्रोक्षणादिकर्मणाऽभिव्यक्तद्रव्यसंस्कारमेवाधेयशक्तिरूपत्वेन स्वीकुर्वन्ति मीमांसकाः। स च संस्कारो न स्वाश्रयद्रव्यातिरिक्तः कश्चित् पदार्थः। पदशक्तिस्तु पदपदार्थयोः सम्बन्धविशेषः। उक्तञ्च 'पदेन सह पदार्थस्य सम्बन्धः'[१]। स च 'अस्मात् पदादयमर्थो बोधव्यः, इदं पदममुमर्थं बोधयतु' इतीश्वरेच्छारूपः शक्तिः, तत्र प्रथमः स्वजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वं पदस्यार्थे सम्बन्धः। द्वितीयस्तु 'एतदर्थनिष्ठप्रकारतानिरूपितविषयित्वनिष्ठप्रकारता-निरूपितबोधनिष्ठप्रकारतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयः पदमिति बोधः'। स च सम्बन्धो न पदपदार्थातिरिक्तः कश्चित् पदार्थः।

**मीमांसादर्शनाभिमतशक्तिस्वरूपविमर्शः**

मण्यादिसन्निधाने हि वह्नौ दाहो न जायते।
प्रतिबन्धकहीनो य उत्तेजकसमन्वितः॥

दाहस्तत्र प्रवर्तेत तस्माद्वह्निर्न कारणम्।
पदार्थो वह्निनिष्ठोऽयं शक्तिरूपः सनातनः॥

यत्प्रतिबन्धमात्रेण कारणेषु च सत्स्वपि।
न कार्यं जायते तत्र कारणे शक्तिनिग्रहात्॥

मीमांसकाः सप्तपदार्थातिरिक्तत्वेन शक्तिपदार्थं स्वीकुर्वन्ति। ते हि प्रतिपादयन्ति, यन्मणिमन्त्रादिसमवहितेन वह्निना दाहो न जायते, मण्याद्यपसारेण तत्रोत्तेजकसमवधानेन वा दाहो जायते, अतः कल्प्यते, यदस्ति काचिद् वह्निनिष्ठा दाहजनिका शक्तिः या मण्यादिना प्रतिबद्धा सती प्रतिबन्धकमण्यपसारेण तत्रोत्तेजकसमवधानेन च दाहोत्पादिका भवति। यदि दाहकार्यं प्रति वह्न्यतिरिक्ता काचित् शक्तिर्न स्यात्, तदा सत्यपि प्रतिबन्धके वह्निसमवधाने दाहो जायेत।

सा शक्तिर्न द्रव्यरूपा द्रव्यगुणादावपि सत्त्वात्। यद्धि द्रव्यं तत्र गुणाश्रितं भवति, शक्तिस्तु गुरुत्वगुणाश्रिताऽप्यस्ति। दृष्टा चाद्यपतनरूपकर्मणोऽ-समवायिकारणरूपा शक्तिः गुरुत्वे। एवं शक्तिर्गुणकर्मणोरप्यन्तर्भवितुं नार्हति, गुणस्य गुणे कर्मणश्च कर्मण्यनङ्गीकारात्। तस्या उत्पत्तिविनाशित्वान्न सामान्यविशेषसमवायेष्वन्तर्भावः। सा च शक्तिः वह्निसहभावेन वह्निवद्

---

१. न्या.सि. प्रत्यक्षखण्डे।

दाहकारणतया स्वीक्रियताम्, वह्निनिष्ठदाहजनकतावच्छेदकतया वा मन्यताम्, नात्राग्रहो मीमांसकानाम्। शक्तेः पदार्थान्तरसाधनमात्रे तात्पर्यं तेषाम्।

तथा चानुमानम् 'वह्निर्दाहानुकूला द्विष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वात् अदृष्टसमवाय्यात्मवत्'। यत्तु नैयायिकैर्वह्नित्वेन वह्नेः शक्तित्वेन वह्निनिष्ठशक्तित्वेन वा शक्तेश्च दाहं प्रति कारणत्वे गौरवात्, शक्तिविशिष्टवह्नित्वेनैव कारणत्वमभिमतम्। तन्निराकुर्वन्तो मीमांसकाः प्राहुः घटादिकं प्रति तत्तत्कारणेषु घटाद्यनुकूलां शक्तिं कल्पयित्वा तादृशविलक्षणशक्तिमत्त्वेनैव कारणत्वस्याङ्गीकारात्, दण्डचक्रादि-भेदेनापि न कारणबाहुल्यमित्यपि लाघवमस्तिशक्तिस्वीकारे।

**वेदान्तदर्शने शक्तिस्वरूपम्**

वेदस्य चरमो भागस्तत्रत्यतत्त्वनिश्चयात्।
ख्यातो वेदान्तनाम्नाऽयं सर्वदर्शनभेदकृत्।।

प्रतिपादनभेदाद्धि प्रतिपादकभेदतः।
सम्प्रदायाः प्रवर्तन्ते तेषां सिद्धान्तभेदतः।।

मतान्यपि विभिन्नानि वेदान्तदर्शनेऽभवन्।
तत्रोक्तं शक्तिरूपं यत् कथ्यते सारदृष्टितः।।

वेदान्तिनो हि 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति'[1], 'तस्माद्वा एतस्मादाकाशः सम्भूतः' इति श्रुतिमानतः प्रपञ्चजनिस्थितिलयस्थानं ब्रह्मेति स्वीकुर्वन्ति। तत्र च रामानुजीयाः चिदचिद्विशिष्टं ब्रह्मैव जगत्कारणमिति मन्यन्ते। शक्तिश्चात्र सृष्ट्युपकरणभूता माया, सा प्रकृतिरित्युच्यते, विकारान् प्रकरोतीति व्युत्पत्तेः। सा च त्रिगुणस्वरूपा, त्रिगुणातिरिक्तप्रकृतौ मानाभावात्। इदमेव त्रिगुणं पूर्वावस्थोपमर्दकावस्था-भेदांच्चतुर्विंशतितत्त्वानि मूलप्रकृतिमहदहङ्कारैकादशेन्द्रियाणि पञ्चभूतानि चेति।

माध्वा अनन्तगुणसमन्वितो विष्णुरेव स्वशक्त्या जगत् सृजति स्थापयति उपसंहरति च। उत्पत्तिः, स्थितिः, संहारः, नियमनम्, ज्ञानम्, आवरणम्, बन्धः, मोक्षश्चेत्येते गुणा भगवति विष्णावेव वर्तन्ते। अचिन्त्याधेयसहजपदस्वभावा विष्णोः शक्तिर्लक्ष्मीः परमात्माधीनाऽपि तद्भिन्नाऽस्ति। सा च सृष्टौ निमित्तम्।

अद्वैतवादिनः शङ्कराचार्यप्रभृतयस्तु मायोपहितस्य ब्रह्मणः कारणत्वं स्वीकुर्वन्ति। शुद्धस्य ब्रह्मणो जगतो जनिस्थितिलयकारणत्वासम्भवात्।

---

१. तैत्ति.उप. ३.१।

तत्रोपहितस्योपादानत्वे हि ब्रह्मणो विकारापत्तिः 'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायेन प्रपञ्चस्यापि ब्रह्मवत् सत्यत्वनित्यत्वापत्तिः स्यादत आह—विवर्तोपादानत्वं ब्रह्मणः, परिणामस्त्वविद्यायाः। अविद्यायाश्चाधिष्ठानमन्तरा उपादानत्वासम्भवात्, अधिष्ठानञ्चात्र चैतन्यम्। ब्रह्माश्रितैवाविद्या जगद्रूपेण परिणमते। मायाशक्तिविषये श्रुतिरपि मानम्—'मायां तु प्रकृतिं विद्यान्मायिनं तु परमेश्वरम्'[१], स्मृतिश्च—'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्'[२]।

अद्वैतनये या सकलजगदुपादानभूता मायाऽविद्येति कथ्यते, सैव वाल्लभमते भगवदिच्छेत्युच्यते। तदेव भगवतः सामर्थ्यम्। सेयं शक्तिर्भगवल्लीला, न लीलावतो भिन्ना, शक्तिशक्तिमतोरभेदात्। सच्चिदानन्दरूपस्य परमात्मनस्तत्तदंशरूपेण समुद्भूता शक्तिस्तत्तत्कार्यसम्पादने हेतुः। सदंशः क्रियाशक्तिः, चिदंशो व्यामोहिका शक्तिः, आनन्दांशो जगत्कारणभूता शक्तिः, एतत्त्रितयरूपा शक्तिः परमात्मनः। तत्रानन्दस्यैव प्राधान्यं तदितरावानन्दांशस्योत्तेजकौ, तथा चोक्तम्—'तत्र आनन्द उत्कृष्टः। तदेतरौ तं सेवमानौ जातौ'[३]।

भगवति परमात्मनि तिरोभूतमिदं जगद् आविर्भावात्मिकया शक्त्या व्यवहाररूपतामाभजते। व्यवहारे या आविर्भावात्मिका शक्तिस्तत् कारणम्। यच्च व्यवहारयोग्यत्वं तत् कार्यम्। आविर्भूतश्च जगद् ब्रह्मरूपमेव नान्यत् किमपि। भगवदिच्छया कारणभूतायां मृदि विद्यमानो भगवद्रूप एव घट आविर्भवति, नान्यः कश्चित्। तथा हि 'यस्मिन् भगवद्रूपे रूपान्तरस्याविर्भावः तत् कारणम् यथा मृत्, यस्य रूपस्य प्राकट्यं तत् कार्यं यथा घटः'[४], 'मृदादि भगवद्रूपं घटाद्याकारसंयुतम्'[५]। श्रुतिरपि—'सर्वं खल्विदं ब्रह्म'[६]।

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः।
अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा[७]।।

घटादिव्यक्तीनामानन्त्येऽपि तेषां भगवदभिन्नतया नित्यत्वम्। आविर्भावात्मिकया शक्त्याऽभिव्यक्तिमात्रं द्रव्याणाम्। एकमेव ब्रह्मतत्त्वं स्वलीलासक्तम् एकोऽहं बहु स्यामिति भावनाऽभिभूतमनेकरूपापन्नं सत्, लीलाया

१. श्वेता.उप. ४.१०;
२. गीता.-९.१०।
३. सुबोधिनी-२.९.१;
४. प्रमेयरत्नार्णवे।
५. तत्त्वदीपनिबन्धे;
६. भाग.पुरा. ११.१३.२४।
७. भाग.पुरा. ११.१३.२४।

अन्ते तिरोहितभेदस्वरूपम् एकमेवावशिष्यते। 'एकस्यैव अनेकधा आविर्भवनेन तिरोभवनेन च एकस्यैव सर्वत्र सत्त्वाद् आनन्त्येऽपि अदोषात्'[१]। एवञ्च भागवतमहापुराणेऽपि—

लयेऽपि सकलाः सूक्ष्मा जायन्त एव हि।
ते मृद्येव प्रलीयन्त इत्यन्तेऽप्यस्य मृत्तिका।।

तथा ब्रह्मैवात्र पूर्वमन्ते ब्रह्मैव शिष्यते।
मध्ये क्रियाभेदार्थं नाना तेनेच्छया कृतम्।।

सर्वत्रैव कारणसामर्थ्यं शक्तेरेव। न तामन्तरा किञ्चित्कार्यं प्रतिपद्यते। सा क्वचिद्दर्शने शक्तिमत्तत्त्वाभिन्नत्वेनाभिमता क्वचिच्च शक्तिशक्तिमतोर्भेदोऽभिमतः। तत्सर्वमत्र शोधनिबन्धे सारभूततया निरूपितमिति।

शास्त्रानेकविलोडनादधिगतं यत्सारतत्त्वं मया।
तत्सर्वं परिचिन्तितं भगवतः शक्तिस्वरूपान्वये।।

या शक्तिः परमात्मनो भगवतो लीलावतस्तत्त्वभूः।
सैवेच्छा परमेश्वरस्य विदिता नान्यत्ततः कारणम्।।

शास्त्रेषु शक्तिसामर्थ्यं यद्रूपेण निरूपितम्।
तत्समन्वेति लेखेऽत्र योजकोऽहं यथामति।।

।।इति शम्।।



१. वेदान्तचिन्तामणौ।

# वेदान्तमीमांसायां स्वप्रकाशत्वम्

**डॉ. धनञ्जयकुमारपाण्डेयः**
उपाचार्यः, वैदिकदर्शनविभागे
संस्कृतविद्याधर्मविज्ञानसङ्काये
काशीहिन्दूविश्वविद्यालये, वाराणस्याम्



श्रीमच्छङ्करभगवत्पादानुमतं स्वयंप्रकाशायाश्रितः स्वरूपमिति विविच्यते। सत्त्वेन निर्वाच्यस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः स्वभाव एव स्वयंप्रकाशतोपनिषत्सु श्रूयते। एतदुक्तं भामत्याम्[१]—

'अबाधिता स्वयंप्रकाशतैवास्य सत्ता, सा च स्वरूपमेव चिदात्मनः न तु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वेति' इति। तस्मादेतदेव ब्रह्म वेदान्तेषु वेदान्तवाक्येषु वा ज्योतिःशब्देन निर्दिश्यते। एतद्विषये भगवत्पादेनोक्तम्[२]—

तस्माद्यद्यत्कस्यचिदवभासकं तत्तज्ज्योतिःशब्देनाभिधीयते। तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः इति। अयमत्र विचार्यते—सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानमिति धिया धियस्तावत् अर्थ-प्रकाशकत्वं सर्वैरवाभ्युपेयते, नात्र कश्चन विवादः। ज्ञानेन सर्वत्रापि विषयः स्वसान्निध्यात् प्रकाश्यते। एवञ्चास्य सर्वावभासकस्य ज्ञानस्य चैतन्यमपि सर्वैरभ्युपगम्यते। न ह्यत्रैतस्य चैतन्ये कामपि विप्रतिपत्तिं पश्यामः। तस्मादकामेनापि इदं तावद् ग्राह्यं भवति अर्थप्रकाशनवेलायाम्। यद्यपि बुद्धेस्तावद् न स्वाभाविकं चैतन्यं बोध्यम्—कुतरिति चेत् तस्य जडत्वात् इति। अथ चान्तःकरणं सूक्ष्माकाशादिपञ्चभूतसम्मिलितसात्त्विकांशेभ्यो जातं स्वच्छं तैजसं विषयसन्निधाने झटिति इन्द्रियप्रणालिकया बहिर्निःसृत्य विषय-देशमभिव्याप्य तत्तदाकारं भवति, अर्थात् विषयप्रकाशनं कुरुते। किन्त्वस्य विषयावभासकं चैतन्यमारोपितमेव न स्वाभाविकमिति विशेषोऽत्र वक्तव्यः। तस्माच्चिदेकरसस्यात्मन एव चैतन्यस्वभावस्य सर्वावभासकत्वमुपपद्यते।

---

१. भामत्यामध्यासलक्षणे; २. शारीरकभाष्ये १.१.१०.२४।

अध्यासभाष्ये श्रीशिवेन 'विषयविषयिणोस्तमः प्रकाशवदिति'[१] यदुक्तं तस्य भामत्याम्—'चित्स्वभावः आत्मा विषयी, जडस्वभावा बुद्धीन्द्रिय-देहविषया विषयाः'[२] इति विषयविषयिणोः चैतन्याचैतन्ययोः महान् भेदो हरयते। तदनु श्रीमिश्रवर्यैः, 'एते हि चिदात्मानं विसिन्वन्ति अवबध्नन्ति। स्वेन रूपेण निरूपणीयं कुर्वन्ति इति यावत्'[३] इति व्याख्यानग्रन्थेन विषयिणो ज्ञानस्यापराधीनप्रकाशत्वमपि प्रादर्शि। न हि विषयी कदाचिदपि विषयत्वमापद्यते प्रकाशनवेलायाम्। न हि व्यवहारदशायां कदाचिदपि शुक्तिका रजतं भवेदित्याशयः। व्यावहारिकदशायामपि विषयिणस्तावदपराधीनप्रकाशताक्षुण्णैवेति वेदितव्यम्।

भगवता श्रीविश्वनाथेन स्वीयभाष्याब्धौ आदावेवाध्यासनिरूपणप्रसङ्गे अविषये हि प्रत्यगात्मनि विषयतद्धर्माणामध्यासो न युज्यत इत्युक्तम्। पुरोऽवस्थिते विषयेऽयमध्यासो वक्तव्यः न तु युष्मत्प्रत्ययापेते प्रत्यगात्मनि, तस्यात्मनः सर्वथाऽप्यविषयत्वादिति आशयवान् प्राह[४]—

'उच्यते न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरि'ति।

आचार्यप्रतिपादितभाष्यग्रन्थेनानेन स्वत एव स्वप्रकाशत्वं वर्णितं भवति, तदत्रावतार्यते। एतदवसरे भगवता श्रीवाचस्पतिमिश्रेणाऽपि स्वप्रकाशत्वं यथाभाष्यं समर्थ्यते, तदनु व्याख्यायते। एवञ्च प्रकाशमाने धर्मिण्येव समारोपः सम्भवति न त्वप्रकाशमाने। अधिष्णनात्मधर्मिणः प्रकाशमानत्वेऽपि न तस्य घटादिविषयवत् पराधीनप्रकाशताऽभ्युपेया। अथ च पराधीनप्रकाशतायां सत्यामायाति कर्मकर्तृभावविरोधः। विरोधप्रकारोऽयमुपवर्णितो भामतीकृता[५]—

'परसमवेतक्रियाफलशालि हि कर्म, न च ज्ञानक्रिया परसमवायिनीति कथमस्यां कर्म, न च तदेव स्वं च परं च, विरोधात्। आत्मान्तर-समवायाभ्युपगमे तु ज्ञेयस्यात्मनोऽनात्मत्वप्रसङ्गः' इति। एवं तस्य तस्येत्यनवस्थाप्रसङ्गः' इति। अनेन ग्रामादेरेव कर्मत्वं परसमवेत-क्रियाफलशालित्वात् न च कर्तुरित्याशयो बोध्यः। [६]'न तु चैत्रस्य क्रियाफलशालिनोऽपि, चैत्रसमवायाद्गमनक्रियाया इति चेदिति' भामती-ग्रन्थेनाशङ्क्य सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या तस्य विरोधः प्रदर्शितोऽस्ति।

---

१-३. भामत्यामध्यासभाष्ये; ४. अध्यासभाष्ये।
५. तत्रैव भामत्याम्; ६. तत्रैव भामत्याम्।

अत एवोक्तश्रुतेर्ज्ञानात्माभेदे तात्पर्यमिति ब्रुवाणस्य पक्षो भामतीकृता सूपपादितो विद्यते। प्राभाकरा अपि इत्थं वर्णयन्ति—ज्ञानेन विषयतयाऽर्थः प्रकाश्यते, आश्रयतया चात्मा, तत्र ज्ञानस्य यदि जडत्वं परिकल्प्यते तर्हि विषयात्मनोरपि जडत्वात् कस्मिन् किं प्रकाशते? तथा च न कस्यचित् प्रकाशनं स्यादित्यर्थः। न च क्षुरादिवन्निलीनस्यापि विज्ञानस्यार्थात्मज्ञापकत्वं सम्भवति। जनितस्याऽपि तस्य ज्ञानस्य जडत्वाविशेषात् तत्प्रकाशनासम्भवात् जगदान्ध्यप्रसङ्ग एव। तथा च तत्तज्ज्ञानस्य परप्रकाशाभ्युपगमात् तत्तदुत्तराणां ज्ञानानामपिण्डस्वभावादनवस्थैव स्यात्। तस्मात् संविदः स्वप्रकाशत्ववादे एव निस्तारः। न हि स्वयंप्रकाशायाश्रितो भिन्न आत्मा वेदान्तेषु श्रूयते। अत एवात्र भगवान् श्रीवाचस्पतिमिश्रो वर्णयते[१]—

तदयं प्रकाश एव स्वयंप्रकाश एकः कूटस्थनित्यो निरंशः प्रत्यगात्माऽशक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य आत्मानं प्रतीपं निर्वचनीयमञ्चति जानाति इति प्रत्यङ् स चात्मेति प्रत्यगात्मा स चापराधीनप्रकाशत्वात्, अनंशत्वाच्च, अविषय इति, एतद्व्योरव्याकर्तुर्वचनेन आत्मनोऽविषयत्वमपराधीनप्रकाशत्वादिति हेतोरवश्यमेव वेदितव्यं भवति। सिद्धान्ते य एव विषयी स चिदात्मेति कथ्यते। पुनश्च 'सत्यं प्रत्यगात्मा स्वयं प्रकाशत्वादविषयोऽनंशश्चेति'[२] ग्रन्थोऽपि स्वयंप्रकाशतयैव प्रत्यगात्मत्वं ब्रूते इति 'ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिवर्हणात्'[३] इति भगवत्पादीयवचनस्वारस्येन तदवगतेरात्मस्वरूपत्वमेव बोधनीयम्। 'न स पुनरावर्तते'[४] इत्यादि श्रुत्यावगम्यते मोक्षस्य परमपुरुषार्थत्वम्। परमत्वञ्चात्र त्रिकालाबाध्यत्वरूपनित्यत्वमेवाद्रियते। अत एव भामत्याम्[५]—'ब्रह्मावगतौ ब्रह्मस्वभावे नोत्पत्त्यादयः सम्भवन्तीति' प्रतिपादितमस्ति, अतश्च भूतवस्तुविषयत्वादवस्तुतन्त्रमेव ब्रह्मज्ञानं यन्नान्यथयितुं शक्यते केनचित्। तस्य स्वयंप्रकाशस्य प्रमापणे भगवत्पादेनोच्यते[६]—

इदं तु पारमार्थिकं, कूटस्थनित्यं, व्योमवत्सर्वव्याप्ति, सर्वविक्रियारहितं नित्यतृप्तं निरवयवं, स्वयंज्योतिः स्वभावम् इति।

तस्मात् संविद्ब्रह्मणोः कूटस्थनित्यतैव पारमार्थिकी स्वयंप्रकाशा बोधिता भवति। ज्योतिश्चरणाभिधानादिति सूत्रे[७]—'तस्मादिह ज्योतिरिति ब्रह्म

---

१-२. तत्रैव भामत्याम्; ३. शारीरकभाष्यम् १.१.१.१।
४. छान्दोग्योपनिषत् ३.१५.१; ५. भाष्यभामत्याम् १.१.१.१।
६. शारीरकभाष्यम् १.१.४.४; ७. तत्रैव १.१.१०.२४।

प्रतिपत्तव्यमिति' ग्रन्थेनाऽपि ब्रह्मणः सर्वावभासकस्य ज्योतिशब्देन वर्णनमायाति। ततोऽन्यस्य सर्वस्यापि तदवभासभास्यत्वेन स्वयमेवापराधीन-प्रकाशत्वं सिद्धं भवति। अत एवोदाह्रियते श्रुतिरेषा भाष्यकृता[१]—

'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभति' इति।

अत्र खलु, न ब्रह्म अनुभाति, ततोऽन्यस्य भासकस्याविद्यमानत्वात्, अपि तु ब्रह्म स्वेन भासा राजते तस्मात् स्वरात्तु इति कथ्यते। तस्यानन्याधिपतित्वं श्रुतिस्मृत्युभयसिद्धम्। परमेश्वरस्य एतत्साम्राज्यं प्रकाशयताऽचार्येणोक्तम्[२]।

नित्यत्वादनपेक्षत्वात् श्रुतेस्तत्प्रक्रमादपि।
ऐकमत्याच्च विदुषां परमेश्वरतन्त्रता।। इति।

स्वप्रकाशतैवास्य भगवतो स्वतन्त्रता, सदेकरसता प्रतिपादिता भवति। तस्यैव चैतन्यं ज्ञानं ब्रुवता भगवतोच्यते—'तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः'[३] इति। तथा च 'वि[४]ज्ञानमानन्दं ब्रह्मेति' श्रुत्या परस्यैवात्मनः चैतन्यस्वरूपत्वमाम्नायते। 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति'[५] इत्यनया श्रुत्या साक्षादेव तस्य स्वयंप्रकाशत्वं वर्णितं भवति। उक्तमेतत् सरहस्यं भामत्याम्[६]—

यदागन्तुकज्ञानं जडस्वभावं तत्कदाचित् परोक्षं कदाचित्संदिग्धं कदाचिद्विपर्यस्तं, यथा घटादि, न चैवमात्मा, तेन-चैतन्यमात्मस्वभाव इति सिद्धम्। इति। एवञ्च सर्वत्रापि क्वचिद् ब्रह्मनिरूपणेन, क्वचिज्जीवनिरूपण-द्वारेण क्वचिच्च चैतन्यापरपर्यायज्ञाननिरूपणेन श्रुतिसूत्रभाष्यभामतीषु एषा स्वप्रकाशता कुत्रचिच्छब्दतः कुत्रचिच्चार्थत आचार्यैर्वेदान्तविद्यापारगैर्बोध्यते। संविदोऽस्याः प्रतिष्ठानुष्ठीयते भगवता शिवेन यदेषा 'सलिल एको द्रष्टाऽद्वैतो भवति' इति श्रुतिशिरसि प्रतिष्ठाप्यतेऽभिषिच्यते च भगवत्पाद-श्रीविश्वनाथाञ्जलिनेति।

श्रीविद्यारण्यमुनिना संविदः स्वयं प्रभात्वविषये प्रोक्तम्[७]—

मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा।
नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा।। इति।

---

१. कौशी. उपनि. २.५.१५; २. भामत्याम् ४.४.७.१७।
३. शारीरकभाष्यम् २.३.१२.१८।
४-५. बृहदारण्यकोपनिषत् ३.९.२८, ४.३.९।
६. भामत्याम् २.३.१२.१८; ७. पञ्चदशी १.७,८।

तस्या एव संविदः श्रीविद्यारण्यदृष्टौ शुद्धात्मत्वमप्युपयुज्यते, अत एव—

इयमात्मा परानन्दः परप्रेमास्पदं यतः।
मा न भूवं हि भूयासमिति प्रेमात्मनीक्ष्यते[1]।। इत्युक्तमस्ति।

एतद्व्याख्यानावसरे श्रीरामकृष्णविदुषाऽनुमानप्रयोगोऽपि कृतो विद्यते, तद्यथा—

[2]'इयं संविदात्मा भवितुमर्हति, नित्यत्वे सति स्वप्रकाशत्वात्, यन्नैवं तन्नैवं यथा घटः' इति।

अत्र हि ग्रन्थकृता स्वप्रकाशत्वेन संविद आत्मरूपत्वं साध्यते, अर्थतश्चात्र संविदोऽपि स्वप्रकाशत्वं सिद्धं भवति। अन्यत्रापि विवरणप्रमेयसंग्रहे अस्यात्मन अपरोक्षत्वं तावत् अनेनैव स्वप्रकाशत्वेन सिद्धं भवति।

अत्रायं वक्तव्यः—आत्मनो निःसामान्यविशेषत्वात् कथमधिष्ठानत्वम्, तदेव हि अधिष्ठानं यत् खलु सामान्येन गृहीतं भवति विशेषरूपेण चागृहीतं भवति। ननु आत्मन अधिष्ठानत्वं तावद् वस्तुत्वादेवेति चेन्न वस्तुत्वादिति हेतुना नेदं साधयितुं शक्यते, तस्य साध्यव्यापकत्वे सति साधनाव्यापकत्व-लक्षणपरप्रकाशत्वरूपोपाधेः सत्त्वात् व्यापकत्वासिद्धेरिति आशयं वर्णयति विवरणप्रमेयसंग्रहकारः। तथा च तत्र[3] 'तर्हि सिद्धान्तरहस्यानुसारेणैव-मनुमीयताम् आत्माऽधिष्ठानं चिद्रूपत्वात् शुक्त्यवच्छिन्नचैतन्यवदिति' इति श्रीविद्यारण्येनोक्तमस्ति। ननु दृष्टान्तेऽत्र सांशस्य चैतन्यस्य तदुक्तसामान्य-ग्रहणविशेषाग्रहणयोः सम्भवेऽपि निरंशे आत्मनि नेदमुपयुज्यते। कथं निरंशोऽपि स आकाशादिवत् कार्त्स्न्येनावभासत इति, आशङ्क्योक्तम्[4]—

'स्वयंज्योतिषो यावत् सत्त्वम् अवभासात्। स्वयं ज्योतिष्ट्वं चात्रायं पुरुषः स्वयं ज्योतिः आत्मैवास्य ज्योतिरित्यादिश्रुतिसिद्धम्'। इति।

तथा च तेनैवोक्तम्[5]—

'तस्मादजायमानस्य ज्ञानस्य जनकानपेक्षत्वादात्मैव ज्योतिर्नत्वात्मव्य-तिरिक्तं ज्योतिरिति। ज्योतिष्ट्वं चात्र चिद्रूपत्वमेव विवक्षितं न जडप्रकाशरूपत्वमिति प्रज्ञानं ब्रह्मेत्यादिश्रुत्यन्तरादवगम्यते' इति।

---

१. पञ्चदशी १.७,८;
२. तत्रैव व्याख्यायाम् १.८।
३. विवरणप्रमेयसंग्रहे, पृ. ४३;
४. तत्रैव।
५. तत्रैव।

अनेन ग्रन्थेन यथा चिद्रूपस्यात्मनः स्वयं ज्योतिष्ट्वमायाति तथैव चितोऽपि स्वयं ज्योतिष्ट्वमर्थत एव सिद्ध्यति नात्र विप्रतिपत्त्यवकाश इति संलक्ष्यते। अत एव तत्त्वप्रदीपिकाकृता चिद्रूपत्वादिति हेतोरात्मनः स्वप्रकाशत्वं साध्यते। येन प्रकारेणात्राधिष्णनत्वमनेन साध्यते तेनैव स्वप्रकाशत्वमपि साधयिष्यतेऽग्रे इति।

प्रत्यक्तत्त्वप्रदीपिकायां मङ्गलश्लोके श्रीचित्सुखमुनिनोक्तम्[१]—

प्रमाणनखनिर्भिन्नमहामोहामरारये।
नमस्कुर्मो नृसिंहाय स्वप्रकाराचिदात्मने।। इति।

अत्र स्वप्रकाशायाश्चितो निर्विशेषब्रह्मप्रतिपादनात् तत्रैव वेदान्तानां परमं प्रामाण्यमपि बोध्यते। उक्तश्चैतत् नयनप्रसादिन्याम्[२]—

'स्वप्रकाशा चित् सैव आत्मा यस्य। अथवा स्वप्रकाशश्चिद्रूपश्चासावात्मा चेति विग्रहः। एतेन स्वप्रकाशरूपेऽतिशयानाधायकत्वेऽपि मोहनिवृत्ति-लक्षणातिशयाधायकतया वेदान्तानां स्वप्रकाशे ब्रह्मणि प्रामाण्यं प्रमाणकृत्यं चोपपादितं भवति'। इति, एतेन संविदात्मनोरुभयोरपि स्वप्रकाशत्वं प्रकाश्यते। अन्यत्रापि संविदात्मनोरैक्यं श्रूयते तद्यथा[३]—

'इयमात्मा परानन्दः परप्रेमास्पदं यतः', इति ग्रन्थेन इयं संविद् आत्मा एवेति प्रतिपाद्यते। इहानुपूर्वीभेदमादाय पूर्वोक्तव्युत्पत्तौ संवित्पदजन्य-बोधविषयतया, आत्मपदजन्यबोधविषयतया च भेदमादाय द्वन्द्वोपपत्तिरिति ज्ञेयम्। चित्सुख्यां प्रथमं विज्ञानस्य स्वप्रकाशत्वमुक्तमनन्तरञ्च—एतेनात्मनोऽपि स्वप्रकाशत्वं व्याख्यातमिति ग्रन्थकृतोक्तम्। उक्तमेतत्—

चिद्रूपत्वादकर्मत्वात्स्वयं ज्योतिरिव श्रुतिः।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः[४]।। इति।

अत्र हि[५] 'यद्यपि विज्ञानस्वप्रकाशतयैव तद्रूपस्यात्मनः स्वप्रकाशता सिद्धा, तथापि तद्रूपतायामेव विवादात्तत्समर्थनार्थमधिकयुक्तिप्रदर्शनार्थं च वादान्तरारम्भ इति नयनप्रसादिनीकृतो वदन्ति। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति धिया स्वप्रकाशलक्षणं तावद् विचार्यते।

---

१. तत्त्वप्रदीपिकायां मङ्गलश्लोकः-४; २. तत्रैव नयनप्रसादिन्याम्।
३. पञ्चदशी।
४. स्वप्रकाशत्वनिरूपणे तत्त्वप्रदीपिकायाम् श्लोक-३।
५. तत्रैव नयनप्रसादिन्याम्।

'अथ कोऽयं स्वप्रकाशशब्दार्थ'[१] इति जिज्ञासायामेकादशकल्पाः कृताः सन्ति तत्त्वप्रदीपिकायाम् तत्र यो हि अन्तिमः कल्पः स एव गृहीतो वर्तते। तद्यथा[२]—

'अवेद्यत्वे सति अपरोक्षव्यवहार योग्यत्वमेव स्वप्रकाशत्वम्' इति श्रीचित्सुखमुनिसम्मतं सिद्धान्त लक्षणं संविदात्मनोः संगतं दृश्यते। अत्र अवेद्यत्वं नाम फलाव्याप्यत्वमेव, फलव्याप्यत्वमेव हि भवति वेद्यत्वम्, अयमाशयो वर्णितो विद्यते नयनप्रसादिन्याम्। यथा[३]—

'विषयावच्छिन्नचैतन्यमभिव्यक्तं फलमिति वेदान्तवादिनां मतम्। अभिव्यक्तिश्चेन्द्रियद्वारा अर्थसन्निकृष्टमनःपरिणामविशेषः' इति। अवेद्यत्वांशनिवेशेन घटादावतिप्रसक्तिर्वारिता। अतीतानागतयोर्नित्यानुमेयेषु च धर्मादिष्वतिव्याप्तिवारणार्थं तत्र आपरोक्षव्यवहारयोग्यत्वनिवेशः। अपरोक्षव्यवहारशब्देन तु अभिलापादिव्यवहार एव ग्राह्यो न तु हानोपानादिलक्षणः। यत् साक्षादपरोक्षाद् ब्रह्मेति श्रुत्या ब्रह्मणि अपरोक्षमिति व्यवहारो दृश्यते।

अत्रेदं बोध्यम्—नाशोपहिता चिदेव फलम्, नाशस्तु प्रमाणजन्यान्तःकरणवृत्त्या अज्ञानावरणभङ्ग एव। एवञ्चाभिव्यक्ताधिष्ठानचिद्विषयत्वमेव फलव्याप्यत्वम्। अर्थात् फलव्याप्यत्वं नाम फलविषयत्वमिति ज्ञेयम्। एतद्फलविषयत्वं बहिरिन्द्रियजन्यविषयप्रत्यक्षे एव सम्भवति। नित्यातीन्द्रिये धर्मादौ परोक्षवृत्तिविषये, प्रातिभासिके शुक्तिरजतादौ, साक्षिवेद्ये सुखादौ चैतद् फलव्याप्यत्वं न कल्प्यते। लघुचन्द्रिकाकृदिमस्तुफलद्वैविध्यमुपन्यस्यते तच्च वृत्तिप्रतिबिम्बितं चैतन्यम्, आवरणनाशोपहितं चैतन्यञ्चेति। एतदेव हि वेदान्तमर्यादायां भवति वेद्यत्वं तद्विरुद्धं चात्र अवेद्यत्वमिह स्वप्रकाशलक्षणे गृह्यते। तथा च फलाव्याप्यत्वे सति अपरोक्षव्यवहारयोग्यत्वमेव स्वप्रकाशत्वमित्यायाति।

ननूक्तयोग्यत्वस्य धर्मत्वान्मोक्षात्मन्यसम्भवादव्याप्तिः। न हि मोक्षदशायां कश्चन तादृशो धर्मः श्रूयते, तत्त्वज्ञानादविद्याया निवृत्तेः। न हि चिदात्मकं ब्रह्म धर्मवद् गुणवद् वेति चेत्, न, तादृशयोग्यत्वात्यन्ताभावानधिकरणत्वस्य विवक्षितत्वात्। यदा कदाचित् योग्यत्वसत्त्वेन तदत्यन्ताभावानधिकरणत्वस्य अक्षतत्वात्। तदत्यन्ताभावानधिकरणत्वस्य तत्प्रतियोग्यधिकरणत्वनियतत्वात्। उक्तं हि तत्त्वप्रदीपिकायाम्—

---

१-२. तत्त्वप्रदीपिकायां स्वप्रकाशलक्षणे; ३. तत्रैव।

[1]"न च योग्यतालक्षणधर्माङ्गीकारेऽव्याप्तिर्मोक्षदशायां तदसंभवादपसिद्धान्तापत्तिश्चेति शङ्कनीयम्, योग्यत्वात्यन्ताभावानधिकरणत्वस्य तत्त्वात्, गुणवत्त्वात्यन्ताभावानधिकरणस्य द्रव्यत्ववत्, तेन नाव्याप्तिः। नाप्यपसिद्धान्तः, काल्पनिकधर्माणां संसारदशायामभ्युपगमात्' इति। इदं तावन्नयनप्रसादिन्यां समर्थिमस्ति, पद्मपादाचार्यकारिकया, तत्त्वप्रदीपिकायां तु सुरेश्वरवचनाच्चेति तद्यथा—

अक्षमा भवतः केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्[2]॥
आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः।
अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते[3]॥ इति।

नन्वारोपितस्य तादृशयोग्यत्वरूपधर्मस्य स्वीकारात् अन्यत्रापि प्रातिभासिकादिस्थले आरोपितेन धर्मेण लक्षणापत्तिः स्यात्, ततश्च सर्पत्वादिकमपि रज्वादीनां लक्षणं स्यादिति चेन्न, सधर्मकस्थले तथास्वीकारे, प्रमाणाभावात्। व्यवहारयोग्यत्वकथनेन, ब्रह्मणि अवेद्यत्वापरोक्षज्ञानविषयतयोश्च युगपद् विद्यमानत्वाद् यो हि परस्परं व्याघातस्तन्निवृत्त्यर्थमेव, अपरोक्षव्यवहारयोग्यता उपात्ता। ब्रह्मण एतदवेद्यत्वाभ्युपगमात् अपरोक्षव्यवहाराविषयेऽपि अपरोक्षव्यवहारयोग्यत्वं विद्यत एवेति निष्कर्षः। अतो न व्याघातावसरः।

एतदपरोक्षव्यवहारयोग्यत्वसमर्थने श्रीमधुसूदनस्वामिभिः प्रोक्तम्[4]—

'परिपूर्णाद्याकारेण इदानीं व्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यत्वानपायात्' इति तस्यायं भावः—परिपूर्णानन्दरूपस्य चिल्लक्षणब्रह्मण अज्ञानावरणं सर्वानुभवसिद्धम्, तथैव चिद्रूपस्वप्रकाशताऽपि तस्य सर्वानुभवसिद्धा। एवञ्चाध्यासाधिष्ठानत्वस्वरूपेण सामान्यतश्चिद्रूपेण भासमानतायामपि परिपूर्णानन्दस्याज्ञानावृतत्वात् न भासते इति व्यवहारोपपत्तिः। उक्तमेतत्[5]—

'आवरणमहिम्नैव परिपूर्णं ब्रह्म नास्ति न प्रकाशते इति व्यवहारः, अस्ति प्रकाशते इति व्यवहारप्रतिबन्धश्च, अध्यासाधिष्ठानत्वादिना

---

१. तत्त्वप्रदीपिकायां स्वप्रकाशलक्षणे प्रथमकारिका।
२. तत्रैव; ३. नयनप्रसादिन्याम्-तत्रैव।
४-५. अद्वैतसिद्धौ अज्ञानविषयनिरूपणे।

प्रकाशमानता चाविरुद्धेति'। इति ग्रन्थेनानेनाविरोध एव उक्तरीत्या प्रदर्श्यते। चिद्रूपं ज्ञानमेवात्र स्वप्रकाशमभ्युपेयते। चिन्मात्रस्यैवाज्ञानविषयत्वमपि स्वीक्रियते। अतश्चैतादृशे स्वप्रकाशचैतन्ये अपरोक्षव्यवहारयोग्ये कथं नास्तीत्यादिव्यवहारयोग्यत्वं स्यात्। अपरोक्षव्यवहारयोग्यत्वे सति नास्ति इत्यादिव्यवहारयोग्यता एव न सम्भवति। एवञ्चाज्ञाननिमित्तावरणकृत्याभ्युपगमे तस्य स्वप्रकाशत्वं न सिद्ध्यति। स्वप्रकाशत्वाभ्युपगमे चाज्ञाननिमित्तावरणकृत्यञ्च स्यादित्यर्थः। तथा चैवं रीत्या तस्यास्वप्रकाशत्वमपि स्यात् इति शङ्कायाम् सत्यां श्रीमधुसूदनसरस्वत्या यदुक्तं तत्समीचीनमेव प्रतिभाति।

यद्यपि अद्वैतसिद्धिकृता ब्रह्मणः स्वप्रकाशत्वलक्षणोपपत्तौ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वमेव स्वप्रकाशत्वं न्यरूपि। उक्तञ्चैतत्[1]—

'पञ्चमपक्षस्यैव क्षोदसहत्वात्। न च मोक्षेऽव्याप्तिः, अनधिकरणत्वस्य स्वरूपतया तदापि सत्त्वात्। न च स्वरूपत्वे लक्षणत्वानुपपत्तिः, त्वन्नये ब्रह्माभिन्नानन्दादौ गुणत्वव्यवहारवत् स्वरूपभूतेऽप्यनधिकरणत्वे लक्षणत्वव्यवहारात्'। इति।

अत्र चतुर्थं हि लक्षणं भवति अवेद्यत्वे सति व्यवहारयोग्यत्वम् स्वप्रकाशत्वम्। एतल्लक्षणे योग्यत्वरूपधर्मस्य मोक्षकालेऽभावेन तदा ब्रह्मणि अव्याप्तिर्दत्तास्ति। किन्तु प्रसङ्गेऽस्मिन् लघुचन्द्रिकाकृतोच्यते—तद्यथा[2]—

'यद्यपि चतुर्थपक्षेऽपि नाव्याप्तिः, लक्ष्ये लक्षणासत्त्वस्यैवाव्याप्तित्वात्, ब्रह्मणि तूक्तयोग्यत्वस्य कदाचित्सत्त्वेन तदसम्भवात्, तथापि स्वप्रकाशत्वस्य ब्रह्मस्वरूपत्वलाभाय पञ्चमपक्षमेवाङ्गीकरोति इति। वस्तुतः-प्रमाणवृत्तिं विनाऽपि व्यवहार्यत्वाय स्वप्रकाशत्वमुच्यते। तस्य च ब्रह्मस्वरूपत्वाभावेऽपि व्यवहारदशायां सत्त्वेनैवोपपत्तिरिति चतुर्थपक्षोऽपि युक्त एवेति ध्येयम्' इति। अनेन आचार्यचित्सुखमुनिलक्षणे टीकाकर्तुः कश्चन आदर एवाभिव्यज्यते इति।

चिदात्मनोः स्वप्रकाशत्वनिरूपणवेलायां प्रमाणमपि श्रीचित्सुखमुनिनोच्यते[3]—

प्रमाणमपि-अनुभूतिः स्वयंप्रकाशा अनुभूतित्वाद्यन्नैवं तन्नैवं यथा घट इत्यनुमानम्। प्रमाणैर्निर्धारिते हि वस्तुनि व्यावृत्तिर्व्यवहारो वा लक्षणस्य

---

१. तत्रैव स्वप्रकाशत्वलक्षणोपपत्तौ; २. अद्वैतसिद्धेर्लघुचन्द्रिकायाम्।

३. तत्त्वप्रदीपिकायां स्वप्रकाशत्वनिरूपणे प्रमाणोपन्यासे।

प्रयोजनमिति धिया लक्षणानुसन्धानं क्रियते। प्रमाणेन वस्तुनः सत्त्वं सामान्येनावधार्यते ततश्च विशेषनिर्णयार्थं लक्षणं तावदपेक्ष्यते। अतश्चोभयमप्यावश्यकमिति शास्त्रविचारणायां दृश्यते। प्रायस्तत्त्वविनिश्चय-वेलायां लक्षणप्रमाणे शास्त्रप्रणेतृभिराचार्यैस्थाप्येते। ब्रह्मसूत्रकृद्भिरपि जन्माद्यस्य यतः इति लक्षणमुपन्यस्तं ततश्च शास्त्रयोनित्वादिति सूत्रेण प्रमाणचर्चाऽपि आदृता, इत्युभयोरावश्यत्वं प्रमाणीक्रियते इति।

स्वप्रकाशत्वलक्षणावसरे अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वलक्षणं यदुक्तं स्वप्रकाशत्वं तदेवात्र साध्यत्वेन गृहीतमस्ति। तत् खलु प्रसिद्धमप्रसिद्धं वेति रीत्या प्रसिद्धश्चेत् सिद्धसाधनता केवलव्यतिरेकित्वव्याकोपश्च। अप्रसिद्धदशायां त्वप्रसिद्धविशेषणतेति। एवञ्च दोषत्रयोऽपि तत्त्वप्रदीपिकायां निराकृतोऽस्ति। उक्तमेतत्[1]—

सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे।
कथं कथय पक्षोऽयमप्रसिद्धविशेषणः।। इति।

अत्र हि सामान्यतोऽनुमानेन इत्यनेन सामान्यतोदृष्टेनेति ज्ञेयं भवति, ततोऽग्रेऽपि सामान्यतः प्रसिद्धेऽपि विशेषणे इति नयनप्रसादिन्या बोध्यते। ततश्चानिर्धारितधर्मिविशेषतयेति लक्ष्यते। सामान्यत इति कथनेनात्र सिद्धसाधनताऽप्यवाकृता। एतेन कारिकाकृतो महत् कौशलमपि आकर्ण्यते। अतोऽग्रे अवेद्यत्वप्रसिद्धौ अनुमानप्रयोगोऽपि तत्त्वप्रदीपिकायामुक्तं तद्यथा[2]—

वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात् शौक्ल्यवदिति। अत्रात्यन्ताभावकथनेनार्थान्तरताया निवृत्तिर्बोध्या, अन्यथा अभावप्रतियोगि इत्युक्ते अन्योन्याभावेन वेद्यत्वेऽप्युपपद्यमानेनार्थन्तरता स्यादिति। नन्वेतावताऽपि केवलं अवेद्यत्वांशस्यैव प्रसिद्धिर्न तु अवेद्यत्वविशिष्टापरोक्षव्यवहारयोग्यत्व-साध्यस्येति चेन्न, अनुभूतौ पक्षे अपरोक्षव्यवहारयोग्यत्वांशस्य तु परैरपि स्वीक्रियमाणत्वात्। न हि तत्रावयोः कश्चन विवाद इति। एतत् सर्वं विन्यस्तमस्ति नयनप्रसादिन्यां तद्यथा[3]—अपरोक्षव्यवहारविषयत्वं तावदनुभूतौ एव सवापि सम्प्रतिपन्नं तादृगनुभूतौ चावेद्यत्वमन्यतः स्वरूपेण सिद्धं यदा साध्यते तदा किमपरमत्राप्रसिद्धं येनाप्रसिद्धविशेषणता स्यादिति' इति। एतेनान्यत्र प्रसिद्ध्यनभ्युपगमात् केवलव्यतिरेकित्वमपि रक्षितमिति प्रदर्शित-ग्रन्थेन बोध्यते इति।

---

१. तत्रैव कारिका-२;
२. तत्रैव कारिका व्याख्याने।
३. तत्रैव नयनप्रसादिन्याम्।

अवेद्यत्वप्रसिद्धिरेषा महाविद्यानुमानप्रयोगैरपि स्वप्रकाशत्ववादिभिर्वेदान्तविद्भिः क्रियते। अस्य च महाविद्यात्वमसिद्ध्यादिसकलदोषराहित्यमेवावगम्यते। अल्पेन महार्थसाद्य कत्वादेवास्य महत्त्वमवबोधितंभवति। स्वामियोगीन्द्रानन्दानदितहिन्दीभाषापादितसंस्करणे तत्त्वप्रदीपिकाया विदुषां सम्मतिवेलायां स्वामिप्रायं विस्तास्यद्भिः सर्वतन्त्रस्वतन्त्रापरवाचस्पतिमिश्रैर्गुरुवर्यैर्विद्याबीजंनिक्षिपद्मिर्लोकोत्तराम्बाकर्त्रींटिटीकाप्रणेतृभिरुक्तम्—एतन्महाविद्यानुमानप्रयोगविषये—तद्यथा[१]—

अस्यां हि तत्र तत्र तार्किकान् प्रति केवलव्यतिरेकिप्रयोगे साध्यविशेषणाप्रसिद्धौ महाविद्याप्रयोगा मानमनोहरकारादिमहातार्किकसमाहृतपद्धत्या व्यर्थविशेषणत्वस्य हेतोरदूषणत्वमभ्युपेत्य तत्प्रत्याख्यानाय प्रयुक्ताः। तथा च महाविद्याप्रयोगकुशलैस्तार्किकैः सह महाविद्याप्रयोगैरेव कथा अस्य ग्रन्थस्य विशेष इति।

[२]अथवा अयं घट एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात् पटवदित्यादिमहाविद्याप्रयोगैरप्यवेद्यत्वप्रसिद्धिरप्यूहनीया इति प्रोक्तं भगवता श्रीचित्सुखेन। अत्र अयं पदानुपादाने घटान्तरमपि एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यः स्याद्येनार्थान्तरतापत्तिः, अतोऽयमिति पदमावश्यकम्। एतत्पदेनापि अयमिति पदान्निर्दिष्ट एव घटो ग्राह्यो भवति। तेन नार्थान्तरावकाशो लभ्यते। उक्तमेतत् नयनप्रसादिन्याम्—

[३]घटमात्रं पक्षीकृत्यैतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्य इत्युक्ते घटान्तरमादायार्थान्तरता, घटान्तरस्याप्येतद्घटान्यत्वे सति वेद्यत्वानधिकरणादेतस्मादन्यत्वात्तद्व्यवच्छेदार्थमयमिति पदम्। एतस्यैव घटस्य एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यत्वे साध्यमाने घटान्तरमादायार्थान्तरताया अनवकाशात् इति।

केवलमयमित्युक्ते सति मठादेरपि ग्रहणसम्भवात् पक्षदृष्टान्तयोः सिद्धसाधनता स्यादतो विशेषधर्मिनिर्धारणाय सिद्धसाधनतापरिहाराय च घटपदोपादानम्। सिद्धसाधनतावारणार्थमेतदिति पदमावश्यकम्। तेन च एतदघटव्यक्तिरेव गृह्यते न तु घटमात्रमिति ज्ञेयम्। अनेनानुमानेनावेद्यत्वं न साध्यते अपितु तस्यावेद्यत्वस्य प्रसिद्धिरेव क्रियते। अत एवात्र नयनप्रसादिन्याः

१. विदुषां सम्मति प्रकाशने; २. प्रमाणनिरूपणे।

३. नयन प्रसादिन्यां महाविद्यानुमानपदकृत्ये।

समीक्षणे श्रीद्विवेदचरणाः स्थापयन्ति। [1]"अनेनानुमानेन एतद्घटान्यत्व-विशिष्टवेद्यत्वानधिकरणस्य सामान्यतः प्रसिद्धिः क्रियते। विशेषेण चानुमानेन पूर्वोक्तेनानुभूतौ अवेद्यत्वं साध्यत एवेति बाधानवकाशः। सामन्यतोऽवेद्यत्वस्य प्रसिद्धिरस्तीति विशेषस्वानुमानेनावेद्यत्वसिद्धौ वेद्यत्वानधिकरणत्वाभावात् तदन्यत्वस्यापि पक्षे अभावात् बाधानवकाशः'। इति।

एतेन प्रसिद्धौ सत्यामनुमानम्, अनुमाने च सति प्रसिद्धिरित्यपि परस्परमन्योन्याश्रय इति खण्डितो वेदिव्यः। चित्सुखीयानुमानेन वेद्यत्वानधि-करणस्य सामान्येन प्रसिद्धत्वात् तद्भेदस्यैतस्मिन् घटे सत्वव्यवस्थापनान्न बाधावकाश इति प्रतीयते।

नयनप्रसादिन्यामपि महाविद्यानुमानं कृतं विद्यते[2]—

विमतं ज्ञानमेतज्ज्ञानविज्ञानविषयत्वे सति वेद्यत्वरहितज्ञानविषयः पदविषयत्वाद् घटवदित्यादिमहाविद्याभिरपि समर्थनीयं स्वप्रकाशत्वम्। अत्र हि पक्षत्वेन ज्ञानं स्थाप्यते, तदेवैतत् पदेनोच्यते। ज्ञानपदेनापि तज्ज्ञानमेव ग्राह्यम्, विज्ञानेति पदेनानुव्यवसायात्मकं ज्ञानविषयकं ज्ञानं गृह्यते।

एवं रीत्या तत्र तत्र स्वप्रकाशत्व-
साधनस्थले लक्षणप्रमाणे निरूपिते स्तः।
अनुभूतेः स्वप्रकाशत्वस्थापनेनैव
ब्रह्मणोऽपि स्वप्रकाशत्वं स्वयमेव सिद्ध्यति।।

अत्र यथाबुद्धि मयाऽयं कल्पो विहितः। स्वप्रकाशलक्षण-चिन्मयस्याद्वितीयस्य श्रीज्ञानानन्दसरस्वतीभगवतः श्रीपशुपतेरकारण-कारुण्यलब्धबोधोऽहं सर्वतन्त्रस्वतन्त्राम्बाकर्त्रीकृतः पादपद्मेषु निवेदयन्निदं स्वात्मानं स्तौमि। अवसरे चास्मिन् निःशेषनिगमागमनिष्णात-पद्मश्रीरघुनाथतातपादाम्बुरुहद्वन्द्वं ध्यायं ध्यायं श्रीगुरोराशीर्वचांसि च स्मारं स्मारं श्रीविश्वनाथं भजे।

●

---

१. नयनप्रसादिन्याः समीक्षणे-महाविद्यानुमाने साध्याप्रसिद्धिवारणप्रसङ्गे।

२. नयनप्रसादिन्याम्-स्वप्रकाशत्वानुमाने हेतुदोषनिरासे।

# प्रणवस्वरूपविमर्शः

**डॉ. हरिवंशकुमारपाण्डेयः**
ईक्ष्यशोधकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणस्याम्



इह निबन्धे ओङ्कारस्य स्वरूपमुपासना तन्माहात्म्यञ्च यथा-शास्त्रमुपवर्ण्यते। ओङ्कारः, प्रणवः, उद्‌गीथम्, तारकमिति पर्यायाः। ओमित्येकाक्षरं ब्रह्म। ओमित्यस्यैकाक्षरत्वाद् एकवर्णत्वाद् 'वर्णात्कारः' इति कारप्रत्ययः, ओङ्कार इति। अश्च उश्च म् चेति समाहारद्वन्द्वे ओं-शब्दो ब्रह्मविष्णुशिवात्मकब्रह्मवाची। अयं वर्णत्रयसमाहाररूपः, समाहारे एकवद्भावाद् एकवचनम्। 'अवतेष्टिलोपश्च' इत्युणादिसूत्रेण अव्-रक्षणे धातोर्मन्-प्रत्यये तस्य टिलोपे 'अव्म्' इति स्थिते 'ज्वरत्वर.' इत्यादिसूत्रेण अव् इत्यनयोः ऊठि कृते सवर्णदीर्घे 'सार्वधातुकार्धधातुकयो'रिति गुणे ओमिति रूपम्। अवति रक्षतीति। अयमुणादिव्युत्पन्न ओं-शब्दः ब्रह्मणि अङ्गीकारे च। केचिद् ब्रह्मणि ओं-शब्दो रूढः, अन्यत्र यौगिक इति स्वीकुर्वन्ति। ब्रह्मवाचकत्वात् प्रसिद्धत्वाद् ब्रह्मणि रूढिशब्दत्वम्। 'तस्य वाचकः प्रणवः' इति योगसूत्रात्, 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतावचनात्, ओमित्येकाक्षरं ब्रह्मेति स्मृतेः, ब्रह्मणि परापरे अवयवार्थमनपेक्ष्यापि प्रसिद्धः प्रणवः। यौगिकः सन्नपि परमात्मवाची वर्णसमाम्नाये ओङ्कार इत्यत्र कथं वर्णात्कारः। न च वर्णसमुदायात् कारप्रत्ययो भवति। अत्रोच्यते—एवकारः, वषट्कारः, तुङ्कारः, बलात्कारः, स्वाहाकार इत्यादिस्थलेषु कारशब्दस्य दर्शनात्। क्वचिद् वर्णसमुदायादपि कारप्रत्ययः। अथवा एषु स्थलेषु नायं कारप्रत्ययोऽपि तु कृधातोर्घञन्तं रूपम्, कारः करणम्। स्वरादौ पाठाद् अव्ययत्वमस्योङ्कारशब्दस्य।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।।

एवम् ओमिति पदस्य व्युत्पत्तिरुक्ता। अव्धातुः भ्वादौ पठ्यते। तस्यानेके अर्था निर्दिष्टाः। रक्षण-गति-कान्ति-प्रीति-तृप्त्यवगम-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्त्यवाप्त्यालिङ्गन-हिंसा-दान-भाव-वृद्धिषु अव्धातुः प्रयुज्यते, धातूनामनेकार्थत्वात्। यथासम्भवमन्येष्वपि अर्थेषु अव् प्रयुज्यते। एवञ्च अवति = रक्षति सर्वान् यः, स ओङ्कारः परमात्मा। गच्छति = व्याप्नोति, कामयते, प्रीणाति, प्रियते वा भक्तान् सुरान् तृप्यति भुक्तिमुक्तिप्रदानेन भक्तान्, स्वयं वा तृप्यति स्वल्पेन, अवगच्छति सर्वं सर्वज्ञत्वात्, अवगम्यते वा भक्त्या विज्ञानेन। प्रविशति सर्वत्र व्यापकत्वेन, तत् सृष्ट्वा तदेव प्राविशदिति श्रुतेः, शृणोति सर्वमकर्णो दीनार्तरवम्। चराचराणां सर्वभूतानां चेतनाचेतनानाम् अवति स्वामी भवति। अर्थयते पुरुषार्थेन योजयति। याच्यते प्रार्थ्यते सुरासुरैरर्थिभिः। करोति सर्वम्, इच्छति = सिसृक्षति पिपालयिषति संजिहीर्षति सर्वम्। दीप्यते प्रकाशते दीपयति प्रकाशयति वा सूर्यादिज्योतींषि। अवाप्नोति व्याप्नोति समाप्नोति वा सर्वं भूतग्रामं स्वस्मिन्। आलिङ्गते भक्तं, भक्तैर्वा आलिङ्ग्यते। हिंनस्ति शत्रून् ददाति आददाति वा प्रीत्या भक्तेभ्योऽभीष्टम्। भवति सर्वत्र सर्वदा देशकालाद्यनवच्छिन्नोऽस्ति। वर्धते = बृंहते विविधप्रपञ्चरूपेण यः स ओङ्कारः परमात्मा। एवमवतेः सर्वे अर्था ओङ्कारे समनुगताः।

**प्रणवशब्दार्थः**

स च ओङ्कारः प्रणवशब्देनापि प्रोच्यते। प्रकर्षेण नूयते स्तूयते प्रशस्यते कीर्त्यते योऽसौ सः प्रणवः। प्रोपसर्गकात् णु-स्तुतौ धातोः अच्प्रत्यये णत्वे कृते प्रणवशब्दो निष्पद्यते। प्रणवश्च सर्वैरेव स्तूयते। 'सर्वे वेदा यत्पदमामनन्ति। तपांसि सर्वाणि च यद् वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ओमित्येतत्' (कठ. १.१५) इति श्रुतेः। किं वा प्रकर्षेण नूयते स्तूयते प्रशस्यतेऽभिधीयते परमपरं वा ब्रह्म येनासौ प्रणवः। ओङ्कारेण परमात्मा विशेषतः स्तूयते अभिधीयते 'तस्य वाचकः प्रणवः' (योग. १.२७), 'तज्जपस्तदर्थभावनम्' (यो. १.२८) इति योगसूत्राभ्याम्। 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' (गी. १७.२३) इति गीतावचनात्।

'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते'।। (कठ. १.१७)

'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्'।। (कठ. १.१६)

इत्यादिश्रुतेः। यः साधको यत् परमपरं वा ब्रह्म प्राप्तुमिच्छति एतदक्षरालम्बनध्यानेन तज्ज्ञानेन च तस्य तत् प्राप्तमेव भवतीत्यर्थः।

प्रकर्षेण नवः प्रणवः, यः सदैव उत्कर्षेण नवो नूतन एव भवति न पुराणः, स प्रणवः। अथवा यः प्रकर्षेण नवो नूतनः कूटस्थोऽविचाली षड्विधभावविकाररहितो नित्यो देशकालवस्तुपरिच्छेदविरहितः, स प्रणवः।

शिवमहापुराणे विद्येश्वरसंहितायां सप्तदशाध्याये प्रणवस्य शब्दव्युत्पत्त्या माहात्म्यमुक्तम्। तथा हि—

प्रो हि प्रकृतिजातस्य संसारस्य महोदधेः।
नवं नावां वरमिति प्रणवं वै विदुर्बुधाः।।४।।

संसारमहोदधिपारकरणाय उपायेषु श्रेष्ठोपायो नावां नौकानां वरं श्रेष्ठं प्रणवरूपम्। प्रशब्देन प्रकृतिः, नवशब्देन नौवरः श्रेष्ठजलयानमुच्यते।

प्रः प्रपञ्चो न नास्ति वो युष्माकं प्रणवं विदुः।
प्रकर्षेण नयेद् यस्मान्मोक्षं वः प्रणवं विदुः।।५।।

प्रः = प्रपञ्चः, न = नास्ति, वः = युष्माकम् इति प्रणवः।

प्र = प्रकर्षेण नयति वः = युष्मान् मोक्षमिति वा प्रणवः।

अथवा प्रकृष्टो नवः नूतनः, प्रकर्षेण नवः नूतन इति प्रणवः। यथोक्तं तत्रैव—

स्वजापकानां योगिनां स्वमन्त्रपूजकस्य च।
सर्वकर्मक्षयं कृत्वा दिव्यज्ञानं तु नूतनम्।।६।।
तमेव मायारहितं नूतनं परिचक्षते।।७।।
प्रकर्षेण महात्मानं नवं शुद्धस्वरूपकम्।
नूतनं वै करोतीति प्रणवं तं विदुर्बुधाः।।८।।

सर्वकर्मक्षयपूर्वकदिव्यज्ञानं नूतनमुच्यते, तदेव प्रकर्षेण माया-प्रपञ्च-राहित्येन नूतनं भवति। तदेव दिव्यज्ञानं प्रणवमुच्यते। अथवा प्रकर्षेण स्वसामर्थ्येन महात्मानं तज्जपयोगिनं तेनैव भावितपरमात्मानं विशुद्धस्वरूपं कृत्वा नूतनं निश्चयेन करोतीति प्रणव उच्यते।

एवं प्रणवशब्दस्य अनेकधा अर्थाः शास्त्रे वर्णिताः सन्ति। अयं प्रणवस्तारकशब्देनापि कथ्यते। तारयति पारं करोति त्रिविधतापमय-

संसारार्णवाद् इति तारकः। स च मन्त्रः। सोऽसौ प्रणव एव। श्रूयते स्मर्यते च यद् भगवान् शिवो विशेषतः काश्यां मुमूर्षोः दक्षिणकरणे तारकं मन्त्रं ददाति येनासौ मुक्तो भवतीति। स च तारको मन्त्रः प्रणव एव। उक्तञ्च शिवपुराणे कैलाससंहितायां तृतीयाध्याये उमामहेश्वरसंवादे संन्यासदीक्षाप्रसङ्गे प्रणवस्य शिवरूपतां शिवस्य प्रणवरूपतामभिधानाभिधेययोरभेदात् प्रतिपाद्य—

एनमेव हि देवेशि! सर्वमन्त्रशिरोमणिम्।
काश्यामहं प्रदास्यामि जीवानां मुक्तिहेतवे।। (३.९०)

अतस्तारकमन्त्रोऽयं प्रणवः सर्वमन्त्रशिरोमणिः सर्वमन्त्रप्रभवश्च।

अयं प्रणव उद्गीथशब्देनापि प्रोच्यते। उक्तञ्च छान्दोग्ये—'ओमित्येतदक्षरमुद्गीथमुपासीत'। ओमिति हि उद्गायति। तस्योपव्याख्यानम्। एषां भूतानां पृथिवी रसः, पृथिव्या आपो रसः, अपामोषधयो रसाः, ओषधीनां पुरुषो रसः, पुरुषस्य वाग् रसः, वाच ऋग् रसः, ऋचः साम रसः, साम्न उद्गीथो रसः, स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यद् उद्गीथः' (छा. १.१)। ओमिति कृत्वा सामादिरुद्गीयते। आदौ अन्ते च गायत्र्यादौ सर्वमन्त्रेषु स्वाध्याये ओङ्कार उद्गीयते, तस्मादसौ उद्गीथ इति। स चासौ उद्गीथनाम्नाऽभिहित ओङ्कारः पृथिवी-जलौषधि-पुरुष-वाग्-ऋक्-साम्नां रसानां मध्ये अतिशयेन रसो रसतमः सारः। रस्यते आस्वाद्यते योऽसौ रस आनन्दः। आनन्दरूप एव प्रणवः। 'रसो वै सः, रसमेव लब्ध्वाऽऽनन्दीभवतीति' श्रुतेः (तै.सं. २.६)। एवं संक्षेपेणात्र ओङ्कारपर्यायाणां व्याख्यानं कृतम्।

**ओङ्कारस्य परमात्मवाचकत्वम्**

ओङ्कारः परस्य शुद्धबुद्धमुक्तसच्चिदानन्दाद्वयस्य निर्गुणस्य निर्विशेषस्य च ब्रह्मणः, अथ च मायोपहितस्य सगुणस्य सविशेषस्य हिरण्यगर्भाख्यस्येश्वरस्य विराजोऽपरस्य ब्रह्मणो वाचकोऽभिधायकः। उक्तयोगसूत्रात् पूर्वोक्तगीतावचनाच्च। कठोपनिषदि प्रतीकालम्बनश्रुतेश्च। एषा श्रुतिः, 'यदिच्छन्तो.....एतद्ध्येवाक्षरं ब्रह्म..... एतदालम्बनं श्रेष्ठम्.....' इत्यादिरूपा पूर्वमुदाहृता। अभिधेयं परापरं ब्रह्म, अभिधानं प्रणवः। शिवपुराणेऽपि कैलाससंहितायां तृतीयाध्याये—

शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः।
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः।।७।।

तस्मादेकाक्षरं देवं मां च ब्रह्मर्षयो विदुः।
वाच्यवाचकयोरैक्यं मन्यमाना विपश्चितः॥८॥

तस्माद् वेदादिरेवाहं प्रणवो मम वाचकः।
वाचकत्वान्ममैषोऽपि वेदादिरिति कथ्यते॥२०॥

तथा विद्येश्वरसंहितायामपि तत्रैव शिवपुराणे—

उपादिशं निजं मन्त्रमोङ्कारमुरुमङ्गलम्।
ओङ्कारो मन्मुखाज्जज्ञे प्रथमं मत्प्रबोधकः॥१६॥

वाचकोऽयमहं वाच्यो मन्त्रोऽयं हि मदात्मकः।
तदनुस्मरणं नित्यं ममानुस्मरणं भवेत्॥१७॥

एवं सन्दर्भेण विज्ञायते यत् परमेश्वरस्य सगुणस्य निर्गुणस्य वा वाच्यत्वे प्रतिपाद्यत्वे प्रणवस्य च वाचकत्वे प्रतिपादकत्वे सन्देहलेशोऽपि नास्ति। सर्वत्रैव श्रुतिस्मृतीतिहासपुराणादिषु तथा प्रसिद्धेः। उरुमङ्गलमिदमोङ्कारपदम्, यतः परमात्मप्रभवत्वमुच्यते—

'ओङ्कारश्चाथशब्दश्च द्वाविमौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ'॥

पुरा सृष्टिकारणभूतवेदराशिप्रादुर्भावात् प्राक्। कण्ठं भित्त्वा इत्यनेन ततः पूर्वं कण्ठतः कश्चिच्छब्दो नाभूत्। अनायासेनैव निःश्वासवत् प्रादुर्भूत इत्यर्थः। स प्रणवो वेदराशिः परस्य ब्रह्मणो निःश्वासभूत एव। यथा श्रूयते—'अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' इति। निःश्वसितशब्देन च ज्ञायते यत् पुरुषनिःश्वासवद् अनायासेनैव सप्रणववेदानां महति पुरुषे ब्रह्मणि आविर्भावः तिरोभावः स्वरशः पदशः समानानुपूर्वीरूपेण भवतीति। एतेन वेदानां सप्रणवानामपौरुषेयताऽपि व्याख्याता। शिवपुराणे विद्येश्वरसंहितायां दशमेऽध्यायेऽप्युक्तम्—पञ्चमुखात् शिवादेवादौ प्रणवप्रभव इति। तद्यथा—

अकार उत्तरात् पूर्वमुकारः पश्चिमाननात्।
मकारो दक्षिणमुखाद् बिन्दुः प्राङ्मुखतस्तथा॥१८॥

नादो मध्यमुखादेवं पञ्चधाऽसौ विजृम्भितः।
एकीभूतः पुनस्तद्वद् ओमित्येकाक्षरोऽभवत्॥१९॥

नामरूपात्मकं सर्वं वेदभूतं कुलद्वयम्।
व्याप्तमेतेन मन्त्रेण शिवशक्त्योश्च बोधकम्।।२०।।

अतो वेदेभ्योऽपि प्राग् भगवन्मुखाम्भोजवनाच्च्युतमोङ्कारतत्त्वं परमं पावनं शिवशक्तिबोधकमिति गम्यते।

**प्रणवस्वरूपम्**

प्रणवं द्विविधं प्रोक्तं स्थूलसूक्ष्मप्रभेदतः।
सूक्ष्ममेकाक्षरं विद्यात् स्थूलं पञ्चाक्षरं विदुः।।
सूक्ष्ममव्यक्तपञ्चार्णं सुव्यक्तार्णं तथेतरत्।।

विद्येश्वरसंहितायां शिवपुराणे प्रणवस्य स्थूलसूक्ष्मभेदेन द्वैविध्यमुक्तम्—सूक्ष्ममेकाक्षरम्, यत्र अकारादयो मात्रा न स्फुटा भवन्ति, स्थूलं तु पञ्चाक्षरम्। जीवन्मुक्तेन पुरुषेण सूक्ष्मं प्रणवं स्वदेहविलयावधि जप्यम्, तेनैव स्वात्मानुसन्धानं कर्त्तव्यम्। विदेहे जाते तु ध्रुवमेव मुक्तः स भवति। सूक्ष्ममपि द्विविधं प्रोक्तम्, ह्रस्वदीर्घप्रभेदतः। अकारः उकारः मकारः नादः बिन्दुः—एतत् पञ्चयुतं सूक्ष्मं दीर्घं प्रणवं शब्दकालकलान्वितमुच्यते। दीर्घप्रणवं योगिनां हृद्गतं भवति। मकारो ह्रस्वप्रणव उच्यते। शिवशक्त्योरैक्यमस्मिन्। सर्वपापक्षयैषिणां ह्रस्वप्रणव एव जप्यः इत्यादि-सूक्ष्मा विषयाः पूर्वोक्तस्थलात् शिवपुराणादवगन्तव्याः। ओङ्कारस्य अकारोकारमकारास्तिस्रो मात्राः परिगण्यन्ते। नादो ध्वनिः शिवो बिन्दुः शक्तिश्च। एवं पञ्चात्मक ओङ्कारः। ओङ्कारोच्चारणे अकारादीनां स्पष्टप्रतिभासाभावाद् एकाक्षरमित्युच्यते। उक्तञ्च शिवपुराणे कैलाससंहितायाम्—

वर्णपञ्चकरूपोऽयमेवं प्रणव उद्धृतः।
त्रिमात्रबिन्दुनादात्मा मुक्तिदो जपतां सदा।।१३।।
ब्रह्मादि-स्थावरान्तानां सर्वेषां प्राणिनां खलु।
प्राणः प्रणव एवायं तस्मात् प्रणव इतीरितः।।१४।।
आद्यं वर्णमकारञ्च उकारमुत्तरे ततः।
मकारं मध्यतश्चैव नादान्तं तस्य चोमिति।।१५।।
अकारश्चाप्युकारोऽयं मकारश्च त्रयं क्रमात्।
तिस्रो मात्राः समाख्याता अर्द्धमात्रा ततः परम्।।१६।।

अर्द्धमात्रा महेशानि! बिन्दुनादस्वरूपिणी।
वर्णनीया न वै चाद्धा ज्ञेया ज्ञानिभिरेव सा॥१७॥

अकारस्तु महद्बीजं रजः स्रष्टा चतुर्मुखः।
उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः॥१८॥

मकारः पुरुषो बीजी तमः संहारको हरः।
बिन्दुर्महेश्वरो देवस्तिरोभाव उदाहृतः॥१९॥

नादः सदाशिवः प्रोक्तः सर्वानुग्रहकारकः।
नादमूर्धनि संचिन्त्यः परात् परतरः शिवः॥२०॥

स सर्वज्ञः सर्वकर्त्ता सर्वेशो निर्मलोऽव्ययः।
अनिर्देश्यः परब्रह्म साक्षात् सदसत्परः॥२३॥

अकारोकारमकाराः तिस्रो मात्राः क्रमशः, ततोऽर्द्धमात्रा नादबिन्दुरूपा याऽनुच्चार्या केवलं योगिभिर्ज्ञेया। सप्तशत्यामप्युक्तम्—

सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता।
अर्द्धमात्रा स्थिता नित्यं याऽनुच्चार्या विशेषतः॥ इति।

तत्र प्रतिमात्रम् उच्यते—अकारो महद्बीजं, रजोगुणः, चतुर्मुखरूपो जगत्स्रष्टा। उकारः प्रकृतिर्योनिः कारणमुपादानं सत्त्वं पालयिता विष्णुः। मकारो बीजी बीजप्रदाता तमोगुणः संहारको हरः। बिन्दुः महेश्वरः तिरोभावः। नादः सदाशिवः सर्वानुग्राहकः। एकस्यैव शिवस्य हरो महेश्वरः सदाशिव इति गुण-क्रियानुरूपो भेदः।

एवं नादरूपसदाशिवोपरि निष्कलो निर्द्वन्द्वः सर्वज्ञः सच्चिदानन्दः परमशिवः परब्रह्मरूपः सम्यग् चिन्त्यः मुमुक्षुभिर्योगिभिः। अकारो-कारमकारबिन्दुनादाद् उपरि तुरीयं रूपमात्रं शुद्धब्रह्म अधिगन्तव्यं भवति। एवञ्च सर्वात्मकः प्रणवः परब्रह्मप्राप्तिसाधनभूतः। ओङ्कारस्य सर्वात्मकता ब्रह्म-प्राप्त्युपायता च। एतत् सर्वं माण्डूक्योपनिषदि माण्डूक्यकारिकायाञ्च स्पष्टमुक्तम्। तथा हि—'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव'। (माण्डू. १)

प्रणवोऽभिधायकोऽभिधेयश्च परापरं ब्रह्मेति यथाशास्त्रमुक्तं पूर्वम्। निर्विशेषं मायानुपहितं तुरीयं विशुद्धं सच्चिदानन्दं निर्गुणं ब्रह्म परमित्युच्यते।

उपहितश्च अपरमुच्यते। उपहितमपि कारणसूक्ष्मस्थूलोपाधिभेदात् त्रिधा उच्यते। कारणं माया, प्रकृतिरविद्या, अज्ञानमव्यक्तं वा तदुपहितं ब्रह्म ईश्वर उच्यते। एवं मायाजन्यभूतसूक्ष्ममनोबुद्धीन्द्रियप्राणादिप्रपञ्चः सूक्ष्मोपाधिरुच्यते, तदुपहितं चैतन्यं ब्रह्म हिरण्यगर्भः सूत्रात्मेत्युच्यते। एवं मायाजन्यपञ्चीकृतस्थूलभूतोपाधिः स्थूल उच्यते। तदुपहितं ब्रह्म विराट् वैश्वानर इत्युच्यते। एवञ्च सर्वमेव कारण-सूक्ष्मस्थूलोपाध्यात्मकं जगद् ब्रह्मण्येव अध्यस्तं विलसितं सूत्रे मणिगणा इव। उक्तञ्च गीतायाम्—'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव'। एवञ्च द्विविधं ब्रह्म—परम् अनुपहितम्, अपरं सर्वप्रपञ्चोपहितम्। एतदेव सर्वं भूतं भवद् भविष्यच्च त्रिकालातीतमव्यक्तादि। एतत् सर्वमोङ्कार एव। ओङ्कारस्यैतत् सर्वमुपव्याख्यानं विस्तरेण कथनम्। अयमेव मन्त्रार्थः।

ननु कथमिदं सम्भवति यच्छब्दात्मक ओङ्कारः, अर्थात्मकञ्च सर्वं जगत्, तयोरभेदेन व्यवहारः। न हि घटशब्दो घटरूपोऽर्थो भवति। व्यक्तश्च सर्वत्र शब्दार्थयोर्भेद इति। अत आहार्यात्मकबोधोऽनेन मन्त्रेण स्यादिति चेत्, अत्रोच्यते—ओङ्कारः परस्यापरस्य च ब्रह्मणो वाचकः, वाच्यश्च ब्रह्म। ब्रह्म च सर्वात्मकम्। अभिधानाभिधेययोश्चाभेदः। यः शब्दः सोऽर्थः, योऽर्थः स शब्द इति, घटः शब्दः, घटोऽर्थ इति सामान्यप्रत्ययाद् अभेदोऽपि नात्यन्ताय, अपि तु भेदसहिष्णुतादात्म्यमुच्यते। केषाञ्चिदाचार्याणां मते, वाच्यवाचकयोरत्यन्ताभेद एव। न चात्यन्ताभेदे मधु-मधूच्चारणेन जिह्वायां माधुर्यप्रतीतिः, अस्याद्युच्चारणेन तु जिह्वाछेदप्रसङ्गः, अग्निरित्युच्चारणे दाहापत्तिरिति वाच्यम्। स्वादच्छेददाहादिकार्यावच्छेदकसंयोगसम्बन्धेन मुखे मध्वसिज्वलनादीनां शब्दा-नामभावात्। शब्दस्तु मुखे न संयोगेन, अपि तु कण्ठताल्वादिजन्यतया स्वजनकत्वसम्बन्धेनेति नोक्तदोषापत्तिः। तादात्म्यपक्षे न दोषः, वास्तवभेदस्य सत्त्वेऽपि वाच्यवाचकयोः आरोपिताभेदव्यवहारात्।

एवञ्च अभिधायकेन ओङ्कारेण अभिधेयस्य सर्वात्मकस्य ब्रह्मणोऽभेद इति युक्तमेवोच्यते—ओमित्येतदक्षरमिदं सर्वमिति। ननु घटशब्देन घटार्थाभिधानेन सह घटस्याभिधेयस्याभेदे सत्यपि कथमोङ्कारेण घटार्थस्याभेदः, तस्योङ्कारस्य घटवाचकत्वादिति चेत्, न, सर्वमेवार्थजातं स्वाभिधाना-व्यतिरिक्तम्। सर्वस्य चाभिधानस्य घटपटादिशब्दजातस्य ओङ्कारेण सहाव्यतिरेकात्। कुतः सर्वशब्दात्मकः प्रणव इति? शास्त्रप्रामाण्यात्। तथा हि ओङ्कार एव सर्वा वाक्। वागेव विश्वा भुवनानि जज्ञे। ओङ्कारादेव वेदादिशब्दग्रामस्याविर्भावः। वैयाकरणैश्च प्रणवः स्फोटरूप एवाङ्गीक्रियते।

स्फुटति शब्दार्थरूपं जगद् यस्मात् स स्फोटः। स चैको विभुर्नित्यो ब्रह्मस्वरूपः। तत्रैव समस्तशब्दार्थजातस्य जगतो विवर्त इति 'अनादिनिधनमि'त्यादि-वाक्यपदीयकारिकया प्रथमया प्रतिपाद्यते। शब्दार्थोभयप्रपञ्चविवर्त्तोपादानं स्फोट एव प्रणवरूप इति वाक्यपदीय-मञ्जूषा-भूषणादिग्रन्थेषु विस्तरेण प्रतिपादितम्।

तस्मात् प्रणवादेव वर्णपदवाक्यरूपाणां स्वाभिन्नार्थावभासिनीनां वाचां प्रादुर्भावः, तत्रैवान्तर्भावश्चेति शास्त्रसिद्धम्। तथा च सर्वाभिधानाभिन्नः प्रणवः, सर्वार्थाभिन्नश्च परमात्मेति स्थितः सर्वात्मकस्य परमेश्वरस्य सर्वाभिधानाभिन्नेन वाचकेन प्रणवेन सहाभेदः। एवञ्चोक्तश्रुत्या युक्तमेव प्रतिपाद्यते—ओमिति सर्वमिति। यदा पुनः परब्रह्मणा प्रतिपाद्येन सह ओङ्कारस्याभेदस्तदा ओङ्काराभिध्यानेन ज्ञानेन पूजया च परमात्मा अभिध्यातो ज्ञातः पूजितो भवति। परमेश्वरप्रतिपत्त्युपायभूतः प्रणव एव। न हि शब्देनाभिधानाभिधेयमन्तरा तदर्थोऽवगम्यते। अतः ओङ्कार एव वाचकत्वाद् ब्रह्मावगतेरुपायः।

ननु सन्ति बहवः परमात्मवाचकाः शब्दाः, तत्, सत्, ब्रह्म, नारायणादयः; क एष आग्रहो वाचकविशेषे प्रणवे? अयमत्राग्रहे हेतुः—यथा परस्य ब्रह्मणो नेदीयान् वाचकः श्रेष्ठश्च प्रणवः, न तथान्ये वाचकाः शब्दाः। अतः प्रियरहस्यनामग्रहणे यथा खलु कश्चित् प्रमोदते प्रीतिमान् भवति, एवमोङ्कारस्य जपस्मरणकीर्तनानुसन्धानेन प्रसीदतितरां परमात्मा। तस्मादुपाय-तमः प्रणवः परप्राप्तौ। परप्राप्त्युपायत्वं विशेषतः प्रणवस्यैवेत्यत्र प्रमाणभूताः शतशः श्रुतयः स्मृतयश्च दृश्यन्ते, तद्यथा—'तत्ते पदं संग्रहेण प्रवक्ष्ये ओमित्येतत्' (कठ. १.२.१५), 'एतदालम्बनं श्रेष्ठम्' (कठ. १.२.१७), 'एतद्वै सत्यकामः' (प्र.उ. ५.२), 'ओमित्यात्मानं युञ्जीत' (मैत्र्यु. ६.३), 'ओमिति ब्रह्म' (तै.उ. १.८.१), 'ओङ्कार एवेदं सर्वम्' (छा.उ. २.२३.३), 'ओमित्येतदक्षरमिदं सर्वम्' (माण्डूक्य. १.१) इति श्रुतयः।

ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा।। (गी. १७.२३)

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्।। (गी. १७.२४)

शिवपुराणसन्दर्भास्तु पूर्वमुदाहृताः। एवमन्यत्रापि स्मृतिषु पुराणेषु च ओङ्कारस्य ब्रह्मप्राप्त्युपायत्वं विशेषतः प्रतिपादितम्। माण्डूक्योपनिषदि गौडपादकारिकास्वपि प्रतिपादितम्—

ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः।
ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत्।।

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित्।।

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः।।

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम्।।

प्रणवं हीश्वरं विद्यात् सर्वस्य हृदि संस्थितम्।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति।।

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः।।

(गौडपाद. २४-२९)

मुण्डकोपनिषदि धनोरुपमानेन प्रणवस्य परब्रह्मप्राप्तिसाधनता स्पष्टमुक्ता, तथा हि—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्।। (मु.उ. २.२.४)

यथा कश्चिद् धनुषि शरमारोप्य यत्नेन अप्रमत्तेन सावधानतया लक्ष्यं विध्यति, तथैव मुमुक्षुर्ब्रह्म प्राप्तुं यत्नमप्रमादेन कुर्यात्। कथम्? किं धनुः कः शरः किञ्च लक्ष्यमिति? प्रणव ओङ्कारो धनुः, स्वात्मा शरः, ब्रह्म लक्ष्यम्। प्रणवेन आलम्बनेन प्रतीकेन वा परमपावनेन पुनः पुनरनुदिनं समुच्चारण-कीर्तनध्यानस्मरणादिना संस्क्रियमाण आत्मा शरस्थानीयः लक्ष्ये परब्रह्मणि तन्मयतया संयुञ्जीत। एवञ्च ब्रह्मणि जीवात्मनः प्रवेशकारणं प्रणव एव, यथा शरस्य लक्ष्ये प्रवेशकारणं धनुः। उक्तञ्च तत्रैव शाङ्करभाष्ये—'प्रणवो धनुरिव धनुः। शरो ह्यात्मा उपाधिलक्षणः, पर एव जले सूर्यादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया। सः शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मणि, अतो ब्रह्म तल्लक्ष्यमुच्यते। लक्ष्य इव मनःसमाधित्सुभिः आत्मभावेन लक्ष्यमाणत्वात्। तत्रैवं सत्यप्रमत्तेन = बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेण

एकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यम्। ततो वेधनाद् ऊर्ध्वं शरवत्तन्मयो भवेत्। यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति, तथा देहाद्यात्मप्रत्ययतिरस्कारेण अक्षरैकात्मकत्वं फलमापादयेत्' (शा.भा. तत्रैव)।

अत एव ओङ्कार एव ब्रह्मप्राप्तौ सर्वश्रेष्ठमालम्बनं प्रतीकञ्चोक्तम्। आलम्बनं साधनं द्वारं यदालम्ब्य आश्रित्य सोपानमिव परब्रह्माधिगन्तुं शक्यते। वाचकमालम्ब्यैव वाच्यार्थस्य प्रतिपत्तिः शब्देन भवति। प्रतीकं नाम प्रतिरूपकम्। प्रणवमेव परब्रह्मस्वरूपमिति मत्वोपासनं प्रतीकोपासनम्। प्रणवद्वारा ब्रह्मोपासनमालम्बनोपासनमिति विवेकः। यथा प्रतिमासु देवतोपासने उभयं दृश्यते। केचिद् देवप्रतिमायां तन्माध्यमेन आलम्बनेन देवमेव मुख्यमुपासते। केचित् तु प्रतिमामेव देवं मत्वोपासते। तच्च प्रतीकोपासनम्। उभयत्र समानं फलम्। ओङ्कारस्य ब्रह्मणाभेदात्। मणिप्रभायां मणिभ्रमादपि प्रवृत्तस्य मण्युपलब्धिवत्। एवञ्च शास्त्राच्च सिद्धं ब्रह्मप्रतिपत्त्युपायत्वं प्रणवस्य।

**कथं प्रणवेन ब्रह्मोपास्यते?**

माण्डूक्योपनिषदि ब्रह्मणः पादेषु प्रणवमात्राणामभेदमारोप्य तासु मात्रासु पादशो ब्रह्म प्रतिपद्यत इत्युक्त उपासनाप्रकारः। स इह संक्षिप्योच्यते। यथा हि ओमित्येतत् सर्वमित्युक्तम्, तथैव तत्रैव 'सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्' (मा. २) इत्युक्तम्। अस्यार्थः—यदुक्तं सर्वमोङ्कार-मात्रमिति तदेतद् ब्रह्म। ओमिति ब्रह्म, ब्रह्मेति ओमिति भावः, वाच्यवाचकयोरभेदादित्युक्तम्। किमिदं ब्रह्म ओङ्काराभिन्नमोङ्कारप्रतिपाद्यम्? अयमात्मा ब्रह्म। अयमित्यभिनयेनोच्यते योऽयं ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु मनुष्यादिषु प्रत्यगात्मतया विद्यमान आत्मा जीव इति व्यपदिश्यमानः स आत्मा ब्रह्म। तच्चोङ्काराभिधेय इत्यवगन्तव्यम्। स चात्मा चतुष्पात्। चत्वारः पादा यस्य स चतुष्पात्। पादा इव पादाः। पद्यते गम्यते तुरीयं रूपं येनासौ पादः। कार्षापणवद् रूप्यकवद् वा चतुष्पात्, न तु गोमहिषवच्चतुष्पात्। एकस्मिन्नेव परस्मिन् अखण्डे ब्रह्मणि चतुष्पात्त्वं कल्पितं तत् प्रतिपत्तिसौकर्याय। एवम् अखण्डस्य एकस्य अक्षरस्यापि प्रणवस्य अकारादयो मात्राः कल्पिताः। कल्पितमात्राकेणाभिधानेन कल्पितपादात्मकस्य आत्मनः प्रतिपत्तिः सुकरा। ब्रह्मणः प्रथम-द्वितीय-तृतीय-तुरीयपादेषु पदशब्दः प्रयुज्यमानः प्रथमं त्रिषु करणसाधनः पद्यते गम्यते लभ्यते तुरीयपाद इति पादः। तुरीयपादे च पादशब्दः कर्मसाधनः, पद्यते गम्यते लभ्यते योऽसौ पादः।

**चतुष्पाद् ब्रह्म**

इदमिहावगन्तव्यम्। ब्रह्म निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनमेकं शुद्धमद्वैतं सच्चिदानन्दघनरूपम् उपाधिवशात् जीवभावेन व्यवह्रियते। उपाधिरज्ञानं माया। तज्जन्यसूक्ष्मस्थूलप्रपञ्चश्चोपाधिः। अयमज्ञानोपाधिरेव कारणशरीरमुच्यते। स च कारणोपाधिर्माया अज्ञानं प्रकृतिर्वा अव्यक्तं समष्टिव्यष्टिरूपेण द्विधा। समष्टिः समूहः, व्यष्टिरेकदेशः। अज्ञानसमष्टिः, अज्ञानव्यष्टिश्च। ताभ्यामुपहितं चैतन्यं ब्रह्म क्रमश ईश्वरः प्राज्ञश्चोच्यते। एषा समष्टिर्व्यष्टिश्च सुषुप्तिस्थानमानन्दमयकोश उच्यते। तदेव निर्विशेषं ब्रह्म अज्ञानसमष्ट्युपहितमीश्वरः। तदेव च तद्व्यष्ट्युपहितं प्राज्ञ उच्यते। शुद्धेश्वर-प्राज्ञानां नास्ति भेदो वास्तविकः। उपाधेरज्ञानस्य मिथ्यात्वात्। तथा अव्यक्ताज्ञानं यदा व्यक्तं जायते, तदा सूक्ष्मभूतानामिन्द्रियप्राणादीनामुत्पत्ति-र्भवति, तत् सूक्ष्मकार्यमुच्यते, तदपि समष्टिव्यष्टिभेदेन द्विधा। सूक्ष्मभूतकार्य-समष्ट्युपहितं तदेव ब्रह्म हिरण्यगर्भ उच्यते। सूक्ष्मव्यष्ट्युपहितं च तैजस उच्यते। सूक्ष्मव्यष्टिरेव सूक्ष्मसमष्टिरेव सूक्ष्मशरीरं निगद्यते। तत्र सूक्ष्मसमष्टिशरीरोपहितं चैतन्यं हिरण्यगर्भः, व्यष्ट्युपहितश्च तैजसः, स्वप्नस्थानं विज्ञानप्राणमनोमयकोश उच्यते।

ततः अज्ञानत एव स्थूलभूतानां पञ्चानामुत्पत्तिः चतुर्दशभुवनात्मकजगतः स्थूलशरीराणां तदुचितान्नपानादीनाञ्च भोग्यानामुत्पत्तिर्जायते। एतस्यापि स्थूलभूतकार्यात्मकस्य समष्टिव्यष्टिरूपेण द्वैविध्यम्। स्थूलसमष्टिभूतोपहितं चैतन्यं ब्रह्म विराट् वैश्वानरो वा उच्यते, स्थूलव्यष्ट्युपहितञ्च विश्व उच्यते। एवञ्च एकस्य ब्रह्मण उपाध्यज्ञानतद्भेदेन च समष्टिव्यष्टिरूपेण षोढा भेदः— ईश्वरप्राज्ञौ, तैजसहिरण्यगर्भौ, विश्ववैश्वानरौ। ब्रह्म च निरुपाधि सर्वत्र शुद्धं सर्वानुगतं नित्यमवस्थितमेव। उपाधेस्तद्भेदस्य चाध्यस्तत्वात् मिथ्यात्वात्, अज्ञानसमष्टिव्यष्ट्योः तत्कार्यसमष्टिव्यष्ट्योश्चाभावात् मिथ्यात्वात्, ब्रह्मविद्यया बाधितत्वात्। एवमेव ब्रह्म शुद्धमवशिष्यते। एवं वस्तुस्थितिः। तत्र तस्यैव ब्रह्मणः शुद्धस्य प्रतिपत्तिसौकर्याय पादकल्पना क्रियते। ब्रह्मणः परस्य स्थूलसमष्टिव्यष्ट्युपहितं चैतन्यं विश्ववैश्वानराभिधेयं प्रथमः पादः। सूक्ष्म-समष्टिव्यष्ट्युपहितं चैतन्यं तैजसहिरण्यगर्भाख्यं द्वितीयः पादः। कारणमाया-समष्टिव्यष्ट्युपहितं चैतन्यं ईश्वरप्राज्ञाख्यं तृतीयः पादः। यच्चानुपहितं सर्वथा एतेन कारणसूक्ष्मस्थूलोपाधिना असक्तं सर्वथा शुद्धबुद्धमुक्तस्वरूपं निर्गुणं

निर्विशेषं चैतन्यमात्रं ब्रह्म तत् तुरीयं चतुर्थं शिवमद्वैतं चतुर्थः पाद उच्यते। एवञ्चतुष्पाद् ब्रह्म निरूपितम्।

प्रणवस्यापि अकारः प्रथममात्रा, उकारो द्वितीयमात्रा, मकारस्तृतीयमात्रा, चतुर्थो भागोऽमात्रकः। एवं चत्वारो भागाः। तत्र वाचके आलम्बने प्रतीके वा ब्रह्मप्राप्तिसाधनभूते प्रणवे ब्रह्मोपासना विधीयते पादशः, ओङ्कारब्रह्मणोरभेदात्। पादा एव मात्राः, मात्रा एव पादा इत्यभेदाध्यवसायः क्रियते। सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्राः, मात्राश्च पादा अकार उकारो मकार इति (मा.उप. ८)।

अर्थाद् ओङ्कारस्य प्रथममात्रायामकारे ब्रह्मणः प्रथमपादस्य विश्ववैश्वानर-दृष्टिः कर्त्तव्या। एवं द्वितीयमात्रायामुकारे ब्रह्मणो द्वितीयपादस्य हिरण्यगर्भतैजसाख्यस्य दृष्टेरनुध्यानं कर्त्तव्यम्। एवं प्रणवस्य तृतीयमात्रायां मकारे ब्रह्मणस्तृतीयपादस्य प्राज्ञेश्वराख्यस्य दृष्टिः कर्त्तव्या। एवं ब्रह्मणश्चतुर्थः पादः तुरीयः, तस्य अमात्रके प्रणवे दृष्टिः कर्त्तव्येति।

प्रणवमात्रायां पादशो ब्रह्माभेदेन ध्यानमनुचिन्तनं स्मरणमुच्चारणं कर्त्तव्यं तेन ब्रह्माभ्यावर्तते। एवं प्रणवालम्बनेन प्रणवप्रतीकेन चात्माधिगम्यते। यथोक्तं माण्डूक्योपनिषदि—'जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः **प्रथमः पादः**' (मा.उप. ३)।

जागरितस्थानो जाग्रदवस्थाभिमानी बहिष्प्रज्ञो बाह्यविषयेषु शब्दस्पर्शादिषु प्रज्ञा बुद्धिर्यस्य सः। सप्ताङ्गः = शिरोनेत्रप्राणसन्देह-(मध्यदेह)वस्ति-(मूत्रस्थान)पादद्वयम्। एभिः सप्ताङ्गैः सप्ताङ्गः। उक्तञ्च छान्दोग्ये सप्ताङ्गं यथा—'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः (द्यौः), चक्षुर्विश्वरूपः (सूर्यः), प्राणः पृथग्वर्त्मा (वायुः), सन्देहो (मध्यदेहः), बहुलो (आकाशम्) वस्तिरेव रयिः (जलम्), पृथिव्येव पादौ' (छा. ५.१८.२)। एकोनविंशतिमुखः = पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि दश, पञ्च वायवः प्राणाः पञ्चदश, मनोबुद्धिरहङ्कारश्चित्तमित्येकोनविंशतिः मुखानि स्थूल-भोगोपलब्धिद्वाराणि यस्य स एकोनविंशतिमुखः। स्थूलभुक् = स्थूलान् विषयान् शब्दस्पर्शरूपरसगन्धादीन् भुङ्क्ते साक्षात्करोतीति स्थूलभुक् प्रथमः पादः। अनेन पादेन उत्तरः पादो ज्ञायत इति प्राथम्यमस्येति बोध्यम्।

वैश्वानरः, विश्वेषां सर्वेषां नराणां प्राणिनां विविधरूपेण नयनाद् विश्वानरः। नरशब्दे परे विश्वशब्दस्यान्तस्य दीर्घः। 'नरे संज्ञायाम्' इति सूत्रात्।

विश्वानरशब्दात् स्वार्थिकोऽण्, विश्वानर एव वैश्वानरः। अथवा विश्वश्चासौ नरश्चेति विश्वानरः, स एव वैश्वानरः। स्वार्थिकोऽण्, सर्वदेहपिण्डानन्यत्वेनाभिमानित्वात्।

**द्वितीयः पादः**

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्गः एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः (माण्डू. ४)।

स्वप्नावस्थाभिमानी अन्तःप्रज्ञः अन्तः अभ्यन्तरं प्रज्ञा मनोवृत्तिर्यस्य सः। स्वप्ने हि इन्द्रियाणां विलयाद् उपरमात् मनसश्चानुपरमात्, मनसश्च अन्येन्द्रियापेक्षयान्तःस्थत्वात् जाग्रद्वासनावासितमनोवृत्तयः प्रज्ञाशब्देनोच्यन्ते। एवञ्च जाग्रद्वासनानुरूपा अन्तः अबाह्यविषया प्रज्ञा मनःप्रचारो यस्य सोऽसौ अन्तःप्रज्ञः। वासनानुरूपान् एव स्वाप्निकान् विषयान् मनसैवोपलभते। सप्ताङ्गः पूर्वोक्तरूपः, एकोनविंशतिमुखो व्याख्यातः। तत्र इन्द्रियाणि सूक्ष्माण्येवावतिष्ठन्ते, कल्पितानि न बाह्यविषयग्रहणक्षमाणि। अत एव स्वप्ने पश्यतीव शृणोतीव स्पृशतीव जिघ्रतीव प्रतिभासते। प्रविविक्तभुक् प्रविविक्तं सूक्ष्ममस्पष्टं वासनोपपादितं भुङ्क्ते अनुभवतीति प्रविविक्तभुक्। अयं द्वितीयः पादः।

**तृतीयः पादः**

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्ने पश्यति तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः (माण्डू. ५)।

यत्र न बाह्यं नान्तरं विषयमनुभवति। न किञ्चिद् बाह्यमाभ्यन्तरं वा कामयते, सर्वेन्द्रियाणां समनस्कानामुपशान्तत्वात् स्वकारणेऽज्ञाने विलयात्। अत एव मनसो विलयान्न कञ्चन स्वप्नमपि पश्यति, सर्ववासनानामुपशान्तत्वात्। तत् सुषुप्तावस्थोच्यते। तदभिमानी, एकीभूतः = जाग्रत्-स्वप्नस्थानद्वये प्रसरद्वृत्तिकं मनः, अत्र सर्ववृत्तिविलयात् मनसि, मनसश्च स्वोपादानेऽज्ञाने विलयाद् एकमात्रमज्ञानोपहित आत्माऽवशिष्यत इति एकीभूत उच्यते। यथा नैशं तमोग्रस्तं जगद् विशेषतोऽविविक्तम् एकीभूतमन्धकारमयं दृश्यते, एवं निद्राग्रस्तस्य जीवात्मनः अज्ञानोपाधावेव अथवा अज्ञानोपाधिनैव सर्वमिन्द्रियमनःप्रचारादिघनीभूतमिव एकीभूतमिव विलीनमिव अभावग्रस्तमिव दृश्यते। अत एव उत्थितस्य परामर्शः—'गाढं मूढोऽहमासं न किञ्चिदवेदिषम्'।

प्रज्ञानघनः = मनःप्रचारोपशमात् मनोवृत्तिषु अभासनात् प्रज्ञाने चैतन्ये स्थैर्यम्। स्वभावतः स्थिरस्यापि चैतन्यस्य मनःप्रचारेषु तत्प्रत्ययेषु प्रत्येकमवभासकतया तदुपाधिकतया चाञ्चल्यमिव भवति, उपद्रुतमिव भवति। प्रशान्तेषु च सर्वप्रत्ययेषु घनीभूत इव भवतीति प्रज्ञानघन उच्यते।

आनन्दमयः स एव प्रज्ञानघनः घनीभूतप्रज्ञः शरीरेन्द्रियमनः-प्रचारजन्याध्यासश्रमाद्यभावाद् विश्रान्तः आनन्दबहुलो न तु आनन्द एव स्वस्वरूपस्यानधिगमात्। अज्ञानबन्धनस्य च सद्भावात्। एवकारेण य एव प्रज्ञानघनः स एव आनन्दमयः, प्राचुर्ये मयट्। अत एवानन्दभुक् आनन्दानुभविता। ननु इन्द्रियेण समनस्केनानन्दोऽनुभूयते, तस्य विलयात् कथमानन्दानुभव इति चेत्, न, सुषुप्तावपि अज्ञानस्य सूक्ष्मा वृत्तयः परिणामा भवन्तीत्यङ्गीकारात्। तथा च बोधरूपात्मचैतन्यप्रदीप्ताभिः अज्ञानसूक्ष्मवृत्तिभिः सुषुप्तगतः प्राज्ञः आनन्दमनुभवति। अत एवोक्तम्—चेतोमुखः, चेतांसि चैतन्यप्रकाशिताः सूक्ष्मा वृत्तयः। ता एव मुखं द्वारमानन्दोपभोगस्येति चेतो-मुखः। सोऽसौ प्राज्ञः तृतीयः पादः।

'एषः सर्वेश्वर एषः सर्वज्ञः, एषोऽन्तर्याम्येषो योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्' (मा. ६)।

स च प्राज्ञः समष्टिरूपोपाध्यभिप्रायेण ईश्वर उच्यते। व्यष्टिरूपोपाधिवशात् प्राज्ञ इति। ईश्वरप्राज्ञयोर्भेदो नास्ति। प्राज्ञ ईश्वरः। तमेव प्राज्ञं स्तौति मन्त्रः। अयमेव प्राज्ञः सर्वेश्वरः सर्वज्ञः अन्तर्यमयति नियमयतीत्यन्तर्यामी सर्वभूतयोनिः सर्वभूतानामुत्पत्तिस्थितिविलयकारणमिति। एतत् श्रुतिस्मृतिसिद्धम्। उक्तञ्च गौडपादकारिकायाम्—

बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा मतः॥१॥

**तुरीयस्वरूपम्**

नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते, स आत्मा स विज्ञेयः। (मा. ६)

अयमर्थः—नान्तःप्रज्ञम् इति तैजसप्रतिषेधः, तैजसभिन्नमित्यर्थः। न बहिष्प्रज्ञमिति विश्वप्रतिषेधः, नोभयतःप्रज्ञमिति जाग्रत्-स्वप्नयोः अन्तरा-

लावस्थाप्रतिषेधः। न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः। न प्रज्ञमिति युगपत्-सर्वविषयप्रज्ञातृत्वप्रतिषेधः, नाप्रज्ञमित्यचैतन्यप्रतिषेधः, चैतन्यरूपमित्यर्थः। विश्वतैजसप्राज्ञादिषु प्रतिषिद्धेष्वपि चैतन्यस्य सर्वत्रानुगमादप्रतिषेधः। तैजसे विश्वस्य प्राज्ञे तैजसस्य व्यभिचारः, अतः प्रतिषेधः। तुरीये तु प्राज्ञस्यापि प्रतिषेधः। एवं जाग्रत्स्वप्नसुषुप्तितदन्तरालावस्थाव्यतिरिक्तम् अन्नप्राण-मनोविज्ञानानन्दमयपञ्चकोशेभ्यो विलक्षणं शून्यविलक्षणं जडविलक्षणं चैतन्यमात्रं तुरीयं ब्रह्म सर्वोपाधिविलक्षणं बोध्यते शास्त्रेण। पुनश्च सर्वोपाधिविलयादेव अदृष्टं प्रत्यक्षादिज्ञानाविषयः। अत एवाव्यवहार्यं हानोपादानादिव्यवहाराविषयः, अग्राह्यं कर्मेन्द्रियैरनुपादेयम्, अलक्षणमलिङ्गमत एवाननुमेयम्। यतोऽदृष्टत्वादियुक्तमतोऽचिन्त्यं मनोबुद्ध्यविषयः, अत एवाव्यपदेश्यं शब्दैरनभिधेयम्। एकात्मप्रत्ययसारः जाग्रदादिषु एकोऽयमात्मेत्य-व्यभिचारी यः प्रत्ययस्तेनानुसरणीयम्। अथवा एकम् आत्मज्ञानं सारं प्रमाणं यस्य तद् एकात्मप्रत्ययसारम्, 'आत्मेत्येवोपासीत' (बृ. १.४.७) इति श्रुतेः। प्रपञ्चोपशमं सर्वजगदादिप्रपञ्चरहितमत एव शान्तमचञ्चलमचलमविक्रियं शिवं कल्याणतमं यतोऽद्वैतं भेदरूपद्वैतविकल्परहितम्। चतुर्थं तुरीयं मन्यन्ते। अयं चतुर्थः पादः प्रतीयमानपादत्रयविलक्षणः सकलप्रपञ्चातीतत्वात् शुद्ध आत्मा स एव, अतः स एव विज्ञेयः। अत एवोक्तम्—

निवृत्ते सर्वदुःखानामीशानः प्रभुरव्ययः।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः।।

(गौ.पा.कारिका, १०)

अत्रेदं बोध्यम्—तुरीयमिति न चतुर्थांशः, एकस्मिन् अखण्डे निरवयवे ब्रह्मणि अंशाभावात्। तुरीयत्वं तु इतरपादापेक्षयोच्यते। तर्हि इतरपादत्रयं परमार्थं, न परमार्थं तदपि कल्पितमध्यस्तमेव, तर्हि निष्पाद् एव ब्रह्म, सत्यं वस्तुतो निष्पादेव ब्रह्म निष्कलं, पादकल्पना तु शुद्धब्रह्मावबोधार्था। साधकैः विश्वस्य तैजसे विलयः, तैजसस्य प्राज्ञे एवं प्राज्ञस्य विलये कृते तुरीयब्रह्म-प्रतिपत्तिः। पादत्रयावस्थायामपि अधिष्ठानभूतं शुद्धमेव तुरीयं ब्रह्मास्ति। रजतादिप्रतीतिकालेऽपि शुक्तिः स्वेन रूपेणैव यथा वर्तते। न हि रजतादिसहस्रारोपेऽपि शुक्तेः स्वरूपे स्वल्पाऽपि विक्रिया सम्भवति। अध्यस्तत्वाद् रजतादीनां मिथ्यात्वात्। एवं तुरीयात्मके एकस्मिन् उक्तलक्षणे आत्मनि जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयादिविकल्पा विश्वतैजसादयः अध्यस्तत्वात्

मिथ्या एव, न तैः ब्रह्मणः संसर्गलेशोऽपि। 'असङ्गोऽयमुच्यते' इति श्रुतेः। तथा च सर्वास्वपि अवस्थासु ब्रह्मैकरूपमेवाद्वैतम्। तदेव तुरीयमुच्यते।

**प्रणवमात्रासु ब्रह्मपादत्वाभेदः**

चतुष्पादात्मा चतुष्पाद् ओङ्कारः, उभयोरभेदादित्युक्तम्। तच्च श्रुत्यैव प्रतिपाद्यते—सोऽयमात्माऽध्यक्षरमोङ्कार इति, उदाहृतः पूर्वमयं मन्त्रः।

प्रतिमात्रं पाददृष्टिः क्रियते। उपासकः ओङ्कारस्य प्रथममात्रायां वैश्वानरबुद्धिं कुर्यात्। वैश्वानररूपेण अकारो ध्यातव्य इति भावः।

'जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्त्वात्। व्याप्नोति ह वै सर्वान् कामान् आदिश्च भवति य एवं वेद'। (मा. ९)

व्यापकत्वात् प्राथम्याच्च प्रथमपादो ब्रह्मणः ओङ्कारस्य प्रथममात्रा अकारः, अकारो ब्रह्मणः प्रथमः पाद इत्येवं यो विद्वान् जानाति उपास्ते स सर्वान् कामान् प्राप्नोति प्रधानश्च भवति स्वसमाजे। एवं फलसहिताभिधान-मन्येष्वपि मन्त्रेषु। तथा हि—'स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद् वा उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्या-ब्रह्मवित् कुले भवति य एवं वेद'। (मा. १०)

'सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति इदं सर्वमपीतिश्च भवति य एवं वेद'। (मा. ११)

अपीतिरव्ययः एकीभावः। अपीतिश्च भवति जगत्कारणात्मा भवति। मिनोति जानाति सर्वम्।

ओङ्कारमात्रासु पादोपासनायाः फलं श्रुतिष्वेवोक्तम्। अकारोपासकः वैश्वानररूपं तैजसोपासको हिरण्यगर्भलोकं प्राज्ञोपासकः सर्वेश्वररूपं प्राप्नोति सर्वज्ञो भवति।

अकारो नयते विश्वमुकारश्चापि तैजसम्।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः॥

योऽयं प्रणवः अमात्रः स चतुर्थः शिवोऽद्वैतात्मा एव। यथोक्तम्—

'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः। एवमोङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद'। (मा. १२)

अमात्र ओङ्कारः कल्पितमात्रारहितो नादमात्रैकाक्षरो विलापिताकारादि-प्रत्ययस्तुरीय आत्मैव भवति। एवञ्च ओङ्कार आत्मैवेति सिद्धं भवति।

तुरीयब्रह्मप्रतिपत्तिश्च विश्वतैजसप्राज्ञानां सोपाधिकानां विलयादेव सम्भवति, रजतविलयादेव रज्जुप्रतिपत्तिवत्। स च विलयः तुरीयात्मप्रतिपत्तितो जायते। तुरीयात्मज्ञाने च साधकस्तुरीय एव भवति, न विश्वो न तैजसो न प्राज्ञः। कथमेवमुपासनीयमिति चेत्, ओङ्कारमवलम्ब्यैव। तत्र मात्रासु पाददृष्टिं कृत्वा दीर्घकालनैरन्तर्यसत्कारपूर्वकानुध्यानेन पूर्वपूर्वप्रतीतानां विश्वादीनां तदभिन्नानां मात्राणामकारादीनाञ्च उत्तरोत्तरपादाभिन्नमात्रासु विलयः क्रियते। नास्ति रजतमपि तु रज्जुरेवेतिवत् नायमकारोऽपि तु उकार एव, अकारश्च तस्मिन् प्रविष्टः, नास्ति विश्वोऽपि तु तैजस एव, तत्रैव विश्वस्य विलयात्। एवं प्राज्ञे सर्वेषां विलयः, तदभिन्ने मकारे पूर्वमात्राणां विलयः, तदनन्तरं तुरीयाभिन्नोङ्कारानुध्यानेन सर्वप्रपञ्चोपशमात् तुरीयब्रह्मरूपः साधको भवतीति भावः।

प्रश्नोपनिषदि पञ्चमप्रश्नोत्तरे ओङ्कारोपासनायाः फलमुक्तम्। तदपि प्रसङ्गतो निर्देश्यमत्र भवति। तथा हि भगवन्तं पिप्पलादं ब्रह्मनिष्ठं ब्रह्मविदमुपसन्नेषु—'सुकेशा भारद्वाजः, शैव्यः सत्यकामः, सौर्यायणी गार्ग्यः, कौशल्यश्चाश्वलायनः, भार्गवो वैदर्भिः, कबन्धी कात्यायन इत्येषु ब्रह्मपरेषु ब्रह्मवित्सु परब्रह्मजिज्ञासुषु अन्यतमः शैव्यः सत्यकामः। शिवेरपत्यं शैव्यः सत्यकामनामा ऋषिः पप्रच्छ।

'अथ हैनं शैव्यः सत्यकामः पप्रच्छ। स यो ह वै भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत। कतमं वाव स तेन लोकं जयतीति'। (प्र.उ. १)

प्रयणान्तं मरणान्तं यावज्जीवम् ओङ्कारमभिध्यायीतोपासीत। अभिध्यानञ्च बाह्यान्तरसर्वविषयोपसंहारेण ओङ्कारमात्रानुसन्धानम्। 'तस्मै स होवाच एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः। तस्माद् विद्वान् एतेनैवायतनेनैकतरमन्वेति'। (प्र.उ. २)

परं शुद्धमनुपहितं निर्विशेषमपरमुपहितं सविशेषं विश्व-तैजस-प्राज्ञरूपम्। एतद् ओङ्कार एवेति ओङ्कार-ब्रह्मणोरभेद उच्यते। अतोऽनेन ओङ्काररूपेण आयतनेन आलम्बनेन प्रतीकेन वा एकतरं परमपरं वा ब्रह्म अन्वेति प्राप्नोति। नेदिष्ठं ह्यालम्बनमोङ्कारो ब्रह्मणः।

ननु ओङ्कारज्ञः मात्राज्ञः स्वरूपतः परमपरं वा गच्छतु। यश्च साधकः मात्राज्ञः स्वरूपतश्च ओङ्कारं न जानाति केवलं 'प्रणवः त्वया उपास्य' इति परोपदेशादेव प्रणवं शरणीकरोति, तस्य साधकस्य तु विनाश एव स्यात्, न ब्रह्मप्राप्तिरिति चेत्, न, ओङ्कारशरणस्य विदुषोऽविदुषो वा दुर्गतेरभावात्। न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छतीति स्मृतेश्च। अज्ञोऽपि अथवा एकमात्राज्ञो द्वित्रिमात्राज्ञो वा उपासीत, सोऽपि उत्तमं फलं प्राप्नोत्येव। तथा हि—

'स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते। तमृचो मनुष्यलोकमुपनयन्ते। स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति'। (प्र.उ. ३)

य एकमात्रामेव जानाति, अकारं तथा एकमात्रमोङ्कारमुपास्ते, स उपासकस्तूर्णं शीघ्रमेव मरणात् परं पृथिवीलोकं तेनैव एकमात्राविशिष्टोङ्काराभिध्यानेनैव संवेदितः सम्बोधितः प्रापितो भवति। तं साधकं पृथिव्यामृचः प्रापयन्ति। मनुष्यलोकं प्राप्तः सन् तपसा मनोवाक्कायसम्पादितेन कर्मणा ब्रह्मचर्येण गुरुशुश्रूषया वेदाध्ययनेन अष्टविधमैथुनपरित्यागेन च श्रद्धया आस्तिक्यबुद्ध्या गुरुवेदान्तवाक्येषु विश्वासरूपया सम्पन्नो भूत्वा महिमानं विभूतिमैश्वर्यमनुभवति। कदापि अधमां गतिं न गच्छति। न च स्वेच्छाचारी भवति। ओङ्कारस्य प्रथममात्रा अकारः ऋग्वेदरूपा भवति।

'अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम्। स सोमलोके विभूतिमनुभूय पुनरावर्तते'। (प्र.उ. ४)

यदि कश्चिद् अकारोकारमात्राद्वयज्ञाता तद्विशिष्टमोङ्कारम् अभिध्यायीत, स मनसि स्वप्नात्मके मनसि मननीये यजुर्मये सोमदेवताके सम्पद्यते। एकाग्रतया सोमात्मा सम्पद्यते। स च मृतस्तेनैव द्विमात्रोङ्काराभिध्यानेन द्वितीयमात्रोकाररूपैर्यजुर्भिः सोमलोकं चन्द्रलोकं प्राप्यते। तत्र विभूतिमनुभूय मानवावर्तं पुनरावर्तते। द्वितीयमात्रोपासनायाः सोमलोकप्राप्तिः फलम्।

'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यते। एवं ह वै स पाप्मना विनिर्मुक्तः सामभिरुन्नीयते ब्रह्मलोकम्। स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते। तदेतौ श्लोकौ भवतः'। (प्र.उ. ५)

यः साधकः त्रिमात्रं त्रिमात्राकारोकारमकारविशिष्टमोङ्कारमभिध्यायीत। एतेनैव त्रिमात्रेणोङ्कारेण परं पुरुषं परमात्मानं सूर्यमण्डलान्तर्गतं प्रापितो भवति। स तेजसि सूर्ये सम्पन्नो भवति। स च पादोदरः सर्पः। स यथा निर्मोकमुक्तो भवति तथाऽसौ पाप्मना सर्वदुरितेन मुक्तः सन् सामभिः तृतीयमात्रारूपैः ब्रह्मलोकं हिरण्यगर्भलोकं सत्यलोकमुन्नीयते प्राप्यते। एवं तत्र प्राप्तः सन् जीवघनात् सर्वजीवात्मभूताद् हिरण्यगर्भात् पराद् विश्वतैजसात् परात्परं ब्रह्म निष्कलं पुरिशयं पुरुषं पुरि शरीरे कारणसूक्ष्मस्थूलात्मके शेते तिष्ठतीति पुरिशयं पुरुषं पश्यति ध्यायमानः। एतस्मिन्नर्थे इमौ वक्ष्यमाणौ श्लोकौ मन्त्रौ भवतः। तत्र प्रथमः—

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता
अन्योन्यसक्ता अनविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु
सम्यक्प्रयुक्तासु न कम्पते ज्ञः॥६॥

अयमर्थः—ओङ्कारस्य तिस्रो मात्रा अकारोकारमकाराः। मृत्युमत्यो मृत्युगोचरा एव। ता आत्मनो ध्यानक्रियासु अन्योन्यसक्ताः परस्परसम्बद्धा एकीभूताः, अनविप्रयुक्ताः सम्यक् प्रयुक्ताः, विशेषेण ध्यानकाले बाह्याभ्यन्तर-मध्यमासु क्रियासु = जागत्स्वप्नसुषुप्तिस्थानाभिमानिषु व्यष्टिरूपेण, विश्वतैजस-प्राज्ञाभिध्यानलक्षणासु समष्टिरूपेण, वैश्वानरहिरण्यगर्भेश्वराभिध्यानरूपासु च क्रियासु सम्यक् प्रयुक्तासु सम्यक् ध्यानकाले प्रयोजितासु ज्ञः ओङ्कारविद्वान् न कम्पते न विचलति। स्थिरोऽविकम्पो भवति। न च तस्य विचलनमुपपद्यते; यतो हि विश्वतैजसप्राज्ञात्मकसमस्तविश्वम् ओङ्कारमात्रास्वेव दृष्टं तेन तस्मात् कुतो विचलनं भयं कम्पो जायेत।

द्वितीयो मन्त्रः—

ऋग्भिरेतं यजुर्भिरन्तरिक्षं
सामभिर्यत् कवयो वेदयन्ते।
तमोङ्कारेणैवायतनेनान्वेति विद्वान्
यत्तच्छान्तमजरममृतमभयं परञ्च॥७॥

ऋग्भिरेतं मनुष्यलोकं यजुर्भिरन्तरिक्षं सोमलोकं सामभिर्यत्तद् ब्रह्मलोकं तृतीयमित्येवं कवयो मेधाविनः क्रान्तदर्शिनो वेदयन्ते नाविद्वांसः। ऋग्-यजुःसामरूपाभिः अकारोकारमकाराख्याभिः मात्राभिः अभिध्याताभिरिति भावः।

तथा तेनैवोङ्कारेण आयतनेन आलम्बनेन प्रतीकेन वा विद्वान् ब्रह्माभिन्नोङ्काराभिध्यायी तं लोकं प्राप्नोति यद् ब्रह्म शान्तं निरुपद्रवम् अजरं जरारहितमविक्रियम् अमृतममरणधर्मम् अभयमद्वैतं सर्वभयविवर्जितम्। द्वैतवर्जितम्, द्वितीयाद्‌द्वै भयं भवतीति श्रुतेः। परं ब्रह्म शुद्धं निर्विशेषं सच्चिदानन्दरूपम्। एवमत्र प्रबन्धे उपनिषद्व्याख्यानेन संक्षेपत ओङ्कारोपासना समस्ता व्यस्ता तत्फलञ्च वर्णितम्। ब्रह्मप्राप्त्युपायश्च प्रणव इत्यपि प्रतिपादितम्।

**ओङ्कारस्य माङ्गलिकत्वम्**

ओङ्कारस्य ब्रह्मरूपत्वादेव परममङ्गलत्वात् शुभे कर्मणि यज्ञदानतपः-क्रियासु गायत्र्यादिसर्वमन्त्रादौ च प्रयोगो विज्ञैः क्रियते। यथोक्तं मनुना—

ब्रह्मणः प्रणवं कुर्याद् आदावन्ते च सर्वशः।
क्षरत्यनाकृतः पूर्वमन्ते चैव विशीर्यते।।

अत एव ब्रह्मणो वेदस्यादावन्ते च पाठादौ प्रणव उच्चार्यः। एवं वैदिकेषु तान्त्रिकेषु स्मार्तपौराणिकादिषु च सर्वेषु मन्त्रेषु आदौ अन्ते चोङ्कारः प्रयुज्यमानो दृश्यते, अन्यथा तत्र मन्त्रत्वमेव न सम्पद्येत। यथा सर्वत्र सतोऽनुवृत्तिर्दृश्यते। एवं सद्रूपभगवदभिन्नोङ्कारस्यापि सर्वमन्त्रत्व-तत्सामर्थ्य-तत्फलादि-साधकस्य प्रयोगो दृश्यते। भूर्भुवः स्व इति महाव्याहृतिष्वपि आदौ ओङ्कारः प्रयोज्यः। कश्चिदपि मनुष्यः ओमित्युच्चारयन् देहं त्यजति चेत्, स ब्रह्मलोकं गच्छत्येवेति गीता वदति—

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्।। (गी.)

ओङ्कारस्य महत्त्वमतिरोहितं विदुषामिति तद्विषये विशेषव्याख्यानं नापेक्षते। किञ्च तान्त्रिकाणां स्मार्तानां पौराणिकानां दार्शनिकानाञ्च जीवजगद्-ब्रह्मस्वरूपे परस्परं विवदमानानामद्वैतिनां द्वैतिनां विशिष्टाद्वैतिनां द्वैताद्वैतिनां शुद्धाद्वैतिनां शाक्तानां शैवानां वा स्वस्वसिद्धान्ते वैपरीत्यं विरोधश्च दृश्यते। परमोङ्कारस्वरूपे तन्महत्त्वे तज्जपानुध्यानसङ्कीर्तनादौ तस्य परमात्मप्राप्त्युपायत्वे कस्यचिदपि विमतिर्विवादो वा नास्ति। इयमोङ्कारविद्या सर्ववादाविरोधिन्यस्तीति वक्तुं शक्यते। महाकविः कालिदासोऽपि रघुवंशमहाकाव्ये मनुमोङ्कारेणो-पमिनोति—

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव।। (रघु.)

छन्दसां वेदानामादिः प्रणवः, ब्रह्मणः सर्वप्रथमं प्रादुर्भूतत्वात्। तारकमन्त्र ओङ्कारः। 'महामन्त्र जेहिं जपत महेसू। काशी मुकुति हेतु उपदेसू'।। एतेन पद्यखण्डेन गोस्वामितुलसीदासेन तारकमन्त्रो रामेति प्रयुक्तः, विज्ञायते च सर्वैः। तदप्यविरुद्धम्, ओङ्काररामनामयोरभेदात्। रामशब्दाद् यथेष्टपरिवर्तनाद् ओङ्कारशब्दो निष्पद्यते। ओङ्कारशब्दाद्वा रामशब्दो यथेष्टपरिवर्तनात् निष्पद्यते। न चोभयोः कश्चिद्भेदः प्रतिभाति। अत एवोक्तं भगवता शङ्करेण—

राम रामेति रामेति रमे रामे मनोरमे।
सहस्रनामतत्तुल्यं रामनाम वरानने।।

अथवा प्रणवस्य पर्याय एव रामनाम। रामनामापि सर्वनामसु श्रेष्ठं मङ्गलरूपं परात्परब्रह्मवाचीति युक्तम्।

**ओङ्कार एव सर्वप्रभवविलयस्थानम्**

ओङ्कारो लिपिरूपो वर्णात्मकः, अर्थात्मकश्च। वाचकस्योङ्कारस्य वाच्येन परात्परब्रह्मणाऽभेदात् सर्वजगदुत्पत्तिस्थितिलयहेतुत्वं सिद्धमेव। एकस्मादेवोङ्काररूपात् परब्रह्मणो हिरण्यगर्भादिरुत्पत्तिर्जाता। तत्रैव च स्थूलसूक्ष्माणां कार्याणां कारणे परमेश्वरे ओङ्कारात्मके विलयः। तुरीयात्मतत्त्वसाक्षात्कारेण च कारणस्याप्यव्यक्ताख्यस्याज्ञानस्य लय इति तुरीयमात्रमवशिष्यते। एतत् प्रदर्शितं पादमात्राव्याख्याने।

'ॐ' इति या लिपिः, यया ओङ्कारोऽभिव्यज्यते, तत एव देवनागरीप्रभृतीनां लिपीनामप्युत्पत्तिर्यथेष्टपरिवर्तनेनेति वक्तुमुपपादयितुं शक्यते।

वर्णात्मकस्य समस्तस्य वाङ्मयस्य वेदादिराशेस्तस्मादोङ्कारादेव प्रभवस्तस्मिँश्च लय इत्यप्युपपादयितुं शक्यते। तथा हि—वर्णाः प्रथमं तेभ्यः पदानि तेभ्यो वाक्यमिति। वर्णपदवाक्यात्मकः समस्तः शब्दराशिः ध्वन्यात्मकश्च, तथा हि स्वराणामकारादीनां व्यञ्जनानाञ्च कादीनां समेषां विलयः प्रणव एव। यतो विलयोऽतः प्रादुर्भावोऽपि तस्मादेव। एकेन विदुषा लब्धप्रतिष्ठेन श्रीमता हरिहरदत्तशर्मणा ओङ्कारसर्वस्वमिति ओङ्कारव्याख्यानरूपं सूत्रात्मकं पुस्तकं विरचितम्। तत्रोपरि तद्वंशजेन वार्त्तिकं भाष्यं हिन्दीभाषायां व्याख्यानं च कृतम्। स च ग्रन्थः ओङ्कारसर्वस्वनामा पञ्चमजार्जशासनकाले एकोनसप्तत्युत्तरैकोनविंशतिशततमे (१९६९) वैक्रमाब्दे प्रकाशितो वाराणस्यामेव।

तत्र च विदुषा सूत्रैः प्रणवस्य समुचितं यथाशास्त्रं व्याख्यानं कृतम्। तत्र देवलिपीनामोङ्कारलिप्यां विलयस्ततत एव प्रभवश्चोक्तः। ओङ्कारलिप्यां रेखांशैर्यथेष्टपरिवर्त्तितैः अ-आ-इ-ई-प्रभृतीनां लिपीनां विकासो जातः। तथा ओङ्कारवाच्यार्थानाम् उत्पत्तिस्थितिप्रलयाः ओङ्कार एवेति प्रतिपादितम्। एतच्च दर्शितं यथाशास्त्रमस्माभिः। वर्णानामपि अकारादीनां प्रणव एव लयः प्रादुर्भावश्चोक्तः। कथम्? यथा तथा प्रदर्श्यते।

अ आ इ ई उ ऊ इत्येवं क्रमेण वर्णाः पठ्यन्ते। तत्र पूर्व-पूर्व-वर्णा उत्तरोत्तरस्मिन् वर्णे विलीयमाना भवन्ति। अन्ते ओङ्कारमात्रमवशिष्यते।

अ + आ = आ। आ + इ = ए। ए + ई = ए। एकारस्य अयादेशे यलोपे सन्धिरार्षः।

ए + उ = ओ, एकारस्य अयादेशे यलोपे गुणसन्धिः छान्दसः।

ओ + ऊ = ओ, ओकारस्य अवादेशे वलोपे सन्धिरार्षः।

ओ + ऋ = अर्, ओकारस्यावादेशे वलोपे गुणसन्धिः।

अर् + ॠ = अर्, ऋकारस्य रेफघटितत्वाद् रेफादिमाश्रित्य 'रो रि' इति रेफलोपे आर्षत्वाद् गुणः रपरश्च।

अर् + ऌ = अल्, ऌकारस्य लघटितत्वात् लादि मत्वा, रलयोश्चाभेदं यथाप्रसिद्धमाश्रित्य रो रीति रेफलोपे गुणे लपरः।

अल् + ॡ = अल्, अत्रापि तथैव।

अल् + ए = ऐ, रोर्यत्वं विहितं छान्दसत्वात्, रकारस्यापि यत्वं रलयोरभेदात् लकारस्यापि यत्वम्। 'भोभगो.' इति लोपे, सन्धिरार्षः।

ऐ + ऐ = ऐ, आयादेशे यलोपे वृद्धिः छान्दसत्वात्।

ऐ + ओ = औ, आयादेशे यलोपे वृद्धिः।

औ + औ = औ, आवादेशे वलोपे वृद्धिः।

औ + ओम् = ओम्, औकारे पूर्वेषां वर्णानां विलये जाते औकारस्य च ओङ्कारे विलयः। औकारस्य आवादेशे वलोपे ओमाङोश्चेति पररूपे ओमिति।

व्यञ्जनानां लोपः—ओम् + क् = ओम्—'संयोगान्तस्य लोपः' इति क्लोपे। एवम् ओम् + ख् = ओम्, ओम् + ग् = ओम्, ओम् + घ् =

ओम्, ओम् + ङ् = ओम्। एवमोङ्कारोत्तरं प्रयुज्यमानानां व्यञ्जनानां लोपः। ननु कथं यवरलवर्णानां लोपः, 'यणः प्रतिषेधो वाच्यः' इति वार्तिकनिषेधात्। तथा च ओम् + य्, ओम् + र् इत्यादौ लोपो न स्यात्। 'यणः प्रतिषेधो वाच्यः' इति प्रत्याख्यानेऽपि झलो लोपविधानात्, झलि तेषामभावादिति चेत्, न, 'यणः प्रतिषेधो वाच्यः' इति वार्त्तिकेण तद्भावितानामिकारादीनां स्थाने जातानामेव यणां प्रतिषेधः, न तु अतद्भावितानां स्वस्वसिद्धानामिति कल्पनात्। अथवा छान्दसत्वादेव यणोऽपि लोपः।

एवं ओम् + य्, ओम् + व्, ओम् + र्, ओम् + ल् = ओमिति। अयोगवाहानामनुस्वारविसर्गजिह्वामूलीयोपध्मानीयानां च शर्षु पाठात् शर्त्वेनैव संयोगान्तलोपः, छान्दसत्वाद्वा लोपो भविष्यतीति सर्वेषां वर्णानामोङ्कारे प्रवेशः, तत एव प्रादुर्भावः। इमौ प्रभवप्रलयौ सर्गादौ सर्गान्ते च भगवदिच्छयैव नान्यथा। अत एवोक्तम्—'वागेव विश्वा भुवनानि जज्ञे'। वाग् ओङ्कारः, तस्मादेव सङ्केतरूपाणां लिपीनां वर्णपदवाक्यरूपाणां वाचकानां शब्दानां नादानाञ्च विविधानामर्थानां च सूक्ष्मस्थूलानां प्रादुर्भावो विलयश्चेति। ओङ्कारेणैवायतनेन ब्रह्म परात्परमधिगन्तुं शक्यते। प्रणवः शिवो नादलिङ्गरूप उच्यते। मुमुक्षुभिर्नादरूपोऽनाहतः शिवः प्रणव उपास्यते। शतशो नमस्कृत्य चोङ्कारं परात्परब्रह्मरूपं वर्णनातीतमाहात्म्यं विरम्यत इति शम्।



# न्यायमाश्रित्य कारकस्वरूपविमर्शः

**डॉ. हरेरामत्रिपाठी**
उपाचार्यः, सर्वदर्शनविभागे
श्रीलाल-बहादुर-शास्त्रि-राष्ट्रिय-संस्कृत-विद्यापीठम्
कुतुबसांस्थानिकक्षेत्र, नव-देहली



व्याकरणशास्त्रे ये प्रत्ययाः भवन्ति। तेषां विभागः चतुर्विधः प्रतिपादितो जगदीशेन—

विभक्तिश्चैव धात्वंशस्तद्धितं कृदिति क्रमात्।
चतुर्धा प्रत्ययः प्रोक्तः कादिभिः पञ्चधाऽथवा[1]॥

तत्र संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः सा विभक्तिरिति सा च सुप्तिङ् चेति भेदाद् द्विविधा भवति। विभक्तेस्स्वरूपं प्रतिपादयन्नाह जगदीशभट्टाचार्यः—

प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने।
समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते[2]॥

यः शब्द स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः सा सुबादि विभक्तिरित्युच्यते। यद्वा प्रत्ययार्थधर्मिकप्रकृत्यर्थविधेयकान्वय-बोधसमर्थः शब्दो विभक्तिरिति। तत्र सुपः कमिति जिज्ञासायामुच्यते—

प्रकृत्यर्थे स्वार्थसङ्ख्यान्वयधीहेतवः सुपः।
प्रथमादिप्रभेदेन ताश्च सप्तविधा मताः[3]॥

प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते। ताश्च प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी चेति भेदात् सप्तविधा भवन्ति।

---

१. शब्दशक्तिप्रकाशिका कारिका ६०, पृ. २८३।
२. तदेव ६२, पृ. २८४-२८५; ३. तदेव ६३, पृ. २८६।

तत्र धात्वर्थावच्छिन्नतिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तन्त्रं तादृशी सुबेषु प्रथमा[1]। अत्र कृष्णकान्तविद्यावागीशेनोच्यते—यादृशानुपूर्व्यवच्छिन्ननामोपस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्नतिङर्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वमिति[2]। द्वितीयादीनां विभक्तीनां सङ्क्षेपेण स्वरूपं निरूपयन्नाह जगदीशः—

धातुभेदानुपादाय तदर्थे कर्मतादिकान्।
बोधयन्त्यो द्वितीयाद्या निर्वक्तव्या विभक्तयः[3]॥

तिबन्तपचधातूपस्थाप्यपाकधर्मिककर्मत्वानुभवानुकूलसुप्सजातीयत्वं द्वितीयाविभक्तेर्लक्षणमिति। अर्थात् यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तपचधातूपस्थाप्यार्थधर्मिककर्मत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्त्वे सति विभक्तित्वं द्वितीयेति[4]। पच्यर्थधर्मिककरणत्वान्वयबोधानुकूलसुप्सजातीयत्वं तृतीयात्वम्[5]। यद्वा यादृशधर्मावच्छिन्नप्रकारकनिश्चयत्वं पच्यर्थधर्मिककरणत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशधर्मवत्त्वं तृतीयाविभक्तेर्लक्षणम्। ददात्यर्थदानधर्मिकसम्प्रदानत्वानुभावकसुप्सजातीयत्वं चतुर्थीत्वम्[6]। अर्थात् दाधातुविशेषोपस्थाप्यदानधर्मिकसम्प्रदानत्वप्रकारकान्वयबोधजनकतावच्छेदकं यादृशधर्मावच्छिन्ननिश्चयत्वं तादृशधर्मवद्विभक्तित्वमिति चतुर्थी विभक्तेर्लक्षणमिति।

अत्र गोकुलनाथोपाध्यायैरुच्यते—

ङेभ्याम्भ्यस्चतुर्थी सा सम्प्रदानत्ववाचिका।
सम्प्रदानन्तु दानस्य क्रियाया वा फलोपयुक्[7]॥

पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकविभागबोधानुकूलसुप्सजातीयत्वं पञ्चमीत्वमिति[8]। कृष्णभट्टास्तु यादृशानुपूर्वीप्रकारकनिश्चयत्वं पतनत्वावच्छिन्नधर्मिकविभागप्रकारकान्वयबोधजनकतावच्छेदकविभक्तित्वे सति तादृशानु-

---

१. शब्दशक्तिप्रकाशिका, पृ. २८८; २. कृष्णकान्तीटीका, पृ. २८८।
३. शब्दशक्तिप्रकाशिका कारिका ६६; ४. कृष्णकान्तीटीका, पृ. २८९।
५. शब्दशक्तिप्रकाशिका, पृ. २८९; ६. शब्दशक्तिप्रकाशिका, पृ. २९०।
७. पदवाक्यरत्नाकरः गूढार्थदीपिकासहितः, पृ. ५८०।
८. शब्दशक्तिप्रकाशिका, पृ. २९१।

पूर्वीमच्छब्दत्वं पञ्चमीत्वमिति। तिबन्तदाधात्वर्थधर्मिकस्वार्थान्वयबोधस्वरूपायोग्यत्वे सति प्रथमान्यसुप्त्वं षष्ठीत्वमिति। यद्वा यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तादिधात्वर्थधर्मिकस्वार्थप्रकारकान्वयबोधजनकतावच्छेदकं प्रथमान्यत्वे सति तादृशानुपूर्वीमत्सुप्त्वं षष्ठीविभक्तेर्लक्षणम्[१]। यद्वा हिनस्त्यर्थहिंसा धर्मिकस्वार्थकर्मत्वानुभावकसुप्सजातीयत्वं षष्ठीत्वम्। सम्बन्धसामान्ये स्वत्वे वा शक्ता सुप् षष्ठी। जगदीशभट्टाचार्येण सप्तमीविभक्तेर्लक्षणद्वयमुक्तम्—

१. [२]पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकस्वार्थाधेयत्वबोधानुकूलसुप्सजातीयत्वं सप्तमीत्वम्। अर्थात् यादृशानुपूर्वीप्रकारकनिश्चयत्वं रूपादिपरावृत्तिफलजनकतेजःसंयोगावच्छिन्नक्रियात्वावच्छिन्नविशेष्यकस्वार्थाधेयत्वप्रकारकान्वयबोधजनकतावच्छेदकं सुप्त्वे सति तादृशानुपूर्वीमत्त्वं सप्तमीत्वम्[३]।

२. अधिकरणतायामाधेयत्वे वा शक्ता सुप् सप्तमी। चैत्रधर्मिकस्वार्थाधिकरणत्वान्वयबोधकसुप्समानानुपूर्वीकत्वं वा सप्तमीत्वमिति अपि केचिद् वदन्ति।

सुपो विभागो द्विविधोऽपि भवति। शक्त्या कारकस्य बोधिका तदन्यस्य च बोधिका सुपिति। अत एव जगदीशभट्टाचार्य आह—

कारकार्थेतरार्था च सुप् द्विधा च विभज्यते।
धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्[४]।।

यद्धातूपस्थाप्य यादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः स तद्धातूपस्थाप्य तादृशक्रियायां कारकमिति जगदीशभट्टाचार्यः। षष्ठ्यर्थस्तु सम्बन्धो न धात्वर्थे प्रकारीभूय भासते अतः सम्बन्धो न कारकमिति। अत एव—

क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम्।
कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते।।

---

१. शब्दशक्तिप्रकाशिका, पृ. २९२; २. तदेव, पृ. २९२।
३. कृष्णकान्तीटीका, पृ. २९२।
४. शब्दशक्तिप्रकाशिका, कारिका ६७, पृ. २९४।

क्रियानिमित्तत्वं कारकत्वमिति केचित्। तत्र चैत्रस्य तण्डुलं पचति इत्यत्र सम्बन्धिनि चैत्रादौ अतिव्याप्तेः, अनुमतिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वात्, किन्तु क्रियान्वितविभक्त्यर्थान्वितत्वं कारकत्वमिति। अस्ति च कर्तृकर्मादेः क्रियान्विततिङ्सुब्विभक्त्यर्थान्वयः न तूदाहृते सम्बन्धिनि। षष्ठ्यर्थसम्बन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वादिति जयरामभट्टाचार्यः। यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थे कारकतया व्यपदिश्यत इत्यपि जगदीशभट्टाचार्याः वदन्तीति।

भवानन्दविरचिते कारकचक्रे कारकस्य लक्षणत्रयमुपलभ्यते—

१. क्रियानिमित्तत्वं कारकत्वम्।

२. विभक्त्यद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम्।

३. कर्तृत्वकर्मत्वादिषट्कान्यतमद्वाराक्रियान्वयित्वं कारकत्वमिति। तत्र प्रथमः क्रियानिमित्तत्वं कारकत्वमिति लक्षणं नैयायिकेनोद्योतकरेण कलापव्याकरणस्य वृत्तिकारेण दुर्गसिंहेन, वाचस्पतिमिश्रेण, शृङ्गारप्रकाशस्य प्रणेत्रा भोजेन च स्वीकृतम्। तेषां वाक्यानि इत्थं सन्ति।

१. महर्षिणोद्योतकरेणोक्तं न्यायवार्तिके—'सामान्यञ्च कारकाणां क्रियानिमित्तत्वं'[1]।

२. दुर्गसिंहः कलापव्याकरणस्य वृत्तिटीकायाम्—'क्रियानिमित्तं कारकं लोकतः सिद्धम्'[2]।

३. वाचस्पतिमिश्रः न्यायवार्तिकतात्पर्यटीकायाम्—'क्रियानिमित्तस्य च कारकत्वात्'[3]।

४. भोजराजः शृङ्गारप्रकाशे—'क्रियानिमित्तं कारकम्'[4]।

---

१. न्यायवार्तिक, अ. २, आह्निक १, सूत्र १६, पृ. १९६।

२. कलापव्याकरणस्य वृत्तिटीकायां २.४.१५, पृ. १६।

३. न्यायवार्तिकतात्पर्यटीका २.२.६२, पृ. ६६४, कलकत्ता प्रकाशन।

४. शृङ्गारप्रकाश, द्वितीय प्रकाश, पृ. ४२।

क्रियानिमित्तत्वमित्यत्र क्रियापदार्थः धातुजन्योऽर्थः क्रियेति। धात्वर्थविषये वैयाकरणेषु मतद्वयं वर्तत इति। फलावच्छिन्नव्यापारे एव धातोर्शक्तिरित्यखण्डशक्तिवादिनां मतमिति। सखण्डशक्तिवादिनां नये तु धातोः फले व्यापारे च पृथग् पृथग् शक्तिरिति। अखण्डशक्तिवादिनां नये तु कर्तृवाच्यप्रयोगस्थले फलावच्छिन्नव्यापारे धातोरेकैव शक्तिर्भवतीति। इदं मतं नागेशः स्वीकरोति। फलावच्छिन्नव्यापारे धातोर्शक्तिरिति ये स्वीकुर्वन्ति। तेषां नये ग्रामं गच्छति इत्यत्र गम्धात्वर्थः संयोगावच्छिन्नव्यापारः (संयोगजनको व्यापारः) स च ग्रामे नास्ति। अतस्तत्र कारकलक्षणस्याव्याप्तिर्न दर्शयितुं शक्यत इति। परन्तु गम्धात्वर्थतावच्छेदकस्योत्तरदेशसंयोगस्य सिद्धौ ग्रामः कारणं भवत्येव। अतः प्रकृतकारकलक्षणस्य ग्रामे समन्वयो भवतीति।

धात्वर्थः फलं व्यापारश्च पृथग् पृथगिति अर्थाद् धातोर्शक्तिः फले व्यापारे चेति। अस्य मतस्योपस्थापनं कुर्वन्नाह नागेशभट्टः। 'फलव्यापारयोः पृथक् शक्तिः'[१]। अत्र श्रीमद्दुर्बलाचार्यैरुच्यते—'फलावच्छिन्नव्यापारस्य धात्वर्थत्वे विशेष्यविशेषणभावे विनिगमनाविरहाद् अवच्छेदकगौरवमेक-देशान्वयापत्तिश्च'[२]। भट्टोजीदीक्षित इदं मतमेव स्वीकरोति। अस्मिन् मते गम्धात्वर्थं उत्तरदेशसंयोगः पादप्रक्षेपादिस्वरूपा क्रिया च। 'ग्रामं गच्छतीत्यत्र ग्रामः संयोगस्वरूपस्य धात्वर्थस्य सिद्धौ कारणं वर्तत इत्यस्माद्धेतोः कारकलक्षणस्य सङ्गतिर्भवति। प्रकृतकारकलक्षणस्य तात्पर्यमिदं ज्ञातव्यं यत् साक्षाद् वा परम्परया सम्बन्धेन क्रियायाः निष्पत्तौ यत् कारणं भवति तदेव कारकमिति।

अत एव कारकचक्रस्य माधवीटीकायामुक्तम्—'क्रियाकारणत्वं साक्षात्परम्परासाधारणप्रयोजकत्वमेव'[३] इति। तथा च 'ब्राह्मणाय गां ददाति' इत्यत्र 'ब्राह्मणः' सम्प्रदानकारकमिति। दानदाता यदा पृच्छति 'तुभ्यं गां ददानि' तदा ब्राह्मणः 'ददस्व'[४] इत्युक्त्वा स्वीकृतिं ददाति। तदनन्तरं दानक्रियां प्रति

---

१. वैयाकरणासिद्धान्तलघुमञ्जूषा, पृ. ५४०।

२. वैयाकरणसिद्धान्तलघुमञ्जूषा, कुञ्जिका टीका, पृ. ५४१।

३. कारकचक्रं, माधवी टीका, पृ. २।

४. तुभ्यं ददानीत्युक्ते ब्राह्मणो यदि ददस्वेति ब्रूयात् तेन ब्राह्मणस्य इच्छामनुमाय दाने अनिष्टसाधनताज्ञाननिवृत्त्या इष्टसाधनताज्ञानाद् दाननिष्पत्तिरिति अनुमतिप्रकाशनद्वारा ब्राह्मणस्य दानप्रयोजकत्वमिति माधवीटीका, कारकचक्रस्य, पृ. २।

कारणं स भवति। दानव्यापारस्य स साक्षात्कारणं नास्ति अपि तु परम्परया कारणमिति। अनुमतिं प्रदायैव दानव्यापारसिद्धौ कारणत्वमिति। एवञ्च परम्परया सम्बन्धेन धात्वर्थव्यापारं प्रति कारणत्वात्तस्यैव सम्प्रदानसंज्ञा भवतीति।

वृक्षात् पर्णं पतति इत्यत्र वृक्षस्यापादानकारकत्वमिति। पर्णे या पतनक्रिया भवति। तस्याः वृक्षपर्णयोः संयोगम् अवरुणद्धि। तस्य संयोगस्य नाशं विभागक्रिया करोति।ततः पर्णस्य पतनं भवति। तथा च पतनक्रियायाः निष्पत्तौ पर्णः साक्षात्सम्बन्धेन कारणं भवति। परन्तु वृक्षस्य पतन-प्रतिबन्धकसंयोगनाशकविभागद्वारा पतनक्रियानिमित्तत्वमिति। यतो हि वृक्षे पतनप्रतिबन्धकसंयोगनाशकविभागानुकूलाक्रिया यावत् न भवति तावत् पर्णस्य पतनक्रियायाः निष्पत्तिर्न भवति। तथा च प्रकृतकारकलक्षणस्य वृक्षे सत्त्वात् भवति लक्षणसमन्वयः।

भवानन्दतर्कवागीशनये क्रियानिमितत्त्वमिति[१] लक्षणं न समीचीनमिति। यतो हि क्रियायाः सिद्धौ परम्परासम्बन्धेन यत् कारणं भवति तत् कारकमिति रीत्या सम्बन्धिनि कारकत्वस्य प्रसक्त्यापत्तिः। यथा 'देवदत्तः चैत्रस्य तण्डुलं पचति' इत्यत्र पाकक्रियायाः निष्पत्तौ देवदत्तः तण्डुलश्चैव साक्षात्सम्बन्धेन कारणं भवति। देवदत्तस्य पाकक्रियायै अग्नेः प्रज्वलनं स्थाल्यां जलस्य तण्डुलस्य च निक्षेपादिव्यापारादयः, तण्डुले विक्लितिव्यापारश्च भवन्ति। चैत्रः क्षेत्रे कर्षणादिकार्यं सम्पाद्य तण्डुलान् उत्पादयति। स च पाकं न करोति। तण्डुलान् उत्पाद्य पाकाय स यज्ञदत्तं ददाति। सा च परम्परासम्बन्धेन पाकं प्रति कारणं भवत्येव। अतः सम्प्रदानस्यापादानस्येव च परम्परासम्बन्धेन पाकं प्रति चैत्रस्य निमित्तत्त्वात्तत्रातिव्याप्तिर्दुवारैव। वैयाकरणास्तु 'सम्बन्धिनि कारकत्वं नाभ्युपगच्छन्ति। यतो हि सम्बन्धिनः क्रियया सह नान्वयोऽपि तु नामार्थेन सह अन्वयो भवति। अतः उक्तकारकलक्षणस्य षष्ठ्यर्थस्य सम्बन्धस्य प्रतिपादिका या षष्ठीविभक्तिर्तत्रैवातिव्याप्तिर्दुवारैवेति'[२]। अत एव नैयायिको जयराम आह—

---

१. क्रियनिमित्तत्वं कारकत्वमिति न सामान्यलक्षणम् का.च., पृ. १।

२. सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रिया-निमित्तत्वेन सम्बन्धिनि चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रादावतिव्याप्तेः। कारकचक्रम्, पृ. २।

'कारकत्वं नाम न क्रियानिमित्तत्वम्[1]। चैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तेः'। एवं जयकृष्णतर्कालङ्कारोऽपि वदति, 'क्रियानिमित्तत्वं कारकत्वमिति वैयाकरणाः[2]। तत्र मैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि मैत्रे कारकत्वापत्तिः'। यथा भवानन्दतर्कवागीशः उक्तकारकलक्षणस्य खण्डनं करोति तथैव नागेशः मीमांसकः [3]गागाभट्टश्चापि निराकुरुतः तस्य कारकलक्षणस्य।

वस्तुतः भवानन्दतर्कवागीशनये तु विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्व[4]मिति। उक्तकारकलक्षणस्य तात्पर्यन्तु यः नामार्थो विभक्त्यर्थद्वारा क्रियायां साक्षात्परम्परया वान्वितो भवति तत्कारकमिति। लक्षणे विभक्त्यर्थस्याभिप्रायस्तु सुब्विभक्तेरर्थः वा तिङ्विभक्तेरर्थः। कर्तृवाच्यस्थले सुप्विभक्तिप्रथमार्थेः आश्रयत्वम् तिङ्विभक्त्यर्थः कृतिश्च उक्तविभक्त्यर्थयोः माध्यमेन यः क्रियायामन्वितो भवति तदेव कारकत्वमिति। यथा चैत्रः पचतीत्यत्र चैत्रपदोत्तरं यत् सुप् (सु) विभक्तिर्तस्यार्थ एकत्वम्, पच्पदोत्तरतिप्रत्ययार्थः कृतिः उक्तयोः विभक्त्यर्थयोः द्वारा चैत्रस्य पाकक्रियायामन्वयो भवतीति। अत एव चैत्रे प्रकृतकारणलक्षणस्य समन्वयो भवतीति। कर्मवाच्यस्थले 'चैत्रेण तण्डुलः पच्यते' इत्यत्र चैत्रपदोत्तरतृतीयाविभक्त्यर्थः कृतिः। विभक्त्यर्थकृतिद्वारा पाकक्रियायां चैत्रस्यान्वयात् चैत्रे कारकलक्षणस्य समन्वयो भवति। अत्र शाब्दबोधस्याकारस्तु चैत्रनिष्ठकृतिनिरूपकपाकजन्यवि[5]क्लित्याश्रयः वर्तमानकालिकः एकत्ववान् तण्डुलः इति। चैत्रः तण्डुलं पचतीत्यत्र तण्डुलस्य पाकक्रियायां द्वितीयार्थकर्मत्वद्वारा अन्वयो भवत्येव अत एव तण्डुलस्य कारकत्वमिति। अत्र शाब्दबोधस्तु तण्डुलनिष्ठकर्मत्वनिरूपकविक्लितिजनकपाका[6]नुकूलकृत्याश्रयः वर्तमानकालिकः एकत्वन् चैत्र इति। कुठारेण छिनत्ति इत्यत्र कुठारस्य छेदनक्रियायां

---

१. कारकवादार्थः, पृ. ३; २. सा.म., पृ. ३२-३३।

३. ननु किमिदं कारकत्वम्। न तावत् क्रियाप्रयोजकत्वम्। देवदत्तस्य तण्डुलं पचतीत्यत्रानुमतिद्वारा क्रियाप्रयोजके देवदत्तेऽतिप्रसङ्गात्। भाट्टचिन्तामणिः (तर्कपादा), पृ. ९५।

४. कारकचक्रम्, पृ. ३।

५. कर्मवाच्यस्थले व्यापारजन्यफलं धात्वर्थः।

६. कर्तृवाच्यस्थले फलावच्छिन्नव्यापारः धात्वर्थ इति।

तृतीयाविभक्त्यर्थकरणत्वेनैवान्वयो जायत इति। विप्राय गां ददाति इत्यत्र विप्रस्य (सम्प्रदानस्य) दानक्रियायामन्वयः चतुर्थ्यर्थस्य सम्प्रदानत्वस्य चोद्देश्यत्वस्य परम्परया भवति। तथा च विप्रस्यापि कारकत्वं सम्भवति। वृक्षात् पर्णं पततीत्यत्र वृक्षेऽपि कारकत्वं सम्भवति। अत्र पञ्चम्यर्थस्य अपादानत्वस्य वावधित्वस्य माध्यमेन वृक्षस्य पतनक्रियायामन्वयो भवत्येवेति कारकलक्षणस्य सङ्गतिरिति। गृहे चैत्रः स्थाल्यामोदनं पचतीत्यत्र गृहम् स्थाली च परम्परासम्बन्धेन पाकक्रियायामन्वितो भवति। तत्र सप्तम्यर्थः आधारत्वमिति। चैत्रकर्तुः आधारं गृहमोदनरूपकर्मत्वस्य आधारः स्थाली च वर्तते। अत एवात्र गृहं स्थाली च कारकमिति। भवानन्देन यत्कारकस्य लक्षणं स्वीकृतं तत्तु मुख्यभाक्तकारकयोः सङ्गतं भवति। विभक्त्यर्थद्वारा क्रियायामन्वितत्वे सति धात्वर्थस्य क्रियायां सिद्धौ साक्षात् वा परम्परया यत्कारणं भवति तत्तु मुख्यं कारकमिति। यथा ग्रामं गच्छतीत्यत्र ग्राममुख्यं कारकमिति। यतो हि द्वितीयार्थः कर्मत्वं, तेन माध्यमेन गमने तस्यान्वयो भवति एवञ्च उत्तरदेशसंयोगरूपस्य फलस्य आश्रयत्वेन गमनक्रियासिद्धौ परम्परया कारणञ्च भवति। क्रियायाः सिद्धौ साक्षात् वा परम्परया यत्कारणं न भवति। अपि तु केवलविभक्त्यर्थद्वारा क्रियान्वितो भवति तत्तु गौणकारकमिति। यथा घटं जानाति[१] चैत्रः इत्यत्र घटस्य गौणकारकत्वम्। अत्र ज्ञाधातुः सविषयकस्य वाचको भवति। अत्र द्वितीयार्थः विषयता, सा च घटपदार्थे तिष्ठति। अतः जानाति क्रियापदान्वयः घटपदार्थे द्वितीयार्थविषयतासम्बन्धेन भवति। कर्मत्वविवेचनस्य स्थले भवानन्देनोक्तं—क्रियायाः सिद्धौ साक्षात् वा परम्परया कारणत्वे सति क्रियाजन्यफलाश्रयत्वमेव मुख्य-कर्मकारकत्वमिति। मुख्यगौणकारकयोः लक्षणमनेन रूपेण वक्तुं शक्यते—

'क्रियानिमित्तत्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यकारकत्वम्'[२] अर्थात् क्रियायाः साक्षात् वा परम्परया प्रयोजकत्वे सति सुब्विभक्तिद्वारा वा तिङ्विभक्तिद्वारा क्रियान्वयित्वं मुख्यकारकत्वमिति।

'क्रियाया अनिमित्तत्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं भाक्त-कारकत्वमिति'[३] अर्थात् क्रियायाः साक्षाद् वा परम्परया यः प्रयोजको न

---

१. सविषयकपदार्थाभिधायिजानात्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्मकत्वम्। कारकचक्रम्, पृ. २१-२२।

२. कारकचक्रम्, माधवी टीका, पृ. ३।

३. तदेव, पृ. ३।

भवति परन्तु विभक्त्यर्थद्वारा यस्य क्रियायामन्वयो भवति तत् गौण-कारकमिति।

प्रकृतकारकलक्षणस्य 'चैत्रस्य पचति' इत्यत्र षष्ठ्यन्तपदं 'चैत्रस्य' इत्यस्य पाकक्रियायामन्वयात् तत्रातिव्याप्तिरिति चेन्न भवानन्देनोच्यते 'चैत्रस्य पचति इत्यत्र षष्ठ्यर्थः सम्बन्धित्वं तस्य पाकक्रियायामन्वयो भवति अपि तु षष्ठ्यन्तपदस्य प्रातिपदिकार्थेन सह आकाङ्क्षा भवति'। उक्तकारकलक्षणस्य परिष्कारं कुर्वन्नाह भवानन्दतर्कवागीशः—

कर्तृत्वकर्मत्वादिषट्कान्यतमद्वारा क्रियान्वयित्वं कारकत्वमिति[1] तत्रानुकूलकृतिमत्त्वं कर्तृत्वम्[2]। यथा चैत्रः पचति इत्यत्र पाकानुकूलकृतिमत्त्वस्य चैत्रे सत्त्वात् भवति लक्षणसमन्वयः। तत्तद्धात्वर्थतावच्छेदकफलशालित्वं[3] तत्तद्धात्वर्थकर्मत्वमिति भवानन्देन उक्तम्। रघुनाथशिरोमणिना तु 'धात्वर्थता-वच्छेदकफलशालित्वं कर्मत्वमिति। परसमवेतक्रियाजन्यफलशालित्वमपि[4] कर्मणः लक्षणमिति। कारकान्तरेऽचरितार्थत्वे सति हेतुत्वं करणस्य[5] लक्षणम् यद्वा फलायोगव्यवच्छिन्नकारणत्वं करणत्वमिति। भवानन्दतर्कवागीशनये व्यापारवत्कारणं[6] करणस्य लक्षणमिति। कारकत्वे सति कर्तृव्यापारविषयत्वं करणत्वमित्यपि केचित् वदन्ति। तत्क्रियाकारणीभूतकर्मजन्यफल-भागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति[7]। यद्वा अदृष्टाद्वारकतत्क्रियाकारणीभूत-कर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति। तत्क्रियाकारणीभूतकर्मजन्य-धात्वर्थतावच्छेदकफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमित्यपि केचित् वदन्ति। भवानन्दतर्कवागीशेनापादानस्य लक्षणद्वयं प्रदर्शितं कारकचक्र इति। परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम्[8]। वा विभागावधित्वमपादान-त्वमिति[9]। अधिकरणस्यापि अनेकानि लक्षणानि सन्ति। कर्तृकर्मान्यतरद्वारा

---

१. कारकचक्रम्, पृ. ६।

२. कारकचक्रम्, पृ. १५ अत्राहु 'अनुकूलकृतिमत्त्वं कर्तृत्वम्।

३. कारकचक्रम्, पृ. २०;

४. कारकचक्रम्, पृ. १९।

५. कारकचक्रम्, पृ. २२।

६. व्यापारवत्कारणं करणमिति, तेन हस्तादौ कुठारादौ च नाव्याप्तिः, कारकचक्रम्, पृ. ५७।

७. कारकचक्रम्, पृ. ८२;

८. कारकचक्रम्, पृ. ९३।

९. कारकचक्रम्, पृ. ९३।

क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वम् अधिकरणस्य लक्षणम्[१]। भवानन्दतर्कवागीशनये परम्परया क्रियाश्रयत्वम् अधिकरणस्य लक्षणम्। प्राचीनमते सप्तम्यर्थः अधिकरणत्वं परन्तु नव्यमते सप्तम्यर्थः आधेयत्वमिति। विस्तरभयादत्रैव विरम्यते। विस्तरस्तु तत्तत्कारकनिरूपणावसरे सयुक्तिकं वक्ष्य इत्यलम्।



१. कारकचक्रम्, पृ. ९९।

# ब्रह्माण्डपुराणे धर्मो मोक्षश्च*

**डॉ. चन्द्रकान्ताराय:**
उपाचार्या अध्यक्षश्च, संस्कृतविभागे
आर्यमहिलामहाविद्यालय:
वाराणसी



परमेश्वर एव सृष्टेरादिभूतं बीजम्। सृष्टिकामेनानेन अपां सृष्टिरादौ विहिता ततश्चाप्सु स्वकीयं बीजं विसृष्टम्। तदेव ब्रह्मणो बीजं हिरण्यमयमण्डं सञ्जातं तस्माच्चाण्डात् ब्रह्मा प्रजापतिराविरभूत्। तेन ब्रह्मणा सृष्टमिदं जगत् ब्रह्माण्डसंज्ञयाऽभिधीयते। वायुप्रोक्ते ब्रह्माण्डे पुराणेऽस्मिन् निखिल एव जगत्प्रपञ्चः श्रवणपरम्परया आख्यानादिक्रमेण व्याख्यातोस्ति[1]। यत्तु सत्तत्त्वम् तदेकमेव परं ब्रह्म स्वयंभूरिति। सृष्टिरियं तत एव प्रभवति नानारूपत्वं याति च। परमात्मनः चिन्मात्रं स्थानं मायामयं जगदिदं, महेश्वरश्चासौ 'मायी' इत्येवमाशंसितः। सर्वे देवास्तस्मिन्नेव उपसंहृति व्रजन्ति—

तस्येश्वरस्य चिन्मात्रं स्थानं मायामयं परम्।
मायया कृतमाचष्टे मायी देवो महेश्वरः।।
देवानामुपसंहारस्तत्प्रमाणं कीर्त्यते।
विस्तरेणानुपूर्व्या च ब्रुवतो मे निबोधत[2]।।

---

* 'ज्ञानप्रवाह' द्वारा समायोजितायां पुराणविषयिण्यां सङ्गोष्ठ्यां (२०-२२ मार्च, २००९) पठितः शोधनिबन्धः।

१. श्रवणपरम्परयाऽवाप्तं वेदज्ञानं तु 'श्रुती'त्येवम्, 'अनुश्रव' इत्येवं च नाम्ना प्रख्यातमस्त्येव देवर्षिमुखोच्चारण-श्रवणपरम्परया प्राप्तमिदं ब्रह्माण्डपुराणमपि 'श्रुति' संज्ञां लभते यथा पुराणेऽस्मिन् शिवपुरवर्णननामके द्वितीयेऽध्याये द्रष्टव्यमस्ति—यः पठेत्तपसा युक्तो वायुप्रोक्तामिमां श्रुतिम्।। इति। (ब्रह्माण्डपुराणम्, उत्तरभागः, २.२८८)

२. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२२१-२२२।

भूलोकादूर्ध्वं ब्रह्मलोको ब्रह्मलोकादप्यूर्ध्वं परञ्च तद् भगवतोऽण्डं विद्यते। तत एव स्वर्लोकपर्यन्तं चराचरमयं विश्वं प्रजायते। ऋग्वेदस्य पुरुषसूक्ते[१] वर्णितं परमात्मन एकपादेन विरचितं साशनानशनञ्जगदिदं, त्रिपात्पुरुषस्य प्रपञ्चरहितमत एव, तदुपरिस्थितं निरञ्जनं शुद्धस्वरूपञ्चात्र ब्रह्माण्डे पुराणे एवं समुपबृंहितमस्ति—

ऊर्ध्वं भगवतोऽण्डं तु ब्रह्मलोकात्परं स्मृतम्।
एषोर्ध्वगः प्रचारस्तु गत्यन्तश्च ततः स्मृतः[२]।।

तत्परब्रह्म चिद्रूपं स्पष्टसादिविषयैरसम्पृक्तः धर्माधर्माभ्यां पृथक् कार्यकारणयोश्च परमस्ति। स एव सृष्टिः स्थिति-संहृतिकर्मवशात् सत्त्वरजस्तमोरूपत्वं वृणीते। स एव लोककृत् लोकतत्त्वज्ञः सर्वद्रष्टा सर्वज्ञः। तदतिरिक्तं किमपि तत्त्वं नास्ति विश्वस्मिञ्जगति। इदमेव याथार्थ्यं पुराणस्यास्यारम्भ एवं निगदितमस्ति—

नमो नमः क्षये सृष्टौ स्थितौ सत्त्वमयाय वा।
नमो रजस्तमःसत्त्वत्रिरूपाय स्वयम्भुवे[३]।।

विश्वात्मा परमेश्वर एष सर्वं व्याप्नोति। जगतः स्थितावपि स एव सद्रूपेण सर्वेषु विद्यते। अस्यैव विभूतिः विश्वस्मिञ्जगति नानात्वं व्रजति। अस्य जगदात्मनो नानात्वरूपत्वं उपनिषत्साहित्ये बहुधा वर्णितमस्ति। श्वेताश्वतरोपनिषद् उदाह्रियतेऽत्र—

य एकोऽवर्णो बहुधा शक्तियोगाद्
वर्णानेकान् निहितार्थो दधाति।
वि चैति चान्ते विश्वमादौ स देवः
सनो बुद्ध्या शुभया संयुनक्तु[४]।।

ब्रह्माण्डपुराणे स ईश्वरः परमाणुरूपः प्रोक्तः। अणोरणीयान्महतो महीयानित्येवमस्य वैलक्षण्यं वेदवाङ्मये बहुत्र प्रतिपादितमस्ति। बुद्ध्या तर्केण

---

१. ऋग्वेदः १०.९०.४।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२२४-२२५।
३. ब्रह्माण्डपुराणम्, पूर्वभागः, १.१।
४. श्वेताश्वतरोपनिषद् ४.१।

वा प्रवचनेन शास्त्रज्ञानेन वा एष नैव ज्ञातुं शक्यते। स चेश्वरो भावग्राह्य इत्येवं सङ्केतः प्राप्यते—

अग्राह्यमकृतार्थानामालयं चेश्वरस्य यत्।
ईश्वरः परमाणुत्वाद् भावग्राह्यो मनीषिणाम्[1]॥

स एष परमेश्वरः अन्तो बहिश्च सर्वतः सर्वं व्याप्नोति। ब्रह्माण्डपुराणे प्रकृतिरस्य योनिरभिहिता। परमात्मनः प्रसृता एषा प्रकृतिर्नारायणात्मिका प्रोक्ता। परस्परगुणाश्रयात् सूक्ष्मा अप्येताः प्रकृतयः प्राकाश्यमुपगच्छन्ति—

सूक्ष्माः प्रसवधर्मिण्यस्ततः प्रकृतयः स्मृताः।
येभ्योऽधिकर्ता संजज्ञे क्षेत्रज्ञो ब्रह्मसंज्ञितः[2]॥

ईश्वराद्बीजनिर्भेदः क्षेत्रज्ञो बीजमिष्यते।
योनिं प्रकृतिमाचष्टे सा च नारायणात्मिका[3]॥

सर्गस्य कारणं सदसदात्मकम्[4]। तत एव अण्डमयो गर्भः ततश्च नानात्वमयी सृष्टिरुद्भासिता[5]। ब्रह्मा त्वत्र अविषयः क्षेत्रज्ञ इत्येवमथ अव्यक्तं विषयो वा क्षेत्रमित्यभिहितः। क्षेत्रक्षेत्रज्ञयोः विषयाविषयित्वमत्रैवं विवेचितमस्ति—

यस्मात् क्षेत्रं विजानाति तस्मात् क्षेत्रज्ञ उच्यते।
क्षेत्रं प्रत्ययते यस्मात् क्षेत्रज्ञः शुभ उच्यते॥

क्षेत्रज्ञः स्मर्यते तस्मात् क्षेत्रं तज्ज्ञैर्विभाष्यते।
क्षेत्रं त्वप्रत्ययं दृष्टं क्षेत्रज्ञः प्रत्ययः सदा॥

क्षपणात्कारणाच्चैव क्षतत्राणात्तथैव च।
भोज्यत्वविषयत्वाच्च क्षेत्रं क्षेत्रविदो विदुः[6]॥ इति।

---

१. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२१७।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२२६।
३. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२३१।
४. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२९१।
५. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२३०।
६. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.८७-८९।

महदारभ्य स्थूलविशेषपर्यन्तं तद् विलक्षणं प्राकृतं विकारलक्षणञ्जगत् यत्र अक्षरोऽपि क्षरमेति परन्तु न तु क्षीयते न क्षरति एवमक्षरत्वमस्य प्रकीर्तितं सांख्ये ब्रह्माण्डेऽस्मिन् पुराणे च[1]।

अनेकेषु अनेकधा विभज्यात्मानं स पुरुषः परमेश्वरो लोकव्यवहारं साधयति बहुत्वाच्च शरीरस्य स एक एव बहुधा प्रगीयते। एवं सांख्यवत्पुरुषनानात्वमत्रापि निर्दिष्टमस्ति[2]। अन्यत्राऽस्मिन् पुराणे—

सत्त्वस्थमात्रकं चित्तं यथासत्त्वं प्रदर्शनात्।
तत्त्वानां च यथातत्त्वं दृष्ट्वा वै तत्त्वदर्शनात्।।
सत्त्वक्षेत्रज्ञनानात्वमेतन्नानार्थदर्शनम्[3]।।

इत्येवं तन्नानात्वं प्रकाशितम् एतन्नानात्वदर्शनमेव ज्ञानं ज्ञानाच्च योगाऽवाप्तिर्भणिताऽस्ति। यस्तु तेन नानात्वदर्शनेन बध्यते तस्य बन्धः यस्तु मुच्यते तस्य मोक्षः सम्प्रकीर्तितः।

ब्रह्माण्डपुराणे सृष्टिस्थितिसंहृतिमयस्य लोकस्य एकमेव तत्कारणं परमेश्वरः शिवो रुद्रो वाऽभिहितः। स एव लोकमिमं सृजति पालयति संहरति च। सामानि यजूंषि चैतस्यैव माहात्म्यं प्रकाशयन्ति। 'एकं सद् विप्रा बहुधा वदन्ति' इत्यस्मिन् प्रसिद्धे ऋङ्मन्त्रे उदितं तत्सत्तत्त्वं परमार्थत एकमेव तस्यैतस्य महेश्वरस्य माहात्म्यमत्रैवं वर्णितमस्ति—

लोकान् सप्त इमान्भूयो महाभूतानि पञ्च च।
विष्णुना सह संयुक्तः करोति विकरोति च।।
स रुद्रो यः साममयस्तथैव च यजुर्मयः।
स एष ओतः प्रोतश्च बहिरन्तश्च निश्चयात्।।
एको हि भगवान्नाथः प्रभवश्चान्तकृद् द्विजाः[4]।।

नानारत्नसुवर्णाद्यलङ्करणैर्विभ्राजद् जननमरणभीतियुतानां निर्भयं शरणं शिवपुरमत्र वर्णितम्। नृत्यगीतवाद्यविनोदैरनुरञ्ज्यमानाः शब्द-रूप-

---

१. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.९०,९४।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, २.३००-३०५।
३. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.५३-५४।
४. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२८१-२८३।

रसादिभोगैस्तृप्तिमनुभवन्तः पुण्यकर्माणस्तत्र सुकृतानुरूपं मोदं लभन्ते। एवं स्वर्लोकोऽत्र शिवपुरनाम्ना ख्यातिं प्राप्तः। ये तु मनसा वाचा कर्मणा विशुद्धान्ताः परमात्मनोऽनन्या भक्तिर्यैः समासादिता, ह्रीमन्तः शौर्यशीला निर्लोलुपा जितेन्द्रियाश्च ते भवस्यानुग्रहमवाप्य रुद्रसालोक्यं शाश्वतमव्ययं पदमेतदवाप्नुवन्ति—

ह्रीमन्तस्फूर्जिता दान्ताः शौर्ययुक्ता ह्यलोलुपाः।
कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना।।

अनन्यमनसो भूत्वा प्रपन्ना ये महेश्वरम्।
तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम्[1]।।

तत्रैतस्मिन् शिवलोके जरा-मृत्युभीतिं परित्यज्य श्रीसम्पन्ना विविधाभरणैः शोभनवसनैश्च सज्जिताः स्वच्छन्दगतयः सिद्धा दुष्प्राप्यं कामभोगं सेवमाना मोदमनुभवन्ति। उमापतिः देवाधिदेवो महेश्वरश्चैतेभ्यो मोदं वितरति। ये तु सदाचारिणः करुणा-दयादिभावोपेता व्रतोपवासचारिणः शुद्धान्तःकरणाः छिन्नसंशया योगिनस्ते ज्ञानेन तपसा परया भक्त्या च कर्मबन्धमुक्तिस्वरूपं रुद्रसालोक्यं शाश्वतमव्ययं वा पदमवाप्नुवन्तीति समीरणो मातरिश्वा ऋषीनेवमुपदिशति—

योगं त्वनुयमं दिव्यं प्राप्तं तैश्छिन्नसंशयैः।
प्रपद्य परया भक्त्या ज्ञानयुक्तेन तेजसा।।
तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम्[2]।।

अधिभूताधिदेवाध्यात्मदृशा महद्विभूतिमद् धर्मतत्त्वं ब्रह्माण्डपुराणे पृथक्तया नैव विश्लेषितम्। शुद्धाचारप्रवृत्तिः धर्मशास्त्र-पुराणादीनामार्षानुशासनपुरःसरं स्व-स्ववर्णानुरूपम् आश्रमोचितञ्च कर्मसम्पादनमेवञ्च सत्य-अहिंसा-करुणा-तपःप्रभृतिसाधारणधर्मस्यानुपालनं धर्मत्वेन सविशेषमालोचितमस्ति। शास्त्रोपदिष्टं स्वकर्माचरणमेव परमो धर्मः ब्राह्मणक्षत्रिय-वैश्यवर्णानाम्। वर्णाश्रमाचारसम्पन्नाधर्मनिष्ठाः पुण्यं लभन्ते परमात्मनः शिवस्य परमं पदमनुगच्छन्ति च—

---

१. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२४९-२५०।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२८६-२८७।

ब्राह्मण: क्षत्रियो वापि वैश्यो वा स्वक्रियापर:।
लभते रुद्रलोकं वै कारणं लोककारणम्[१]।।

ये तु ऋषिप्रणीतानि धर्मशास्त्राण्यवमन्यन्ते तत्र शिष्टं वर्णाश्रमधर्मञ्च नैवाचरन्ति तेऽत्र 'शिष्टशास्त्रविरोधका' इत्येवमुक्त्वा निन्दिता:। तेषामेष वर्णविरुद्ध आश्रमविरुद्धो वा आचारो नरकलोके तिर्यग्योनौ वा जननस्य कारणं भवति[२]। वर्णाश्रमधर्मस्य सविध्यनुपालनमस्मिन् पुराणे अत्यन्तमेवाचरणीयमुपदिष्टम्—

वर्णाश्रमाचारयुक्त: शिष्ट: शास्त्राविरोधन:।
वर्णाश्रमाणां धर्मोऽयं देवस्थानेषु कारणम्[३]।।

अस्यैव परमात्मन इङ्गितेन लोकेऽस्मिन् धर्माचार: सम्पाद्यते सद्भिरथ च मोक्षस्यापि पन्था: कर्मबन्धनात् अस्यैवानुकम्पया दृष्टिपथमायाति। यश्च शूद्रोऽपि सत् शिवभक्तो जितेन्द्रियोऽमद्यपश्च, सम्प्लवपर्यन्तं य: सर्वाङ्गसम्पन्न: सर्वथा स्थायित्वं व्रजति, सोऽसौ सर्वदैव गणपतिस्थानं सेवते—

अमद्यपश्च य: शूद्रो भवभक्तो जितेन्द्रिय:।
आभूतसम्प्लवस्थायी अप्रतीघातलक्षण:।।
गाणपत्यं स लभते स्थानं वा सार्वकालिकम्[४]।।

धर्माधर्मौ उभावपि परस्परं गुणमात्रकावभिहितौ। तत्र अहिंस्रं मृदु ऋतञ्चैव धर्मतत्त्वं तद्विपरीतमहिंस्रं क्रूरम् अनृतञ्चाऽधर्मतत्त्वमिति[५]। धर्मस्तु तदैव धर्मो यदा शिवतत्त्वं न जहाति। शिवसान्निध्येन भक्त ईश्वरत्वमैश्वर्यं वा प्राप्नोति भव: शर्व ईशानो महादेव: परमाणुमहेश्वरोऽयं सद्रूपो नीललोहित: सृष्ट्यर्थं सत्त्वरजस्तमोविशिष्टं स्वरूपमाधत्ते। स एष रुद्र: परमाणुमहेश्वर एव योगिनां तापसानाञ्च परमं साध्यम्। स एवाजोऽनादि: सर्वं विश्वमावृत्य प्रकर्षेणाऽतिशेते। प्रादुर्भाव-तिरोभाव-स्थिति-अनुग्रह-विधिरन्यैरनौपम्यञ्चास्यैव वैशिष्ट्यम्।

---

१. ब्रह्माण्डपुराणम्, उत्तरभाग:, २.२८८।
२. ब्रह्माण्डपुराणम्, उत्तरभाग:, ३.४९-५०।
३. ब्रह्माण्डपुराणम्, उत्तरभाग:, ३.७४।
४. ब्रह्माण्डपुराणम्, उत्तरभाग:, २.३१४-३१५।
५. ब्रह्माण्डपुराणम्, उत्तरभाग:, ४.३२।

अपरिमितं तेजःसन्दोहं विभ्रदेष परमेश्वरो गहनं तमोराशिमतिक्रम्य विशदमालोकं वितनुते—

अनुत्पाद्यं परं धाम परमाणु परेशयम्।
अक्षयश्चाप्यनूह्यश्च त्वमूर्तिर्मूर्तिमानसौ।।
प्रादुर्भावस्तिरोभावः स्थितिश्चैवाप्यनुग्रहः।
विधिरन्यैरनौपम्यः परमाणुमहेश्वरः।।
सतेजा एष तमसो यः पुरस्तात्प्रकाशकः[1]।।

कल्पान्ते यदा महाभूतविनाशकाल आयाति विश्ववितानमिदञ्च विनिवृत्तम्भवति, मुक्तो जीवस्तदा निःसम्बन्धो लिङ्गमुक्तश्च सन् अचैतन्योऽपि स्वात्मन्यवस्थानं भजते तस्याञ्चावस्थायामसौ विरूपाख्यया सम्बोध्यते[2]। जीवमोक्षोऽयं त्रिविधः प्रोक्तः। प्रथमस्तावद् ज्ञानेन यो वियोगः सञ्जायते द्वितीयो विषयरागसंक्षयात् सिध्यते तृतीयश्चैष तृष्णाक्षयात्सम्पन्नतां यातीति—

स चापि त्रिविधः प्रोक्तो मोक्षो वै तत्त्वदर्शिभिः।
पूर्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात्।।
तृष्णाक्षयात्तृतीयस्तु व्याख्यातं मोक्षकारणम्[3]।।

मोक्षहेतौ सम्पन्ने लिङ्गशरीराभावाज्जन्तुः कैवल्यपदावाप्तये प्रभवति। कैवल्यं तु निरञ्जनत्वं सर्वथा निर्मलत्वं येन शुद्धः प्रबुद्धोऽसौ पराङ्गतिमधिगच्छति[4]। एवं वेदान्ते यद् अद्वैततत्त्वदर्शनं मोक्षस्य कारणं स्मृतमस्मिन् ब्रह्माण्डे पुराणे तु सत्त्वक्षेत्रज्ञनानात्वज्ञानं नानात्वज्ञानेन मोक्षस्य सिद्धिर्लिङ्गे व्यत्यये च कैवल्यपदावाप्तिर्भणिता। शुद्धो जीवः स्वयमेव मुक्तिं व्रजति, नान्यः कश्चिदेनमग्रेनयनाय प्रवर्तते। स तु निरञ्जनमवाच्यमग्राह्यमप्रतर्क्यं क्षेत्रज्ञं प्राप्नोति—

यद् गत्वा न निवर्तन्ते क्षेत्रज्ञं तु निरञ्जनम्।
अवाच्यं तदनाख्यानादग्राह्यं वादहेतुभिः।।

---

१. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२२७-२२९।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.५६-५७।
३. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.५८-५९।
४. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.५९-६०।

अप्रतर्क्यमचिन्त्यत्वादवार्यत्वाच्च सर्वशः।
नालप्यं वचसा तत्त्वमप्राप्यं मनसा सह।।
क्षेत्रज्ञे निर्गुणे शुद्धे शान्ते क्षीणे निरञ्जने।
व्यपेतसुखदुःखे च निरुद्धे शान्तिमागते।।
निरात्मके पुनस्तस्मिन् वाच्यावाच्यं न विद्यते[1]।।

सृष्ट्यां ब्रह्मणः स्थितिकाले सम्पूर्तिङ्गते प्रत्याहारस्य स्थितिर्भवति तस्मिँश्चाव्यक्तेन सर्वमेव व्यक्तं ग्रसितं जायते। भूततन्मात्रस्य महदादिविकारस्य च संक्षय उपपद्यते। पृथिव्या गन्धात्मको गुणोऽप्सु प्रलीयते; तदा तु धरा सर्वत आपोमयी सम्पद्यते, गन्धतन्मात्रं तु विनश्यति। वेगवतीनामपां रसस्तु ज्योतिःषु आलीयते एवं रसतन्मात्रं विनश्यते तथा चाऽग्निरर्चिभिः सर्वं जगदिदं व्याप्नोति। ज्योतिषो गुणो रूपं वायुनाग्रस्यत एवं रूपतन्मात्रं क्षयति वायुश्चोर्ध्वमधः निर्यक्च सर्वा दिश आन्दोलयति। वायोर्गुणाः स्पर्शश्च आकाशेन ग्रसितो भवति, तदा स्पर्शतन्मात्रं प्रणश्यति रूपरसगन्धस्पर्शरहितं नभोऽनावृत्तममूर्तिमदवशिष्यते सर्वश्च तथा शब्दैरापूरितं सञ्जायते। शब्दतन्मात्रन्तद् भूतादिना ग्रस्यते[2]। भूतादौ अभिमानात्मको भूतादिः तामसः कथितः। बुद्धिर्मनो लिङ्गमित्यत्र एक एव महानक्षरः पर्यायशब्दैर्व्यक्तिमवाप। भूतानि यदा प्रलीयन्ते तदा गुणसाम्यत्वमुपपन्नम्भवति। गुणसाम्यमप्येतत्स्वात्मन्येव लीनतां याति तथा च सर्वभूतानां कारणान्येव प्रणष्टानि भवन्ति[3]।

लोकेऽस्मिन् जन्तूनां राजसी तामसी सात्त्विकी चैव तिस्रो वृत्तयो वर्णिताः। तत्र सत्त्वमूर्ध्वदेशात्मकमुन्नेतुं प्रभवति तमश्चाधोभागात्मकमधःपतनाय कल्पते; एतयोर्मध्ये इहैव लोकेऽस्मिन् प्रवर्तकं रज् इति। पुरुषाश्रयेण तिसृभिर्वृत्तिभिर्गुणा एव प्रवर्तन्ते। तपो ज्ञानं शुभं सत्यमन्ततम् ऊर्ध्वभावोऽधोभावः सुखं दुःखं प्रियमप्रियञ्चैतत्सर्वं गुणमात्रात्मकम्[4]। तत्त्वज्ञैर्मनीषिभिरिदं याथार्थ्यं सम्यगनुभूयते। धर्माधर्मौ च प्रकृतिगुणानां रजस्तमःसत्त्वाख्यानां वलाबलवैषम्येण विहितैः कृत्यैरेव समासाद्येते।

---

१. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.१०२-१०७।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.४-१९।
३. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.२३-२४।
४. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.२५-२६।

श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णः कौन्तेयं सृष्टिप्रपञ्चस्य सूत्रमिदमेव विश्लिष्य कर्मोपदेशं करोति—

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते[१]॥
प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु[२]॥

तमःप्रकर्षाज्जन्तुः जगतो याथार्थ्यं नैव परिचिनोति। तत्त्वदर्शनं विना स त्रिविधैर्बन्धनैराबध्यते। तत् त्रिविधं बन्धनमत्र प्राकृतं तथ्यावैकारिकं दक्षिणा इत्येवमाख्यातमस्ति। एतानि बन्धनान्यज्ञानहेतुकानि अज्ञानञ्चात् ब्रह्माण्डपुराण एवं व्याख्यातम्—अनित्ये नित्यत्वदर्शनं दुःखे सुखाशंसा अस्वे स्वत्वप्रतीतिरशुचौ शुचिविचारणा—एते मनोदोषा ज्ञानदोषाश्च वर्तन्ते। ज्ञानस्य स्थितिरेतद्विपरीतमस्ति। अज्ञानं तमोमूलं तदाश्रितं कर्म च जननमरणहेतुः महद्दुःखजनकञ्च—

अनित्ये नित्यसंज्ञा च दुःखे सुखदर्शनम्।
अस्वे स्वमिति च ज्ञानमशुचौ शुचिनिश्चयः॥
येषामेते मनोदोषा ज्ञानदोषा विपर्ययात्।
रागद्वेषनिवृत्तिश्च तज्ज्ञानं समुदाहृतम्॥
अज्ञानं तमसो मूलं कर्मद्वयफलं रजः।
कर्मजस्तु पुनर्देहो महादुःखं प्रवर्तते[३]॥

विषयेन्द्रियप्रसङ्गात् यानि कर्माण्यनुष्ठीयन्ते तैरेव तृषाया उद्भवः सम्पद्यते। एवं स्वकृतैः तृष्णान्वितैः कर्मफलैरज्ञानोपहितो जीवस्तैलपीडकवत् तत्रैव परिक्रामति[४]। अज्ञानमूलो विषयरागश्चैवं सम्भूत्या बन्धनस्य वा कारणमिति—

इत्येव वैषयो रागः सम्भूत्याः कारणं स्मृतः।
ब्रह्मादौ स्थावरान्ते वै संसारे ह्याधिभौतिके[५]॥

---

१. श्रीमद्भगवद्गीता ३.२८;    २. श्रीमद्भगवद्गीता ३.२९।
३. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.३९-४१।
४. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.४२-४३।
५. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.४८।

तदेतदज्ञानमनर्थानां मूलं शत्रुवदपकारि च। मोक्षावाप्तये ज्ञानस्यात्यन्तिकी आवश्यकता विद्यते। ज्ञानादेव सर्वो विषयासङ्गश्छिद्यते विषयासङ्गपरित्यागाच्च बुद्धिर्विरक्तिं याति वैराग्याच्छुद्धिरवाप्यते शुद्धश्चासौ चरमं पुरुषार्थमवाप्नोति—

तस्मान्मूलमनर्थानामज्ञानमुपदिश्यते।
तं शत्रुमवधार्यैकं ज्ञाने यत्नं समाचरेत्।।
ज्ञानाद्धि त्यज्यते सर्वं त्यागाद् बुद्धिर्विरज्यते।
वैराग्याच्छुध्यते चाऽपि शुद्धः सत्त्वेन मुच्यते[१]।।

ये तु विषयप्रसङ्गरहिता निरिन्द्रिया ज्ञानिनस्तान् पापपुण्यं सुखदुःखं वा नैव स्पृशति[२]। शुद्धबुद्धयो विज्ञानवन्तो व्यपेतकोशा रजोरहिताश्च ते ब्रह्मपदमवाप्नुवन्ति[३]। ब्रह्माण्डपुराणस्यास्य श्रवणस्य श्रावणस्य च फलं मोहनाशो महेन्द्रस्थानेष्वसङ्ख्यवर्षाणि यावत्सुखलाभो ब्रह्मसायुज्यप्राप्तिः सर्वपापोपशमनं पुण्यार्जनं दिवि देवैस्सह मोदवाप्तिश्चेति विविधं प्रख्यातमस्ति[४]। इदं पापघ्नं यशस्यमायुष्यं पुण्यं सर्वार्थसाधकञ्च प्रोक्तम्[५]। नरं धर्माचारसमन्वितं मांनवं विधातुं भारतवर्षीयाणां विद्यानां शास्त्रानुगतायाः संस्कृतेश्चापि या सरणिर्विद्यते तामभ्युदयनिःश्रेयससंधिकां सरणिमुपस्थापयति ब्रह्माण्डपुराणम्। जिज्ञासावोऽत्र ज्ञानं लभन्ते भोगेप्सवो भोगं मुमुक्षवश्च मुक्तिमधिगच्छन्तीति सर्वाभीष्टप्रदमेतत्पुराणं प्रकीर्तितम्।

●

---

१. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.४४-४५।
२. ब्रह्माण्डपुराणम्, उत्तरभागः, ३.२७-२८।
३. ब्रह्माण्डपुराणम्, उत्तरभागः, २.२१४-२१५।
४. ब्रह्माण्डपुराणम्, उत्तरभागः, ४.४६-५७।
५. ब्रह्माण्डपुराणम्, उत्तरभागः, ४.६८-६९।

# श्रीमद्भागवतप्रस्थाने प्रत्यक्षप्रमाणविमर्शः

**प्रो. विन्ध्येश्वरीप्रसादमिश्रो 'विनयः'**
आचार्यः, वाराणसीस्थ-काशीहिन्दूविश्वविद्यालयस्य
संस्कृतविद्याधर्मविज्ञानसङ्काये-वैदिकदर्शनविभागे
मानितनिदेशकः, 'मालवीयभवन'मिति सांस्कृतिकसंस्थाने
समन्वयकश्च, मालवीयभवनस्थ-'योगसाधना-केन्द्रे'



मेघश्यामतनुप्रभां स्थिरतडिद्दीप्त्युज्ज्वलां मञ्जुलां
लीलालास्यलसच्छटां मधुपृषत्सद्वर्षहर्षां पराम्।
शुष्यत्प्रीतिधुनीविवर्धनकरीं चिद्वाटिकोज्जीवनीं
ध्यायामो हृदि सद्घनामृतमयीं राधामुकुन्दद्वयीम्।।१।।

प्रमाणप्रामाण्ये यदनुसरणात्सम्प्रसरतः
प्रमित्सावैविध्यं फलति यदुपाश्रित्य सकलम्।
प्रमेयाकारं यत्स्फुरति बहुधाऽप्यद्वयपदं
नुमस्तच्चैतन्यं सदिति हृदि भान्तं रसघनम्।।२।।

शुकवाङ्माधुरीस्फूर्तं मूर्तं श्रुत्यन्तविग्रहम्।
वन्दामहे द्रुतं दीप्तं श्रीमद्भागवतामृतम्।।३।।

कृष्णद्वैपायनं श्रीमद्बादरायणसञ्ज्ञकम्।
विधातारं रसस्यास्य व्यासदेवमुपास्महे।।४।।

ब्रह्मराताभिधं व्यासात्मजं योगीन्द्रवन्दितम्।
नन्दिताखिलसत्सार्थं नमामो बादरायणिम्।।५।।

येषां पादाब्जपांसूनां स्मरणादपि तत्क्षणम्।
मनो निश्चलतां याति गुरूँस्ताँश्च भजामहे।।६।।

प्रत्यक्षमिति सर्वप्रमाणोपजीव्यत्वान्मुख्यं प्रमाणमिति नग्नान् व्यतिरिच्य प्रायः समेषामप्यास्तिकनास्तिकोभयनयनिपुणानामभिमतिः। चार्वाकोऽपि व्यतिरिक्तान् प्रमाणभेदाननङ्गीकृत्य प्रत्यक्षमेव कक्षीकुर्वन् दृश्यते। 'अक्षमक्षं प्रतीत्य यस्मिन्प्रमितिरुत्पद्यते तत्प्रत्यक्ष'मित्यस्य निर्वचनम्, तत्तु प्रायः प्रायोवादतामेवावलम्बते, सर्वैर्वादिभिरत्र नियततयेन्द्रियार्थसन्निकर्षनियमस्य प्रत्यक्षलक्षणावसरेऽनभ्युपगमादिति[1] नाविदितं तत्तत्त्वविदाम्। 'दृष्ट'मित्यस्यैव नामान्तरं साङ्ख्यकृतान्तेऽपरोक्षमित्यद्वैतवेदान्तिनां नये, 'आत्मसंविदि'ति चांशतः श्रीमद्भागवतप्रस्थानाभिमानवतामस्माकं सिद्धान्त इति न जातु भ्रमितव्यं सुधीभिः।

चार्वाकादनन्तरं सर्वैरपि वादिभिः स्वस्वप्रक्रियामनुसरद्भिरस्य वैशद्येन लक्षणस्वरूपभेदप्रभेदाद्याविष्कृतिः प्रसाधितेति तत्तदाकरग्रन्थैरेवावगन्तव्यम्, विस्तरभयात्प्रकृतेऽनावश्यकत्वान्न क्रमशस्तेषां समेषां लक्षणादीनामनुवादोऽत्र विधीयते; स्वराद्धान्तसमाराधनावसरे तु यथाप्रसङ्गं समालुलोचयिषया तान्यंशतः समादाय निरूपयिष्याम एवेत्यलं बहुभूमिकया, अधुना प्रकृतमनुसरामः।

**श्रीमद्भागवतमहापुराणं वेदान्तस्य स्वतन्त्रं श्रुतिस्मृतितर्कसमन्वयपरं 'रस-प्रस्थानम्'—**

अष्टादशपुराणेष्वन्यतमं श्रीमद्भागवतं भावदृष्ट्या कलिकल्मषरन्धनं ललितकृष्णकथानिबन्धनं भगवत्प्रीतिपरायणानामन्यतमं परमञ्च धनं सद्भक्तिशास्त्रं, भगवतो वेदव्यासापरनामधेयस्य बादरायणाचार्यस्य स्वाविष्कृतवेदान्तसूत्राणां स्वोपज्ञं भाष्यं, दार्शनिकसिद्धान्तदृष्ट्या चोपनिषद्रूपश्रुतिप्रस्थानस्य श्रीमद्भगवद्गीतारूपस्मृतिप्रस्थानस्य ब्रह्मसूत्ररूपतर्कप्रस्थानस्य च मिथः समन्वयपरं वेदान्तदर्शनस्य स्वतन्त्रं प्रथमञ्च रसप्रस्थानमित्यस्माभिः स्वीयानेकसन्दर्भेषु पुराऽप्यभ्यधायि। वेदान्तसूत्राणां, श्रीशङ्करभगवत्पादश्रीभास्कराचार्यश्रीरामानुजाचार्यश्रीमदानन्दतीर्थश्रीमन्निम्बार्काचार्यमहाप्रभुश्रीवल्लभाचार्यश्रीबलदेवविद्याभूषणादयो ये ये भाष्यकृतोऽभूवँस्ते भारतीयविचारपद्धत्या श्रीमद्भागवतात्कालक्रमतोऽर्वाञ्चः। समेषामप्येषां

---

१. यथा हि सुगतमतानुयायिनां लक्षणं 'कल्पनापोढमभ्रान्तं प्रत्यक्षम्', आर्हतानां 'विशदं प्रत्यक्षम्', नव्यनैयायिकानां 'ज्ञानाकरणं ज्ञानं प्रत्यक्षम्', प्राभाकराणां 'साक्षात्प्रतीतिः प्रत्यक्षम्', अद्वैतवेदान्तिनां 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति (बृहदारण्य. ३.४.१) श्रुत्या निर्गलितम्—'प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणं प्रत्यक्षप्रमा चात्र चैतन्यमेवेति' वेदान्तपरिभाषोक्तं लक्षणम्, विशिष्टाद्वैतवादिनाञ्च 'साक्षात्कारिप्रमाकरणं प्रत्यक्षम्' इति यतीन्द्रमतदीपिकोक्तं लक्षणम्।

सिद्धान्तानामनादिपरम्परादृष्ट्या नित्यत्वादथ च सत्यत्वादप्येभिः प्रवर्तिताः समुद्धृता वा सम्प्रदायाः सन्दृब्धाश्च भाष्यादिग्रन्था न श्रीमद्भागवतस्य स्वाभिप्रायमन्यथयितुं प्रभवन्ति प्रभविष्यन्तीति च सुदृढं मन्यामहे।

अत्र यद्यपि समाम्नातपूर्वाणां, भक्तिज्ञानवैराग्यादिसाधनसम्पत्त्या स्वस्वस्थानेऽपूर्वाणाममीषां केवलाद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैतद्वैताद्वैतादिवेदान्तप्रतिष्ठापनाचार्याणामार्याणां सिद्धान्तमूलानि तत्र तत्राधिकारिभेदाद्रुचिभेदाच्छ्रीमद्भागवतशास्त्रे प्रसङ्गतः सङ्गमयितुं शक्यानि; किन्त्वेकस्यैव कस्यचनाचार्यस्य सिद्धान्तः समग्रस्य श्रीमद्भागवतस्य व्याख्याने पर्याप्नोतीत्यभिनिवेशो नास्माकं मनोऽनुरञ्जयति। श्रीमद्भागवतशास्त्रे बहवोंऽशा दर्शनशास्त्रीयास्तत्तत्प्रसङ्गेष्वधिकारभेदं रुचिभेदञ्चानुरुन्धाना भक्तिज्ञानविरागपोषणपूर्वकं नैष्कर्म्याविष्कारायैव प्रभवन्ति; वस्तुतस्त्वमलज्ञानात्मिका परमहंससंहितैवैषा महामुनिकृता वाक्प्रसृतिर्यथोक्तं तत्रैव ग्रन्थोपसंहारे—

श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं
यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः॥

(श्रीमद्भा. १२.१३.१८) इत्यत्र।

एतस्मादेवास्य सर्ववेदान्तसारताऽपि साङ्गत्यमुपैति, तदप्युक्तं भगवता पुराणकृता—

सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम्।
वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्॥ (तत्रैव-१२.१३.१२)

अपि च,

सर्ववेदान्तसारं हि श्रीमद्भागवतमिष्यते। (तत्रैव-१२.१३.१५)

इत्युक्तरीत्या 'ब्रह्मात्मैकत्वलक्षणकं', 'कैवल्यैकप्रयोजनकं' च शास्त्रमिदं भूयस्त्वेन ज्ञानप्रमाणतत्त्वाचारमीमांसासु श्रीमच्छङ्कराचार्यराद्धान्तमनुगृह्णातीति निष्पक्षतया स्फुटमवबुध्येरन् मार्मिकाः; किन्तु लीलादिरसरहस्यानां प्रकाशनावसरे भगवद्भक्त्युपासनादिनिरूपणसन्दर्भे तत्तद्वैष्णवाचार्याणामपि मतान्युत्तभ्नातीति निर्विचिकित्सं सम्प्रधारयामः। अतोऽस्मत्प्रतिपादितं श्रीमद्भागवतदर्शनं ब्रह्मविद्यया सार्द्धं भक्त्यादिसंवलितत्वान्न केवलं, केवलाद्वैतमेव श्रीमद्भाष्यकारशङ्करभगवत्पादप्रतिपादितं मतं प्रथयत्यपि तु नैकेषु प्रसङ्गेषु तद्व्यतिरिच्याप्यग्रेसरतीति समालोचनावसरेऽवधेयं धिषणाधौरेयैः। एतस्मादेव कारणाद् भागवतोक्त-

प्रमाणप्रमेयादिसन्दर्भा न सर्वथा वेदान्तपरिभाषादिकानां केवलाद्वैतग्रन्थानां न वां प्रस्थानरत्नाकरादीनां शुद्धाद्वैतसन्दर्भाणामन्येषां वा साम्प्रदायिकप्रबन्धानामेव तात्पर्यमवकल्पन्ते, ते तु स्वतन्त्रानुरोधात्सुतरां स्वतन्त्रा अपीति श्रीहरिगुरुकृपया यथामति श्रीमद्भागवतशास्त्रस्य भृशमनुशीलनानन्तरं निर्भ्रान्तं वक्तुमीश्महे। अधुनेदम्प्रथमतया शास्त्रस्यास्य प्रत्यक्षप्रमाणावलम्बिनीं पद्धतिं सङ्क्षिप्य निदर्शयामः।

**श्रीमद्भागवते प्रत्यक्षप्रमाणस्याभिस्वीकृतिः स्वरूपं भेदाः पद्धतिश्च—**

प्रमाणत्वेनात्र प्रत्यक्षस्य सुस्पष्टमभिस्वीकृतिर्मुक्तिलक्षणलक्षित एकादशस्कन्धे वारत्रयं यथा—

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्।
प्रमाणेष्वनवस्थानाद् विकल्पात्स विरज्यते।।
(श्रीमद्भा. ११.१९.१७)

इति प्रथमवारम्।

प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह।। (तत्रैव-११.२८.९)

इति द्वितीयवारमथ तृतीयवारञ्च, यथा—

ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम्।
आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये।।
(तत्रैव-११.२८.१८)

इति त्रिष्वपि स्थलेषु सर्वटीकाकृत्सम्मतत्वात्प्रत्यक्षस्य प्रमाणता, यथा हि—

'एवं प्रमाणचतुष्टयम्.....' (११.१९.१७) इत्यस्य भावार्थदीपिकायाम्, 'आद्यन्तवत्त्वे प्रमाणानि प्रत्यक्षादीनि.....' (११.२८.९) इत्यस्य च 'भावार्थदीपिकायाम्' तत्रभवन्तः श्रीधरस्वामिनः।

'श्रुतिरिति द्वाभ्यां × × × × प्रमाणचतुष्टयम्'।

'× × × प्रत्यक्षं प्रमाणम्' (श्रीमद्भा. ११.१९.१७) इत्यस्य 'सिद्धान्तप्रदीप'-व्याख्याने श्रीशुकदेवः।

'प्रत्यक्षादिप्रमाणबलेन.....' (११.२८.९) इत्यस्य 'पदरत्नावल्यां' च श्रीमद्विजयध्वजः। अत्र द्वितीयाभिस्वीकृतौ, 'आत्मसंविदिति प्रत्यक्षस्यैवान्तरः पारमार्थिकः कश्चिद्भेदविशेषो न प्रमाणान्तरम्, यथाहुः श्रीस्वामिवर्याः—

'.....आत्मसंविदा स्वानुभवेन.....' (११.२८.९) इत्यत्र 'भावार्थदीपिका'। 'प्रत्यक्षं स्वानुभवः....' (११.२८.१८) इत्यत्र च 'भावार्थदीपिका' इति।

ननु 'चात्मसंविदेत्युपादानं प्रत्यक्षेणेति पृथक्पदसहकृतमिति टीकाग्रन्थो न मूलमाटीकत' इति कैश्चिदुट्टङ्क्येत, तदपि नावदातं, प्रत्यक्षमिति प्रथमपदेन विषयेन्द्रियसम्पर्कजस्य व्यावहारिकबोधस्य द्वितीयेनात्मसंविदित्यनेन चात्मसाक्षात्काराख्यपारमार्थिकबोधस्योद्दिष्टत्वात्। केवलाद्वैतप्रस्थानवदत्र भागवतप्रस्थानेऽपि प्रकारान्तरेणेन्द्रियजन्यं तदजन्यमिति प्रत्यक्षद्वैविध्यस्य वक्ष्यमाणरीत्याऽभ्यङ्गीकारादित्यनाकुलम्। अथात्र किंस्विल्लक्षणं प्रत्यक्षम्? किञ्च तत्स्वरूपमित्युच्यते— भगवता श्रीमद्भागवतशास्त्रकृता व्यासेन स्वमुखेन ग्रन्थेऽत्र नास्य लक्षणं न्यरूप्यतः समग्रग्रन्थानुशीलनमहिम्ना वयमेवास्य लक्षणमेत्थं निष्कर्षयामः—

'साक्षात्कारिप्रमावृत्त्युपजननं प्रत्यक्षम्'

इति। साक्षात्कारित्वञ्चात्र ज्ञानान्तरसाचिव्यराहित्यं, तेनानुमानादौ नातिव्याप्तिः। 'प्रमावृत्त्युपजनन'मित्यनेन भ्रमात्मकज्ञानोपजनके करणे प्रमारूपयथार्थबोधे प्रमाणस्य फले चातिप्रसक्तिः पराकृता। वृत्त्युपजनकता, ह्यत्र स्वीकृते बहुविधप्रत्यक्षभेदे पृथक्पृथगेवावगन्तव्या, तद्यथा—व्यावहारिके (लौकिके) प्रत्यक्षे वाक्पाणिपादादिपञ्चकर्मेन्द्रियैरुपस्थापिते चक्षुरादिपञ्चज्ञानेन्द्रियार्थसन्निकर्षे, ज्ञानेन्द्रियाणां सामान्यानां, योगिनां योगजप्रत्यक्षे तपःसंयमयोगादिसाधनोद्दीप्तबलवद्विशिष्टेन्द्रियाणां, भगवदनुगृहीतानां भक्तानां श्रीमद्भगवद्विग्रहलीलाधामादिसाक्षात्कारे तत्प्रसादावाप्तदिव्येन्द्रियाणां, सुखदुःखमोहाद्यनुभवात्मके मानसप्रत्यक्षे चान्तःकरणप्रतिरूपस्य मनसो बुद्धेर्वेत्यस्य प्रक्रिया त्विह विवरिष्यते। ब्रह्मापरपर्यायस्यात्मनस्तु साक्षात्कारे यद्यपि 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः'[१], 'यन्मनसा न मनुते'[२], 'यच्चक्षुषा न पश्यति'[३], 'यच्छ्रोत्रेण न शृणोति'[४] इत्यादिश्रुत्यन्तवचोभिः; 'यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः'[५], 'नैतन्मनो विशति वागुत चक्षुरात्मा'[६]-प्रभृतिभिश्च पारमहंस्यसंहितोक्तवचनैश्च मनोबुद्ध्यादीनां तज्जन्यवृत्तीनां वा परमार्थतया नास्त्युपयोगस्तथापि—

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते॥

(कठोपनिषदि-१.३.८)

---

१. केनोपनिषदि १.१.३; २. तत्रैव-१.१.६।
३. तत्रैव-१.१.७; ४. तत्रैव-१.१.८।
५. श्रीमद्भा. ६.१६.२३; ६. तत्रैव-११.३.३६।

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्।। (तत्रैव-१.३.९)
एष सर्वेषु भूतेषु गूढाऽऽत्मा न प्रकाशते।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः।। (तत्रैव-१.३.१२)

इत्यादि-श्रवणात्तथैव—

निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः।
परमानन्दमाप्नोति यत्र कामोऽवसीयते।। (श्रीमद्भा. ११.१५.१७)
आत्मानं चिन्तयेदेकमभेदेन मया मुनिः। (तत्रैव-११.१८.२१)
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव। (तत्रैव-११.१९.५)
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः।
एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः।।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः।।
(तत्रैव-११.२४.२७-२८)

इत्येवमादिभिर्वाक्यैः समुत्थिताद्भागवतशास्त्रानुशासनाच्च, विविदिषादशायां मनोबुद्धिवृत्तीनामप्यौपयिकत्वं न समञ्जसम्। तस्माद् वक्ष्यमाण-रीत्याऽस्मत्स्वीकृतेषु समेष्वपि प्रत्यक्षभेदेष्वस्य लक्षणस्य सङ्गतिर्निरवद्या।

**अथ प्रत्यक्षभेदाः**

अस्मिञ्छास्त्रे प्रत्यक्षं, प्रथमतया द्विरूपम्—इन्द्रियार्थसन्निकर्षजं प्रत्यक्षपदवाच्यं प्रथमम्।

मानसमथवाऽन्तःकरणार्थसन्निकर्षजं, वेदान्तपदवाच्यासूपनिषत्स्वपरोक्षमिति पदेन, श्रीमद्भागवते त्वात्मसंविदिति पदेन च परामृश्यमाणं द्वितीयम्।

आद्यं पुनः पञ्चप्रकारकम्—

१. **सामान्येन्द्रियप्रत्यक्षं लौकिकानाम्**—येनाधिभौतिकं स्थूलं वर्त्तमान-कालिकञ्च जगत्स्वरूपमधिगम्यते। एतच्च शब्दस्पर्शरूपरसगन्धात्मक-विषयपञ्चकत्वाच्छ्रोत्रत्वक्चक्षूरसनघ्राणेन्द्रियद्वारकं पञ्चविधम्, प्रक्रिया-दृष्ट्या सविकल्पकं निर्विकल्पकमिति द्विविधं च।

२. **सामान्येन्द्रियद्वारेण घटपटादौ सन्मात्रसत्तावगाहिज्ञानिनां प्रत्यक्षम्**—इदं त्वेकविधं ब्रह्मविद्वरिष्ठज्ञानिमात्रैकसंवेद्यम्। अनेन पञ्चेन्द्रिय-

परिगृहीतभौतिकप्रपञ्चेऽपि 'सर्वं खल्विदं ब्रह्मे'[१]ति श्रुत्युक्तदिशा ब्रह्मबुद्धिरेवोपादीयते।

३. **सामान्येन्द्रियद्वारेण भगवद्भक्तानां 'वासुदेवः सर्वमिति'**[२], **'भावना-प्रत्यक्षम्'**—प्रत्यक्षभेदोऽयं भावनाप्रवणेषु भगवद्भक्तेष्वेव स्वरूपमाधत्ते। एतस्मादेव विभूतियोगदर्शनस्य संसिद्धिरिति पश्चात् स्फुटीकरिष्यते।

४. **योगराद्धदिव्येन्द्रियप्रत्यक्षम्**—अनेन भूतभविष्यद्वर्त्तमानत्वावच्छिन्न-माधिभौतिकमाधिदैविकमाध्यात्मिकञ्च जगदधिगन्तुं क्षमन्ते युक्तयुञ्जान-भेदभिन्ना योगिनः। एतच्च स्थूलशरीरस्थगोलकनिरपेक्षं सूक्ष्मेन्द्रियमात्र-निर्वर्त्यमान्तरम्। इदमपि च भेदद्वयीमवगाहते, यथा—धारणाध्यानादि-चिन्तासहकृतं परिच्छिन्नकालमात्रावसायि प्रथमं, समाधिजन्यम-प्रयासनिर्वर्त्यं शश्वत्कालिकं च द्वितीयम्।

५. **भगवदनुग्रहलब्धभगवज्जनानुग्रहलब्धदिव्येन्द्रियप्रत्यक्षम्**—अनेनाधि-दैविकस्य जगतस्तत्रापि प्रकृतिकृतकञ्चुकाद्यतीतानां सच्चिदा-नन्दात्मकानां श्रीमद्भगवतस्तत्पार्षदानाञ्च श्रीविग्रहलीलाधामादिकानां साक्षात्कृतिरुपपद्यते। अस्याधिकारिणः सगुणसाकारभगवन्मूर्त्त्युपासका भक्ता एव।

द्वितीयमिन्द्रियनिरपेक्षमपि द्विविधम्—सर्वसाधारणस्य मानसप्रत्यक्षं प्रथमम्, जीवन्मुक्तानां विदेहमुक्तानां नित्यात्मप्रत्यवमर्शस्वरूपञ्च द्वितीयम्।

**अथैतेषां सनिदर्शनं प्रक्रियानिरूपणम्**—पर्यायेणात्र समेषामप्येषां प्रत्यक्षभेदानामुदाहरणपूर्विका पद्धतिरत्र प्रसाध्यते; तेष्विन्द्रियार्थसन्निकर्षजन्ये प्रथमे—सामान्येन्द्रियप्रत्यक्षमस्मदादिलौकिकजनानाम्। श्रीमद्भागवतशास्त्रानुसार-मस्मदादीनां पुरुषाणामिन्द्रियाणि ब्रह्माण्डाधिष्ठातृचेतनपुरुषस्य भगवतो विराडित्युपलक्षितस्याद्यावतारस्य विग्रहे, प्रपञ्चनिर्माणोपक्रमे समष्टि-रूपतयाऽधिष्ठितानामिन्द्रियाणां प्रतिरूपकाण्येव। तथ्यमिदं श्रीमद्भागवते द्वितीयस्कन्धस्य पञ्चमेऽध्याये, द्वाविंशादारभ्यैकत्रिंशत्तमं श्लोकं यावत्, तत्रैव षष्ठेऽध्याये प्रथमादारभ्य पञ्चदशपद्यपर्यन्तं, तृतीयस्कन्धस्य षष्ठेऽध्याये दशमादारभ्य षड्विंशपद्यपर्यन्तमेवमेवात्रैव षड्विंशेऽध्याये त्रयोविंशतितमादुपक्रम्य त्रिंशत्तमं श्लोकं यावदपि चैकादशस्कन्धस्य द्वाविंशेऽध्याये पञ्चदशादारभ्य विंशतितमं पद्यं यावद् विस्तरेणाधिगन्तुं सुशकम्। अथ प्रस्थानेऽ-

---

१. छान्दोग्योपनिषदि-३.१४.१; २. श्रीमद्भगवद्गीतायाम्-७.१९।

स्मिन्कतीन्द्रियाण्यभ्युपगम्यन्ते? किमेतेषाषां स्वरूपाणि कार्याणीति च सङ्क्षिप्य विमृशामः। अथात्र क्वचन—

तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवनम्।
श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः। (२.५.३१)

इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः।
वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते।। (३.२६.१३)

श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानचक्षुषः।
वाक्पाण्युपस्थपाय्वङ्घ्रिकर्माण्यङ्गोभयं मनः।।

शब्दः स्पर्शो रसो गन्धो रूपञ्चेत्यर्थजातयः।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः।। (११.२२.१५-१६)

इत्युक्तपद्धत्या पञ्चज्ञानेन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चकर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थानामित्याहत्य दशेन्द्रियाणामभ्यङ्गीकारः। अत्रैकस्मिन् स्थले मनसस्तूभयेन्द्रियत्वमुक्तमतः क्वचित् तेन सार्द्धमिन्द्रियाण्येकादशसङ्ख्याकानीत्यपि प्रत्यपीपदद् ग्रन्थकारो, यथा—

'एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत्' (४.२९.२०),

'एकादशासन्मनसो हि वृत्तयः' (५.११.९) इति।

तत्त्वौपचारिकमेवाभाति यतोऽत्र श्रीविजयध्वजं विहाय प्रायशस्सर्वेऽपि टीकाकृतो दशेन्द्रियैः साकं मनसः स्थानेऽहङ्कारमङ्गीकुर्वन्ति, यथा—'भावार्थदीपिकाकारः' श्रीधरस्वामिनः—

'एकादश वृत्तय आसन्। आकूतयः क्रियाकाराः पञ्च, धियश्च ज्ञानाकाराः पञ्च, अभिमानश्चेति'। (श्रीमद्भा. ५.११.९ इत्यत्र 'भावार्थदीपिका')

एवमेव 'श्रीभागवतचन्द्रिकायां' श्रीवीरराघवः, 'सिद्धान्तप्रदीपे' श्रीशुकदेवः, 'सारार्थदर्शिन्यां' श्रीविश्वनाथचक्रवर्ती, 'बालप्रबोधन्यां' गोस्वामिश्रीगिरिधरलालो 'भक्तमनोरञ्जिन्यां श्रीभगवत्प्रसादाचार्यश्चापीति समे सम्मेनिरे। पदरत्नावलीकृद् 'विजयध्वजस्तु'—

'अयमर्थः—श्रोत्रादीनि दश एकं मन इत्येकादशेन्द्रियाणि'।

इत्युपचारदृशैव व्याचष्टे। अथ, कुत्रचिज्ज्ञानेन्द्रियपञ्चकेन समं मनसः साङ्गत्यमादायेन्द्रियषट्कं, कुत्रचिच्च तद्व्यतिरिच्येन्द्रियपञ्चकमेव व्याजहार तत्रभवान् भागवतकृद्यथा—

षाड्वर्गिकं जिघ्रति षड्गुणेशः। (१.३.३६)

प्रत्याहृतषडिन्द्रियः। (१.१३.५३)

षडिन्द्रियवर्गेण। (५.१४.१)

षडिन्द्रियनामानः। (५.१४.१)

एवञ्च,

पञ्चेन्द्रियार्थप्रक्षेपः। (४.२९.१९)

**भूतेन्द्रियाणि पञ्चैव।** (११.१२.२३)

मनः कर्म्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम्। (११.२२.३६)

इत्यादौ। तदेतेषु सन्दर्भेषु प्रकरणसङ्गतिरप्युन्नेया तत्त्वार्थजिघृक्षुभिर्भागवतार्थविद्भिर्यथा सर्वत्राऽप्यत्र ज्ञानेन्द्रियाणामेव तत्तद्विषयेषु प्रवृत्तिः प्रत्याहारप्रसङ्गे च तेभ्य एव निवृत्तिर्विवक्षिता तदुक्तं महाप्रभुणा श्रीमद्वल्लभाचार्येणापि—'प्रत्याहृतषडिन्द्रिय' (१.१३.५३) इत्यस्य वचनस्य व्याख्याने 'श्रीसुबोधिन्या'म्—

'षडिन्द्रिय इति (कस्मादाहेत्युच्यते) कर्मेन्द्रियाणि नियम एव प्रत्याहृतानि'।

यत्र ज्ञानेन्द्रियाणामेव कर्तृत्वं विवक्षितं मनसश्च पृथगुपादानं कृतं तत्र पञ्चेन्द्रियाण्युक्तानीत्यस्य प्रकरणार्थो वेदितव्यः।

वस्तुतः—'इन्द्र आत्मा ईयत अनेनेतीन्द्रिय'मिति व्युत्पत्त्या इन्द्रिय-दशकमेवाभ्युपगन्तुमुचितमत्र, ज्ञानेन्द्रियैः साकं कर्मेन्द्रियाणामपि क्रियाशक्ति-द्वारेणात्माभिव्यञ्जनपरत्वान्मनसश्चोभयेन्द्रियानुग्राहकत्वेऽप्युपरिष्टान्निरूप्यमाणसरण्याऽस्य तेभ्यः स्वरूपतो भिन्नत्वादिति न काचिदिह विप्रतिपत्तिः।

**अथेन्द्रियाणां मनसश्चास्मिञ्छास्त्रे समुत्पत्तिस्वरूपकार्यादीनां विवेचनम्,** यथा—

वैकारिकान्मनो जज्ञे देवा वैकारिका दश।
दिग्वातार्कप्रचेताश्विवह्नीन्द्रोपेन्द्रमित्रकाः।।
तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्। (२.५.३०-३१)

अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत्।
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः।।
तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च। (३.५.३०-३१)

वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत।
यत्सङ्कल्पविकल्पाभ्यां वर्त्तते कामसम्भवः।। (३.२६.२७)
तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः। (३.२६.३१)

इत्येभिर्ग्रन्थसन्दर्भैः—प्रथमं परमात्मनस्त्रिगुणात्मिका प्रकृतिः सञ्जायते। सदसदात्मिकायामस्यां मायेत्यपरपर्यायायां प्रकृतौ कालवृत्त्या भगवदीक्षणात्सञ्जाते क्षोभे महत्तत्त्वं, तस्माच्च तयैव रीत्या अहंतत्त्वमजायत। अयमहङ्कारः पुनः क्षोभमवाप्य कार्यकारणकर्त्रात्मा सन् भूतेन्द्रियमनोरूपत्वं त्रिधात्वमाधत्ते, अर्थात् कार्यरूपाणि पञ्चभूतानि कारणरूपाणीन्द्रियाणि कर्तृरूपं मन इन्द्रियाधिष्ठातृदेवाँश्च क्रमशः स्वसात्त्विकराजसतामसभेदैः सञ्जनयति। सात्त्विकस्यैवात्र वैकारिकाहङ्कार इति सञ्ज्ञा, राजसस्य च तैजस इति पारिभाषिकत्वमवधेयम्। एतेन कारणभेदेन मनस इन्द्रियाणाञ्च पृथग् व्यवस्थानं सुतरामुपपद्यते। श्रीमद्भागवतेऽपि—

'प्राणेन्द्रियमनोबुद्धिः.....'। (६.३.२८)

चित्तस्य चित्तेर्मन इन्द्रियाणां पतिर्महान्भूतगुणाशयेशः। (६.३.२९)

येनेन्द्रियप्राणमनोगुणाँस्त्वम्। (६.१.३३)

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यत्। (१०.८७.३३)

कायेन वाचा मनसेन्द्रियैर्वा.....। (११.२.३६)

देहेन्द्रियप्राणमनोधियां यो.....। (११.२.४९)

इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप। (११.३.१५)

नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः। (११.३.३६)

बुद्धीन्द्रियप्राणमनोवचोभिः.....'। (११.६.७)

मनसा.....वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः। (११.१३.२४)

इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य.....'। (११.१४.४२)

वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च। (११.१६.४२)

प्राणेन्द्रियमनोमयम्। (११.२१.३६)

भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश। (११.२२.२३)

मनः कर्म्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम्। (११.२२.३६)

देहेन्द्रियप्राणमनोऽभिमानो.....। (११.२८.१६)

नात्मा वपुः पार्थिवमिन्द्रियाणि।

मनोऽन्नमात्रं धिषणा च सत्त्वमहङ्कृतिः खं क्षितिरर्थसाम्यम्।
(११.२८.२४)

इत्येतेषु सन्दर्भेषु मनस इन्द्रियेभ्यः पृथगुपादानात्तस्य तत्त्वतोऽनिन्द्रियत्वं तेभ्यश्च वैशिष्ट्यमेव व्यवतिष्ठते। अपि चात्यन्तिकलयप्रसङ्गे—

अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु।
योनिर्वैकारिके सौम्य लीयते मनसीश्वरे।। (११.२४.२४-२५)

इति निरूपणादिन्द्रियाणां स्वप्रवर्तकदेवतास्वथवा स्वकारणे राजसाहङ्कारे लयोऽभिमतस्तेषां तस्य च तन्नियन्तरि मनसि, तदनु देवताभिः सह मनसो वैकारिकाहङ्कार.....इत्यनेनापि मनो नेन्द्रियम्; अपि तु तेषां नियन्ता-नायक इत्येवात्राभिप्रेतमुपलक्ष्यते। वस्तुतो मनोऽत्रान्तःकरणस्य कार्यभेदात्पृथगनुभूयमाना वृत्तिरेव, यथोक्तं तृतीये कापिलेयोपाख्याने—

मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया।। (श्रीमद्भा. ३.२६.१४)

अत्र विविधाश्च टीकाकृतस्तद्यथा—'अन्तरात्मकमन्तःकरणं वृत्त्या स्वगुणवृत्त्या सङ्कल्पाध्यवसायाभिमानचिन्तारूपया.....'। इति 'भागवतचन्द्रिकायाम्' श्रीवीरराघवः।

'अन्तरात्मकमन्तःकरणमेकमेव मननहेतुत्वान्मनः बोधनहेतुत्वाद् बुद्धिः देहादावहङ्करणहेतुत्वादहङ्कारश्चिन्तनहेतुत्वाच्चित्तमिति चतुर्धा भेदः लक्षणरूपया मननबोधनादिवृत्त्या लक्ष्यते'। इति 'सिद्धान्तप्रदीपे' श्रीशुकदेवः।

'एकमेवान्तरात्मकमन्तःकरणं मनोबुद्ध्यादिभेदेन चतुर्धा लक्ष्यते'। इति 'सुबोधिन्यां' श्रीवल्लभाचार्यः।

अयमाशयः—प्रस्थानेऽस्मिन्नन्तःकरणस्य क्रियाभेदत्वादेव मनोबुद्ध्यादीनां व्यावहारिकं पार्थक्यं न पारमार्थिकम्, तस्मात्—अन्तःकरणस्य विक्रियाया नाम मनः, प्रक्रियाया नाम बुद्धिः, संस्क्रियाया नाम चित्तमहङ्क्रियायाश्च नामाहङ्कार इति युक्तमुत्पश्यामः।

तथाप्याधिदैविकपद्धत्याऽत्र मनसो बुद्धेश्च व्यावहारिको भेदः स्वरूपभेदश्चाप्यभ्युपगम्यते, तत्तद्रहस्यञ्चेत्थमवकल्पयामः—

वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत।
यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः।।
यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम्।
शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः।।
तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत्सति।
द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः।।
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्।। (३.२६.२७-३०)

इति यदुक्तं तदेतस्यायमभिप्रायः—श्रीमद्भागवतानुसारेण प्रत्येकमपि सृष्टि-स्रष्टव्य-पदार्थजातं तदनुरोधेन चोपास्यरूपं भगवत्तत्त्वमप्याधिदैविकमाध्यात्मिकमाधि-भौतिकमिति त्रिधात्वमुपाश्नुते तत्परमार्थदृशाऽभिन्नमपि व्यवहारतो भिन्नत्वमवगाहते। यथोक्तं द्वितीयस्कन्धे—

य आध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः।।
एकमेकतराभावे यदा नोपलभामहे।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः।। (२.१०.८-९)
वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा।
अधिदैवमथाध्यात्ममधिभूतमिति त्रिधा।। (२.१०.१३-१४)

अत्राहुर्भावार्थदीपिकाकृतः—"आश्रयस्वरूपमपरोक्षानुभवेन स्पष्टं दर्शयितुमध्यात्मादिविभागमाह—योऽयमाध्यात्मिकः पुरुषश्चक्षुरादिकरणाभिमानी द्रष्टा जीवः स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः। तत्रैकस्मिन्नेवोभयोःद्विरूपो विच्छेदो यस्मात्स आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः—'स वा एष पुरुषोऽन्नरसमयः' इत्यादिश्रुतेः।

एकमेकतराभाव इत्येतेषामन्योऽन्यसापेक्षसिद्धित्वे नानात्मत्वं दर्शयति—तथा हि दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिद्ध्यति, नापि द्रष्टा न च तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता सूर्यादिः, न च तं विना करणं प्रवर्त्तते, न च तद्विना दृश्यमित्येवमेकतरस्याभावे एकं नोपलभामहे तत्र तदा तत्त्रितयमालोचनात्मकेन प्रत्ययेन यो वेद साक्षितया पश्यति स परमात्मा आश्रयः" इति।

तस्मादत्रैवं व्यवस्था—अन्तःकरणं चतुर्धा, मनोबुद्ध्यहङ्कारचित्तभेदेन। तत्र विपरीतक्रमेण—

**प्रथमं चित्तव्यूहम्—**

अत्र यदधिभूतं तन्महदिति व्यपदेश्यम्।

यदध्यात्मं तच्चित्त-सञ्ज्ञितम्।

यदधिदैवं तत् क्षेत्रज्ञः पुरुषः, अयमेवाधिदैविकः पुरुष उपास्यत्वेन 'वासुदेव' इत्यभिमतः।

**द्वितीयमहङ्कारव्यूहम्—**

अत्राधिभूतं वैकारिकादिभेदोपलक्षितं समष्ट्यहंतत्त्वम्।

अध्यात्मं प्रतिपुरुषभिन्नोऽहङ्कारोऽभिमानसञ्ज्ञितः।

अधिदैवं श्रीरुद्रः, स एवोपास्यत्वेन सङ्कर्षणापरनामा सहस्रफणोपलक्षितो भगवाननन्तः।

**तृतीयं बुद्धिव्यूहम्—**

अत्राधिभूतं समष्टिबुद्धिः 'बुद्धिरव्यक्तमेव चे'[१]ति स्मरणात्।

अध्यात्मं प्रतिपिण्डमर्थेन्द्रियसम्बन्धस्फुरणात्मिकाऽध्यवसायादिरूपा।

अधिदैवमत्र परमेष्ठी प्रजापतिर्ब्रह्मा, उपास्यदेवश्च प्रद्युम्नाख्यो भगवांश्चतुर्व्यूहान्तर्गतस्तृतीयः।

एवमेव **चतुर्थं मनोव्यूहमपि**, यथा—

अत्राधिभूतं ब्रह्माण्डव्यापि सोमतत्त्वं तन्मूलतत्त्वं चन्द्रमण्डलञ्च, 'चन्द्रमा मनसो जात'[२] इति श्रुतेः। (एतदेव क्षीराकूपारोद्भवमुडुपतित्वेनोपलक्षितमिति पुराणेषु प्रथते वादः)।

अध्यात्मं प्रतिपिण्डव्यवस्थितमुभयेन्द्रियाणां नायकमन्तःकरणवृत्तिरूपं मनः, 'चञ्चलं हि मनः कृष्णे'[३]त्यादि प्रतिपादितत्वात्।

अधिदैवं चन्द्रमण्डलाधिष्ठातृदेवत्वेन ब्रह्मणा व्यवस्थापितोऽत्रिनन्दनः सोमापरपर्यायश्चन्द्राख्यो देवः—'सोमोऽस्माकं ब्राह्मणानां राजेति'[४] श्रुतेः।

---

१. श्रीमद्भगवद्गीतायाम्-१३.५; २. पुरुषसूक्ते द्वादशतमो मन्त्रः।
३. श्रीमद्भगवद्गीतायाम्-६.३४।
४. शुक्लयजुर्वेदस्य माध्यन्दिनसंहितायाम्-९.४०।

इत्थं तत्त्वतोऽभेदेऽपि प्रत्यक्षादिव्यवहारे श्रीमद्भागवते स्वरूपकार्यादि-भिन्नत्वाद् बुद्धिमनसी पृथक्पृथङ्निरूपिते।

अयमाशयः—मनः, वाक्पाण्याद्युपलक्षितानां पञ्च कर्मेन्द्रियाणां श्रोत्रादीनां पञ्च ज्ञानेन्द्रियाणां प्रेरयिता ईश्वरश्च तद्विना तेषां स्वस्वकार्ये जाते प्रवृत्त्यनर्हत्वात्कथञ्चित्प्रवृत्तेऽपि स्वकार्येऽक्षमत्वादित्यस्य स्वरूपम्। अथ च—

'यत्सङ्कल्पविकल्पाभ्यां वर्त्तते कामसम्भवः'। (श्रीमद्भा. ३.२६.२७)

इति मूलोक्तरीत्या सङ्कल्पविकल्पाभ्यां कामस्य इन्द्रियार्थजन्यभोगाभिलाषस्य सञ्जननमस्य कार्यम्। एवमेव,

द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः।
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्।।

(तत्रैव-३.२६.२९-३०)

इति प्रागुदाहृतग्रन्थप्रामाण्यात्—बुद्धिः द्रव्यादीनां, श्रोतव्यावलोकयितव्येत्याद्यर्थानां स्फुरणकरं प्रकाशकं ज्ञानस्वरूपजननं किमपि सामर्थ्यमिन्द्रियाणामनुग्राहकञ्च; बुद्ध्या विना तानि तानीन्द्रियाणि तेभ्यस्तेभ्यो विषयेभ्यः पृथक्पृथग् भोगाहरणं कर्त्तुमनर्हाणीत्येतस्य तात्पर्यम्।

इत्थं चित्तस्य भोगादौ प्रवृत्तिनिवृत्त्यात्मकं स्फुरणं, बुद्धेर्द्रव्यस्फुरणरूपं विज्ञानं, मनसो रागद्वेषादीच्छामयत्वमहङ्कारस्य चैतेषां त्रयाणामपि कार्याणामभि-मानमिति चतुर्विधस्यान्तःकरणस्य व्यतिरिक्तानि कार्याणीत्यवधेयम्। तथा हि—'शब्दं शृणोमी'त्यत्र प्रथमं चित्तेन चेतनामात्रं निधीयते, बुद्ध्या 'शब्दोऽयमिति' स्फूर्तिर्मनसा-'मधुरोऽयं शब्दोऽरुन्तुदोऽयमिति' जिघृक्षा परिजिहीर्षा वाऽहङ्कारेण च 'शब्दश्रवणवानह'मिति तत्र स्वाभिमानार्पणमिति निदर्शनसङ्गतिः।

बुद्धेः द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिका ज्ञानविशेषाः, सदोषनिर्दोषेन्द्रिय-वृत्तिद्वारेण जायन्ते, तत्र संशयः—'स्थाणुर्वा पुरुषो वेत्युभयकोट्यवगाह्यनिश्चयज्ञानं, विपर्यासोऽतस्मिंस्तद्बुद्धिरूपो मिथ्याज्ञानं, निश्चयोऽध्यवसायः प्रमाणज्ञानं वा, अनुभूतविषयासम्प्रमोषः स्मृतिः, पूर्वानुभूतस्य विषयस्य संस्कारद्वारेण पुनर्बुद्धावुपारोहः, स्वापो निद्रा च न तिरोहितं तद्विदाम्। यत्तु—

'बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते' इति (१२.४.२५ पूर्वार्द्धम्) द्वादशस्कन्धोक्तलक्षणं नात्र सङ्गच्छत इति मैवं भाषिष्ठास्तत्रैव—

मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि। (१२.४.२५, उत्तरार्धम्)

इत्युक्तपद्धत्या प्रकरणस्यास्य पारमार्थिकत्वात् कैश्चिन्मतेऽत्र बुद्धिशब्दस्य जीवात्मधर्मभूतज्ञानपरत्वाच्चेत्यनुक्तोपालम्भनम्।

अपरत्राप्यत्र शास्त्रे—

मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी। (२.१०.३२)

इति मनसो बुद्धेश्च लक्ष्मणी यन्निगदिते तत्तयोरपि तात्पर्यं पूर्वोक्तनिरूपणान्न मनागपि विसंवदते यतः सर्वान्कामसङ्कल्पादीन् मन एव सञ्जीवयति बुद्धिरपि तथाभूतार्थविज्ञानरूपिणी न तु स्वयं परमार्थग्राहिणी मनःप्रेरितेन्द्रियानुग्राहक-मात्रत्वात्। अत्र सुबोधिनीकृतो व्याख्यानं किञ्चिद्भिन्नं दृश्यते, यथा हि—

'सर्वे हि विकारास्त्रिविधास्तन्मयत्वान्मनोऽपि त्रिविधं, बुद्धिरपि त्रिविधेत्याह—बुद्धिर्विज्ञानरूपिणीति। विविधं ज्ञानं विज्ञानं तत्त्रिविधमिति तद्रूपिणी बुद्धिरपि त्रिविधा'।

अनेन बुद्धिमनसोः प्रकृतिकृतगुणसम्पर्केण त्रैविध्यमुदीरितमाचार्येण, तदपि 'बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणिव'त्युपक्रम्य 'धृतिः सा पार्थ तामसी'त्यन्तं श्रीमद्भगवद्गीताया अष्टादशाध्यायोक्त[1]-प्रकरणमनुसरतीति न प्रमाणपराहतम्।

**अथ दशानामपीन्द्रियाणां लक्षणस्वरूपकार्यादीनि—**

तत्र प्रस्थानेऽस्मिन्प्रथममिन्द्रियसामान्यलक्षणं, तत्रैव द्वितीयस्कन्धे—

'गुणात्मकानीन्द्रियाणि' (२.१०.३२) इति।

अस्यायमर्थः—गुणेषु शब्दादिष्वात्मा प्रवृत्तिः स्वभावो येषामथवाऽनौत्पत्तिकः सम्बन्धो येषां तानि गुणाभिमुखस्वभावानीत्याशयः। शब्दाद्यर्थेषु प्रवृत्तिर्यद्यपि मुख्यतया ज्ञानेन्द्रियाणामेव किन्तु कर्मेन्द्रियाण्यपि व्याहरणाहरणगमनादिक्रियाद्वारेण तदर्थोपस्थापनौपयिकत्वंमाभजन्त इति लक्षणस्य नाव्याप्तिः।

अथोत्पत्तिकारणाभिप्रायेणापरत्र किञ्चिदपरं लक्षणं, तत्रैव च क्रियोपजनन-ज्ञानोपजननकार्यद्वयविभागाद् द्वैविध्यमप्यङ्गीचकार भागवतकारः—

तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः। (३.२६.३१)

इति तृतीये 'कापिलेयोपाख्याने'। तदुभयलक्षणोत्थं समुदितं लक्षणं, 'तैजसाहङ्कारजन्यत्वे सत्येकपिण्डस्थितत्वात्तदभिमानिभोगसिद्ध्यौपयिकतत्तत्क्रिया-

---

१. श्रीमद्भगवद्गीतायाम्-१८.२९-३५।

ज्ञानान्यतरोपजनसामर्थ्यमिन्द्रियम्'। इत्येव निर्गलति। अथैतेषां विशेषलक्षणानि श्रीमद्भागवतशास्त्रे द्वितीयस्कन्धस्य षष्ठेऽध्याये (प्रथमादारभ्याष्टमश्लोकपर्यन्तं), तृतीयस्कन्धस्य च षड्विंशेऽध्याये (सप्तचत्वारिंशत्तमादारभ्याष्टपञ्चाशत्तमं पद्यमभिव्याप्य) उभयविधानामिन्द्रियाणामधिष्ठातृदेवैः सममर्थजातानि कार्याणि च समनुक्रान्तानि। एवमेवैकादशे श्रीमद्भगवदुद्धवसंवादेऽपि—

श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः।
वाक्पाण्युपस्थपाय्वङ्घ्रिकर्माण्यङ्गोभयं मनः।।

शब्दः स्पर्शो रसो गन्धो रूपञ्चेत्यर्थजातयः।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः।। (११.२२.१५-१६)

इति श्लोकद्वयेन ज्ञानक्रियाभेदभिन्नानामेषां विषयाः कार्यभेदाश्च सन्निरूपितास्तदनुसृत्य क्रमशः समेषामपि विशेषलक्षणानि स्वरूपाणि वा चेत्थं निष्कर्षयामः—

**(क) कर्मेन्द्रियाणि (पञ्च)**

१. वह्निदेवताधिष्ठितं स्थूलशब्दोद्भावनसमर्थमिन्द्रियं वाक्, व्यष्टिशरीरस्थमुखोपलक्षितजिह्वाऽस्या गोलकम्। केवलं वैखर्या एव वाचः समुद्भावनमस्याः कर्म, मध्यमापश्यन्त्योर्मनोरूपत्वात्परायाश्चात्माभिन्नत्वात्।

२. इन्द्रदेवताधिष्ठितमादानविसर्जनादिबहुविधशिल्पोपजननमिन्द्रियं पाणिः, तन्मनुष्येषु सामान्येषु द्वित्वावच्छिन्नं देवादीनां, तपोयोगवरप्रभावादिपरिबृंहितसत्त्वानां मानवानाञ्च बहुबाहूपलक्षितमपि।

३. उपेन्द्र(विष्णु)देवताधिष्ठितं गमनसन्तरणस्फालनाघातादिगत्युपजननमिन्द्रियमङ्घ्रिस्तदपि सामान्यमानवानां शरीरे द्वित्वमयम्।

४. प्रजापत्यधिष्ठितं कामसुखोत्पादनं सन्तत्युपजननिमित्तञ्च मेढ्रं तच्च स्त्रीपुम्भेदेन द्विप्रकारकं प्रसिद्धमेव।

५. मित्रदेवताकं मृत्युदेवताकं वा, मलनिस्सारकमिन्द्रियं पायुः। अस्य मलादिनिस्सारकं छिद्रं गुदं, मूत्रापसारकञ्च मेढ्रस्थान एव व्यवस्थितमिति वैलक्षण्यम्।

एतेषां प्रत्यक्षप्रमाणे न साक्षादुपयोगो ज्ञानाजनकत्वादिति वयमप्यभ्युपगच्छामः प्रसङ्गवशादेवात्र विवेचनं विहितमेषामित्यवधेयम्।

**(ख) ज्ञानेन्द्रियाणि (पञ्चैव)**

१. 'नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते'। (३.२६.४७ पूर्वार्धम्) इत्यनेन,

'व्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः'। (३.२६.५५)

इत्यनेन च श्रीमद्भागवतवचनप्रामाण्येन—'दिग्देवताधिष्ठितं नभोगुणविशेषेण शब्दग्राहकमिन्द्रियं चक्षुः'। एतस्य—

पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः। (४.२९.१२)

इति पुरञ्जनोपाख्यानतात्पर्याध्यायोक्तदिशा सामान्यतो गोलकद्वयं मानवानाम्। शक्तितारतम्येन स्फुटानामस्फुटानां मन्द्रमध्यतारादिस्वरवतां च स्थूलशब्दानामनेन ग्रहणम्। सूक्ष्मदिव्यशब्दानां ग्रहणं तु प्रमेयबलेन गोलकनिरपेक्षमप्युपपद्यते।

२. वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः। (३.२६.४७, उत्तरार्धम्) इति वचनेन,

स्पर्शोऽभवत्ततोवायुस्त्वक्स्पर्शस्य च सङ्ग्रहः। (३.२६.३५)

इति वचनेन च, 'वायुदेवताकं वायुगुणविशेषत्वेन स्पर्शग्राहकमिन्द्रियं त्वक्'। एतस्य सर्वस्मिन्नपि स्थूलशरीरे बाह्याभ्यन्तरे परिव्याप्तिः। त्वगित्युपलक्षणं स्पर्शग्राहकशरीरकोशानां स्नायुतन्त्रोत्थसूक्ष्मसंवेदनानां वा, तेन न तच्चर्ममात्र-पर्यवसायि, दन्तकेशादौ उदराभ्यन्तरावयवेष्वपि च स्पर्शस्य संवेदितत्वादिति विशेषेणावधेयम्।

वस्तूनां मृदुत्वं कठिनत्वं, शैत्यमुष्णत्वं, लघुत्वं गुरुत्वं, समत्वं विषमत्वं, मसृणत्वं चैवमादयो विविधाः स्पर्शा अनेन गृह्यन्ते[1]।

३. 'तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते'। (३.२६.४८ पूर्वार्धे) इत्युक्त्या,

'×××× निरभिद्येतामक्षिणी चक्षुरेतयोः।
तस्मात्सूर्यः ×× ×× ×× ॥ (३.२६.५५)

---

१. वस्तुनो मृदुकाठिन्यं लघुगुर्वोष्णशीतताम्।
जिघृक्षतस्त्वङ्निर्भिन्नास्तस्यां रोममहीरुहाः॥ (श्रीमद्भा. २.१०.२३)
अपि च,
मृदुत्वं कठिनत्वञ्च शैत्यमुष्णत्वमेव च।
एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः॥ (तत्रैव-३.२६.३६)

इत्युक्त्या च, सूर्यदेवताकं बलाबलतारतम्येनोद्भूतानुद्भूतरूपग्राहकमिन्द्रियं चक्षुः। तच्च,

द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च।
तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः।। (३.२६.३९)

इत्युक्तरीत्या रूपतन्मात्रस्य वृत्तयो, द्रव्यस्याकारसमर्पकत्वं, गुणता-द्रव्योपसर्जनतया प्रतीतिर्व्यक्तिसंस्थात्वं द्रव्यस्य या संस्था सन्निवेशस्तेनैव तत्प्रमाण-प्रतीतिश्चक्षुरिन्द्रियविषयत्वम्।

द्रव्योपसर्जनतया द्रव्ये गुणतया प्रथमं संयोगसम्बन्धेन द्रव्यज्ञानं ततः संयुक्तसम्बन्धेन रूपज्ञानमित्यर्थः। अथ च, रूपग्रहणेन साकं प्रतिबिम्ब-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्वादिधर्माणां साक्षाद्ग्रहणं चक्षुषैव। साक्षादिति कुतश्चेदुच्यते—सङ्ख्यादीनामसाक्षाद्ग्रहणं स्पर्शादिभिरपि सम्भवत्येव। शुक्लकृष्णलोहितादिवर्णानां वस्तुनोऽभावस्य चापि चक्षुषैव ग्रहणं बोध्यम्। एतेषु चान्येन्द्रिययोगव्यवच्छेदं, चक्षुर्मात्रैकग्राह्यत्वादिति सर्वमुपपन्नम्।

अस्य च,

खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते।
रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः।। (४.२९.१०)

इति वचनाल्लोकप्रत्यक्षाच्च दक्षिणवामनेत्रभेदाद् गोलकद्वयं सामान्यमानवानां, दिव्यचक्षुर्योगचक्षुरित्यादयस्तु गोलकनिरपेक्षमेव तदुपरिष्टाद्वक्ष्यामः।

४. 'अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः। (३.२६.४८)

इत्यनेन,

×× ×× ×× देवा वैकारिका दश।
दिग्वार्ताकप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः।। (२.५.३०)

इत्येतेन च वाक्येन—

'वरुणदेवताकमम्भोगुणविशिष्टं रसग्राहकमिन्द्रियं रसनम्'।

इत्यस्य चतुर्थज्ञानेन्द्रियस्य लक्षणमायाति। इन्द्रियेनानेन मधुराम्ललवणकटु-तिक्तकषायानां षड्रसानां दुग्धघृतादिविशिष्टास्वादसंवेदनानां जलगतस्याप्यायनकरस्य निर्विशेषरसस्य च ग्रहणं भवति।

५. 'भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते'। (३.२६.४८ उत्तरार्धम्)

इति ग्रन्थवचसा, पूर्वोदाहृतेन च—'दिग्वातार्कप्रचेतोऽश्वी'त्यादिना सन्दर्भेण—नासत्याविति ख्यातेऽश्विनीकुमारयुग्मेनाधिष्ठितं भूमिगुणविशेषेण गन्धग्राहकमिन्द्रियं घ्राणम्। अस्यापि स्थूलशरीरे एकस्यामेव नासिकायां छिद्रद्वयरीत्या गोलकद्वय-मेवास्थेयम्। एतत्प्रमाणं तु 'पुरञ्जनाख्यानतात्पर्यनिरूपणाध्याये, यथा—

नलिनी नालिनी नासे गन्धः सौरभ उच्यते। (४.२९.११)

इति। गन्धस्य भेदा अपि तृतीयस्कन्धे—

करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक्।
द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते।। (३.२६.४५)

इत्यलमतिपल्लवितेन। एतत्सामान्येन्द्रियप्रत्यक्षं श्रोत्रादिपञ्चेन्द्रियमात्रजन्यं पञ्चविधमेव न नैयायिकादिवत् षड्विधमस्माभिः पूर्वविवेचितरीत्या मनस इन्द्रियनायकत्वेऽपि तस्येन्द्रियतयाऽनभ्यङ्गीकारात्। तदित्थम्—

श्रोत्रेन्द्रियस्थूलशब्दसन्निकर्षजं श्रावणम्।

त्वगिन्द्रियतद्विषयवद्वस्तुसन्निकर्षजं स्पार्शनम्।

चक्षुरिन्द्रियरूपवद्वस्तुसन्निकर्षजं चाक्षुषम्।

रसनेन्द्रियरसवद्वस्तुसन्निकर्षजं रासनम्।

घ्राणेन्द्रियगन्धवद्वस्तुसन्निकर्षजन्यं च—घ्राणजमिति।

यद्यपि वागादिकर्मेन्द्रियाणां ज्ञानजनकत्वन्नास्ति किन्तु श्रोत्रादिज्ञानेन्द्रिय-ग्राह्यशब्दाद्युद्भावने, समीपं गत्वा शब्दश्रवणे, करेण पुष्पादीन्यादायाघ्राणने, स्पर्शे, रसवद्वस्त्वादाय तस्यास्वादने च परोक्षतया ह्येतेषामपि साहाय्यमुन्नेयम्।

प्रत्यक्षप्रक्रिया त्वत्र वेदान्तप्रसिद्धा वृत्तिमूलैव तत्तदिन्द्रियद्वारेणान्तःकरणस्य विषयाकारपरिणाम एवात्र वृत्तिः। यथा तडागोदकं छिद्रेभ्यो बहिर्निर्गत्य कुल्याप्रणालिकादिना केदारं प्रविश्य तदाकारं गृह्णाति तथान्तःकरणमपीन्द्रियवर्त्मना विषयमुपेत्य तदाकारं गृह्णाति। वृत्तिप्रामाण्यन्त्वत्र शास्त्रे—

सखाय इन्द्रियगणा ज्ञानं कर्म च यत्कृतम्।
सख्यस्तद्वृत्तयः × × × × × ×।। (४.२९.६)

एकादशासन्मनसो हि वृत्तयः। (५.११.९)

× × बुद्धेर्लक्षणं वृत्तितः पृथक्। (३.२६.३०)

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः। (७.७.२५)

इत्यादाववलोकयितव्यम्। प्रत्यक्षप्रमाऽत्र वस्तुतोऽद्वयज्ञानापरपर्यायचैतन्यमेव तस्य प्रमातृप्रमाणविषयोपाधिवशादेव व्यावहारिकं त्रैविध्यम्, यथोक्तमत्रैव—

ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा।। (३.३२.२८)

अपि च,

बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्।
दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत्।।
दीपश्चक्षुश्च रूपञ्च ज्योतिषो न पृथग्भवेत्।
एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात्।।
(१२.४.२३-२४) इत्यादौ।

ननु चैतन्यमेवात्र ज्ञानस्वरूपं चेत्सन्निकर्षाणां किम्प्रयोजनमिति जिज्ञासाया मुच्यते—व्यवहारे घटतद्गतरूपरूपत्वशब्दशब्दत्वावच्छिन्नचैतन्याभिव्यञ्जक-वृत्त्युत्पादने संयोगसंयुक्ततादात्म्यसंयुक्ताभिन्नतादात्म्यरूपाणां सन्निकर्षाणां विनियोगत्वान्न निष्प्रयोजनत्वम्। यदुक्तमेकादशे स्वयं भगवतैव—

यावद् देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम्।
संसारः फलवाँस्तावदपदार्थोऽप्यविवेकिनाम्।। (११.२८.१२) इति।

एवं रीत्या चैत्यसंस्कारोद्बोधात्कामात्मकेन सङ्कल्पविकल्पात्मना मनसः प्रेरणया बुद्धीन्द्रियाणां विषयेषु प्रवृत्तिः पश्चाद् बुद्धिवृत्त्या तेषामनुग्रहस्तदनु विषयरसस्येन्द्रियैः पुनरपि मनसे समर्पणं परस्ताद् 'ईश्वरोऽहमहं भोगी'[1]ति रीत्याऽहङ्कारेण कर्तृत्वभोक्तृत्वाभिमान इति विमूढात्मनः प्रत्यक्षप्रक्रिया। यथा ह्यत्र ग्रन्थः—

अन्तःपुरं च हृदयं विषूचिर्मन उच्यते।
तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः।।
यथा यथा विक्रियते गुणाक्तो विकरोति वा।
तथा तथोपद्रष्टात्मा तद्वृत्तीरनुकार्यते।। (४.२९.१६-१७)
मन एव मनुष्यस्य पूर्वरूपाणि शंसति।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः।।

---

१. श्रीमद्भगवद्गीतायाम्-१७.१४।

सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः।
आयान्ति वर्गशो यान्ति ×× ××॥ (४.२९.६६,६८)

नाहं ममेति भावोऽयं पुरुषे व्यवधीयते।
यावद् बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान्॥ (४.२९.७०)

मन एव मनुष्येन्द्र! भूतानां भवभावनम्।
यदाक्षैश्चरितान् ध्यायन् कर्माण्याचिनुतेऽसकृत्॥ (४.२९.७७-७८)

युक्तात्मनस्तु—

इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः।
बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः॥ (११.१४.४२)

इत्यपरैव, सा तूपरिष्टाद् दर्शयिष्यते। इन्द्रियाणां प्राप्याप्राप्यप्रकाशकारित्व-विषयेऽप्यौपनिषदां राद्धान्तमेव वयमप्याकलयामस्तस्माद् घ्राणरसनत्वगिन्द्रियाणां स्वस्वस्थान एव गन्धरसस्पर्शग्रहणं चक्षुःश्रोत्रयोस्तु विषयस्थानमुपेत्यैव रूपशब्दाहरणमिति सर्वं सम्प्रतिपन्नम्।

इदमिन्द्रियप्रत्यक्षं निर्विकल्पकसविकल्पकमिति द्विधा। इन्द्रियार्थसन्निकर्षस्य प्रथमक्षणे यत्संसर्गानवगाहि भेदरहितं किञ्चिदित्यनुभूयते तन्निर्विकल्पकं, मनःसम्पर्कमात्रजन्यं सात्त्विकं बुद्धिवृत्त्याऽननुगृहीतं ज्ञानं, यत्तु बुद्धिकृतभेदभिन्नं राजसं द्वितीयक्षणे नामजात्यादियोजनासहितमवबुध्यते तत्सविकल्पकं प्रत्यक्षं व्यवहारपरमिति, यथा—

कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकञ्च यत्। (११.२५.२४)

विकल्पबुद्धींश्च गुणैर्विधत्ते। (११.२२.३०)

व्यवहृतये विकल्प इषितोऽन्धपरम्परया। (१०.८७.३६) इत्यादौ।

अत्र निर्विकल्पकमिति सामान्यजनप्रत्यक्षप्रक्रियाऽनुगुणं व्यावहारिकं निरूपितम्, यत्र ब्रह्मावबोधेन योगिनां तत्त्वज्ञानिनां भेदज्ञानं विलीयते तच्छुद्धचिन्मात्रावगाहि द्वितीयं पारमार्थिकं निर्विकल्पकम्, तदेव च—

२. सामान्येन्द्रियद्वारेण घटटादौ सन्मात्रसत्तावगाहिज्ञानिनां प्रत्यक्षम्—अत्र, पञ्चेन्द्रियैरुपस्थापितेऽपि पञ्चविषयात्मके सांसारिके बोधे विशुद्धमनसां योगिनां न ब्रह्मव्यतिरिक्तमन्यद्भानं भवति। घट-पटादौ सर्वत्रापि ब्रह्माकारा वृत्तिरेव जरीजृम्भते, भेदभिन्नमखिलं दृश्यजातं च 'नेह नानेति किञ्चने'[1]ति श्रुत्युक्तदिशा स्वयमेव

१. बृहदारण्यकोपनिषदि-४.४.१९।

विलीयते। अमीषां शरीरादिव्यवहारजातं तु बाधितानुवृत्त्यैव सङ्घटते। श्रीमद्भागवते तन्निरूपणं च यथा—

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते × × × ×।
(१०.८७.२३)

ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः।
संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः।। (११.१४.४६)

यद्विज्ञाय पुमान्सद्यो जह्याद् वैकल्पिकं भ्रमम्। (११.२४.१) इति।

अस्यैव पारमार्थिकनिर्विकल्पकप्रत्यक्षस्य 'तत्त्वमसी'[१]त्यादिमहावाक्यानामर्थावगमे सङ्गतिरुपपद्यते[२]।

३. सामान्येन्द्रियद्वारेण भगवद्भक्तानां 'वासुदेवः सर्वमिति' भावनाप्रत्यक्षम्—पूर्वनिरूपितज्ञानिप्रत्यक्षादिदं प्रमातृस्वरूपमहिम्ना किञ्चित्प्रक्रियाभेदमहिम्नैव व्यतिरिच्यते न तु परमार्थतया, ह्यत्रापि सामान्येन्द्रियद्वारेण सुखदुःखादिरूपार्थसार्थवतः संसारस्य भगवद्भक्तिजन्यभावनाप्राबल्येन 'वासुदेवः सर्वमिति' तत्त्वमात्रपरायणत्वात्। तन्निदर्शनानि चात्र सङ्क्षिप्य समानीयन्ते, यथा—

खं वायुमग्निं सलिलं महीञ्च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्राँश्च हरेः शरीरं
यत्किञ्चं भूतं प्रणमेदनन्यः।। (११.२.४१)

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः।। (११.२.४५)

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः।
अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा।। (११.१३.२४)

इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः।
बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः।। (११.१४.४२)

इत्यादीनि। अपि चात्र एकादशस्कन्धगते श्रीकृष्णोद्धवसंवादे, भगवद्विभूतिवर्णनात्मकः षोडशोऽध्यायः समग्रोऽप्यस्यैव निदर्शनभूत इति नः प्रमितिः।

---

१. छान्दोग्योपनिषदि-६.८.७, ६.१६।
२. द्रष्टव्योऽत्र 'वेदान्तपरिभाषायाः प्रत्यक्षपरिच्छेदः'।

४. योगराद्धदिव्येन्द्रियप्रत्यक्षम्—यन्न्यायनयेऽलौकिकप्रत्यक्षभेदेऽन्यतमं, 'योगजप्रत्यक्षं' युक्तयुञ्जानयोगभिन्नम्,[१] तदत्रास्मिन्भेदे परिगृह्यतेऽस्माभिरपि द्विविधम्, तत्र—

धारणाध्यानादिचिन्तासहकृतं प्रथमम्, समाधिजन्यमप्रयासनिर्वर्त्यञ्च द्वितीयम्। यदुक्तमस्मत्प्रस्थाने—

अनागतमतीतञ्च वर्त्तमानमतीन्द्रियम्।
विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः।।

(१०.६१.२१) इत्यत्र।

अत्र तपो योगधारणया ध्यानमहिम्ना वा मितयोगिनो गोलकनिरपेक्षतया सूक्ष्मेन्द्रियैर्यत्परिच्छिन्नकालपर्यवसायिनीं साक्षात्कृतिमातन्वते तस्यैतान्युदाहरणानि प्रादुर्भवन्ति शास्त्रेऽस्मिन्—

पृथोर्यज्ञेऽश्वहन्तारमिन्द्रमनेनैव चक्षुषा ददर्श तत्रभवानत्रिः—

तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा। (४.१९.१२)

इति व्यावर्णितदिशा, तथैव रेणुकायाः स्वपत्न्या मनश्च्यवनमनेनैव विज्ञातवाञ्जमदग्निः—

व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत्। (९.१६.५)

इत्येतानि तपोबलकृतप्रत्यक्षस्य निदर्शनानि। यद्यपीमेऽत्रिजमदग्न्यादयो युक्तत्वात्र मितयोगिनस्तथाप्यत्र परिच्छिन्नकालावसायिनी प्रत्यक्षप्रक्रियाऽमीषामित्युदाहरणत्वेनेह गृहीताः। एवं तपोजन्ययोगजप्रत्यक्षस्यान्येऽपि सन्दर्भाः—

भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम्।
ताभ्यामन्तर्हृदि ब्रह्मन् लोकान्द्रक्ष्यस्यपावृतान्।। (३.९.३०)

एवं ध्यानधारणाद्युद्भवानि प्रत्यक्षाण्यपि यानि श्रीमद्भागवते ह्युपवर्णितानि तान्येतत्प्रभेदपर्यवसायीन्येव[२]।

अथ समाधिजन्यं शश्वत्कालिकञ्च योगजप्रत्यक्षमपि—

---

१. योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।
युक्तस्य सर्वथा भानं चिन्तासहकृतोऽपरः।। (न्यायसिद्धान्तमुक्तावल्यां कारिका ६५)

२. 'ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते'। (२.२.१२) इत्यत्र धारणाप्रत्यक्षं, 'यदङ्घ्र्यभिध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्त्वमात्मनः' (२.४.२१) इत्यत्र च ध्यानप्रत्यक्षं दिङ्मात्रम्।

दृष्ट एवात्मनीश्वरे। (१.२.२१)

पश्यन्यदोरूपमदभ्रचक्षुषा। (१.३.४)

दुर्भगाँश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा। (१.४.१८)

अथो महाभाग भवानमोघदृक् समाधिनाऽनुस्मर तद्विचेष्टितम्। (१.५.१३)

भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले।
अपश्यत्पुरुषं पूर्वं मायाञ्च तदपाश्रयाम्।। (१.७.४)

स वा अयं यत्पदमत्र सूरयो
जितेन्द्रिया निर्जितमातरिश्वनः।
पश्यन्ति भक्त्युत्कलितामलात्मना
नन्वेष सत्त्वं परिमार्ष्टुमर्हति।। (१.१०.२३)

भगवान्वेद कालस्य गतिं भगवतो ननु।
विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा।। (३.११.१७)

इत्येवमादिभिः सन्दर्भैः सर्वहृद्यतामाधत्ते।

५. भगवदनुग्रहलब्ध-भगवज्जनानुग्रहलब्ध-दिव्येन्द्रियप्रत्यक्षम्—भगवत्कृपया सिद्धभगवज्जनकृपया च यदा भगवद्भक्तानां सामान्येन्द्रियेष्वेव काचिदीदृशी दिव्यशक्तिराविर्भवति यया तेऽप्राकृतानां श्रीमद्भगवद्विग्रह-लीलाधामादिकानां साक्षात्काराय सुतरां प्रभवन्तित दाऽयं भेदः स्वरूपमवकल्पते। श्रीमद्भागवतेऽत्र बहून्युदाहरणानि गोचरयितुं पार्यन्ते तेषु कानिचनेवात्र सङ्गृह्यन्ते, यथा—

(क) द्वितीयस्कन्धस्य नवमेऽध्याये—'तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं न यत्पदम्' (२.९.९)। इत्युपक्रम्य, 'तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः' (२.९.१७) इति पर्यन्तः, ब्रह्मकृत-भगवत्साक्षात्कार-सन्दर्भः।

(ख) ध्रुवप्रह्लादादिभगवद्भक्तानां भगवद्दर्शनप्रसङ्गाः।

(ग) दशमेऽवतरणप्रसङ्गे—'तमद्भुतं बालकमम्बुजेक्षणम्' (१०.३.९) इत्यारभ्य 'बभूव प्राकृतः शिशुः' (१०.३.४६) इत्यन्तं कथानकम्।

(घ) दशमे मृद्भक्षणलीलाप्रसङ्गे यशोदायै उपाहृतं भगवतो विश्वरूपदर्शनम् (१०.८.३७-४३)।

(ङ) दशमस्कन्ध एवोपवर्णितम्—

इति सञ्चिन्त्य भगवान्महाकारुणिको हरिः।
दर्शयामास लोकं स्वं गोपानां तमसः परम्।। (१०.२८.१४)

इत्यादिरूपेण श्रीकृष्णेन बल्लवजनेभ्यः स्वधाम्नः प्रत्यक्षीकरणम्।

(च) तथा चात्रैव, एकोनत्रिंशेऽध्याये यमुनाह्रदे अक्रूराय भगवता स्वकीयं विभूतिमद्विष्णुस्वरूपदर्शनप्रदानम्।

एवं भगवज्जनानुग्रहलब्धदिव्येन्द्रियप्रत्यक्षप्रसङ्गा अपि, भागवते—नारदाङ्गिरोभ्यां प्रत्तविद्यामाहात्म्येन चित्रकेतोः सङ्कर्षणदर्शनकथानकेन (६.१६ इत्यत्र वर्णितेन) 'व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम्' इति श्रीमद्भगवद्गीतासन्दर्भेण (१८.७५ इत्यात्मकेन) उन्नेयास्तत्तत्त्वमवजिगमिषुभिरिति सर्वमवदातम्।

मानसप्रत्यक्षम्—'अहं सुखी दुःखी वा, मनसि मे कामो मोहो हर्षो वा जागर्ती'त्याद्यन्तःकरणधर्मावबोधकं मानसप्रत्यक्षं सर्वसंवेद्यं नेन्द्रियार्थजन्य-मुक्तपूर्वरीत्या मनसोऽनिन्द्रियत्वात्। तत्रात्ममनःसंयोगाख्यः प्रथमः सुखदुःखादि-मनःसन्निकर्षलक्षणः संयुक्तसमवायश्च द्वितीय इति प्राभाकराभिमतपद्धतिर्नाङ्गीकार्या, अस्मत्प्रस्थाने सुखादीनां मनोवृत्तित्वाभ्युपगमात्। तथा च श्रुतिः—'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'। (बृहदारण्यकोपनिषदि-१.५.३)

अत्र च, 'अयो दहतीति' लाक्षणिकव्यवहारवदात्मनः सुखाद्याकार-परिणाम्यन्तःकरणैक्याध्यासाद् 'अहं सुखी'त्यादिव्यवहारसिद्धिः। बहुलतयो-पलभ्यमानत्वाद् ग्रन्थगतोदाहरणवाक्यान्यत्र नोपन्यस्यन्ते।

मुक्तात्मनां नित्यात्मप्रत्यवमर्शात्मकं केवलबोधमयं स्वरूपप्रत्यक्षम्—

अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम्।
अनादिमध्यनिधनं नित्यं वाङ्मनसः परम्।। (२.१०.३४)
यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह। (३.६.४०)
यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः। (६.१६.२३)

इत्याकरग्रन्थप्रतिपादितत्वान्नैकधा च 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यादिश्रुत्यन्तवचोभिश्च निरूपितत्वात्केवलानुभवानन्दात्मकस्वरूपसाक्षात्कारे न चक्षुरादीन्द्रियाणां न वा मनसोऽनुप्रवेशः शक्यस्वीकरणः। तस्मात्—

पश्यन्त्यात्मनि चात्मानम् × × × ×। (१.२.२१)
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च।
निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः।।

उपलभ्यात्मनाऽऽत्मानं चक्षुषेवार्कमात्मदृक्।
एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते।। (३.२७.१०-१६)

यथोल्मुकाद्विस्फुलिङ्गाद् धूमाद्वापि स्वसम्भवात्।
अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात्।।

भूतेन्द्रियान्तःकरणात्प्रधानाज्जीवसञ्ज्ञितात्।
आत्मा तथा पृथग्द्रष्टा भगवान्ब्रह्मसञ्ज्ञितः।।

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम्।। (३.२८.४०-४२)

ईक्षेतात्मनि चात्मानं यथा खममलाशयः।। (११.२९.१२)

इत्युपदर्शितदिशा ब्रह्मबोधानन्तप्रकाशेनोपहितबुद्धितत्स्थचिदाभासादिप्रत्यक्षाभ्युपगमसामग्र्या ब्रह्मापरपर्यायात्माकाराकारितवृत्त्याऽऽत्मप्रत्यवमर्शात्म-कस्यापरोक्षस्य ग्रन्थोक्तदिशा 'आत्मसंविदि'त्याख्यस्यास्य चरमप्रत्यक्षस्य सङ्गतिरित्यध्यवस्यामः। इत्थमिदम्प्रथमतया श्रीमद्भागवतप्रस्थानोपगता प्रत्यक्षप्रक्रिया प्रतिपत्तॄणां प्रमोदाय भगवत्कृपयाऽत्र यथामति प्रदर्शिता। अधुना शुद्धाद्वैतनयनिपुणस्य श्रीपुरुषोत्तम-चरणस्य प्रस्थानरत्नाकरीया प्रत्यक्षपद्धतिस्तुलनात्मकधिया सङ्क्षेपेणात्र विमृश्यते; यतोऽमी वाल्लभाः स्वकीयान् प्रमाण-प्रमेयादिसिद्धान् तान्भागवतशास्त्रसम्मतानेव भृशमुदीरयन्ति।

**प्रस्थानरत्नाकरोक्तप्रत्यक्षनिरूपणे श्रीमद्भागवतस्य संवादो विसंवादो वेति विमर्शः—**

प्रकरणमारभमाणस्तत्रभवान् गोस्वामिवर्यः प्रथमम् 'इन्द्रियात्मकं प्रमाणं प्रत्यक्ष'मिति प्रत्यक्षप्रमाणस्य किञ्चिदपूर्वं लक्षणं परिनिश्चिकाय। इन्द्रियाण्यत्र चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि मनश्चेति षट्सङ्ख्याकान्येवाङ्गीकृतानि। यद्यप्यत्रैव ग्रन्थे प्रमेयप्रकरणे 'तैजसाहङ्कारोपादेयत्वे सति ज्ञानक्रियान्यतरकरण'मिति लक्ष्मनिर्धारणपुरस्सरम्—

'तानि ज्ञानेन्द्रियकर्मेन्द्रियभेदाद्द्विधा, तत्र वागादीनि पञ्च कर्मेन्द्रियाणि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि'[1] ('प्रस्थानरत्नाकरे' प्रमेयरूपब्रह्मणः कोटित्रयनिरूपके कल्लोले द्वितीयतरङ्गे)।

---

१. गोस्वामिश्रीश्याममनोहरसम्पादितस्य 'श्रीवल्लभविद्यापीठ-कोल्हापुरतः प्रकाशितस्य 'प्रस्थानरत्नाकर'-ग्रन्थस्य (तृतीयसंस्करणे) २५३ पृष्ठे।

इति भागवतप्रस्थानप्रतिपादितार्थमेव प्रादीदृशत्तथाऽप्यत्र नवीनरीत्या मनःसहकृतं षट्कमेव समचीकलदिति मर्मास्य सम्प्रधारयितुं नेश्महे वयम्, कुतः? उभयत्र विरोधापत्तेः। तत्र हि न मनस इन्द्रियत्वेन ग्रहणमत्र चेन्द्रियपदेन ज्ञानेन्द्रियपञ्चकस्यैव स्वीकरणमित्यस्वारस्यमवसरति श्रीमदाचार्यस्य स्वकीयेष्वेव वचनेषु।

यदि 'प्रत्यक्षप्रक्रियाऽनुपयोगित्वान्न कर्मेन्द्रियाण्यत्र सङ्कलितानीति' श्रीमद्भिर्मेधिष्ठैस्तत्पक्षीयैः कैश्चित् समाधातुं प्रयत्येत, तदपि न मनोरमम्, तथात्वे—

'ज्ञानेन्द्रियात्मकं प्रमाणं प्रत्यक्ष'मित्यात्मकेन लक्षणेनैव प्रतिपिपादयिषितत्व-सार्थक्यम्। अथ मनस इन्द्रियत्वविषये स्वयमेव दोलायमानचित्तता, तत्रभवतो वेदान्तपरिभाषाकृत्समाधानस्य निराकरणाशक्यत्वात्—

'यद्वेन्द्रियत्वमनिन्द्रियत्वञ्चोभयम'स्त्विति। (तत्रैव, पृ. १२८) व्याहरणोप-लब्धेः श्रीमद्भागवतेऽपि मनोऽन्तःकरणभेदत्वेनैव परिगृहीतम्,

मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्।
चतुर्धा लक्ष्यते भेदो वत्त्या लक्षणरूपया।। (३.२६.१४)

इति प्रागुदाहृतग्रन्थप्रामाण्यात्तत्रैव च,

एकमेवान्तरात्मकमन्तःकरणं मनोबुद्ध्यादिभेदेन चतुर्धा लक्ष्यते। एकस्याने-कधा लक्षणे हेतुः 'लक्षणरूपया वृत्त्या भेदो लक्ष्यत' इति। वृत्तिभेदाद्भेदः वृत्तिश्च लक्षणरूपा'।

इति महाप्रभुवल्लभाचार्यकृत'सुबोधिनी'-ग्रन्थप्रामाण्यादिति प्रकरणमिदं चिन्त्यमूलम्।

निबन्धाऽनेनातः परं चक्षुरादीन्द्रियग्राह्यविषयविचारे महताऽध्यवसायेन 'अभाव'स्याविर्भावतिरोभावयोरन्तर्भावः प्रसाधितस्तमपि श्रीमद्भागवतप्रामाण्य-पराहतमेवोत्पश्यामः। एतत्तु युक्तिविधुरमपि सर्वविधाभावस्यानङ्गीकरणमिति। यथा हि, 'अत्र घटो ह्यत्र च घटाभाव' इत्याद्यनुभवस्थले न कश्चित्सामान्य उत्प्रेक्षाप्रवणो वा जनः—'अत्र घटस्याविर्भावोऽत्र च तस्य तिरोभाव' इत्यनुभवति तन्निपुणतरमुपपादितमपि प्रकरणमिदन्न प्रत्यक्षप्रतिपादनमुपकरोति।

इतोऽनन्तरं विद्वद्धौरेयेण श्रीमत्पुरुषोत्तमेन प्रत्यक्षकरणरूपाणामिन्द्रियाणां षड्विधव्यापारनिरूपणं निपुणमुपावर्णि, तत्रालौकिकव्यापारे 'योगज' इति तस्योपभेदो न प्रत्यक्षभेद इत्याम्नातस्तत्राप्यस्माकमियं जिज्ञासा समुन्मिषति—'योगिनां प्रत्यक्षे, स्थूलेन्द्रियत्वेनोपचरितानां शरीरस्थगोलकानामुपयोगोऽनुपयोगो वा? यद्युपयोगस्तर्हि सामान्यलौकिकव्यापारादत्र को विशेषः? यद्यनुपयोगस्तर्हि कथं

व्यापारत्वम्? व्यापारस्य च भवन्मते प्रत्यासत्तिरूपत्वाङ्गीकारात्प्रत्यासत्तेश्चेन्द्रिय-गोलकतत्सन्निकृष्टविषयरूपत्वादित्युभयतःपाशा रज्जुः।

यश्च श्रीमद्भागवतमनुसृत्य—'एकादशासन्मनसो हि वृत्तयः' (५.११.९) इति वृत्तिविचारोऽत्र कृतो, यच्च जाग्रदवस्थायां षड्विधेन्द्रियसन्निकर्षमात्रजन्यं ज्ञानं निर्विकल्पकं तदेव संशयादिबुद्धिवृत्त्यनुगृहीतं सत्सविकल्पकं ज्ञानं भवतीति न्यरूपि, तत्प्रागुक्तरीत्या वयमपि सम्प्रधारयामः श्रीमद्भागवतसमर्थितत्वादिति प्रमोदजनकमेवास्मत्कृते।

किन्त्वत्रोपसंहारे श्रीमद्भगवत्साक्षात्कारप्रणाली या सर्वथा प्रमेयबलादेव निर्धारिता तस्यानिन्द्रियग्राह्यत्वात्कथं प्रत्यक्षत्वसङ्गतिः इन्द्रियग्राह्यत्वञ्चास्य तद्वेत्तृणामनुभवसिद्धम्। अपि चैवंरीत्या 'दिव्यं ददामि ते चक्षु'[1]रिति गीताशास्त्रोक्तदिशा श्रीमद्भागवतदर्शने पुराणग्रन्थेषु भृशं निरूपितचरं दिव्येन्द्रियमयत्वमपि पराहतं भवति तन्नोचितं श्रीमद्भागवतशास्त्रे विविधकथासु निरूपितत्वादिति स्वाभिमतमतिविनम्रतयाऽऽवेदयामस्तस्मात्प्रागुपपादिता श्रीमद्भागवतप्रस्थानस्यैव पद्धती रुचिरेत्यवधार्य पर्यन्ते चेदमेव विनिवेद्य विरमामो यथा—

याऽस्माभिः किञ्चिदुन्नीता श्रीमद्भागवताश्रिता।
प्रत्यक्षपद्धतिः सैषा विद्वद्भिरनुमन्यताम्।। इति।



१. श्रीमद्भगवद्गीतायाम्-११.८।

# भगवद्गीतातिरिक्तान्यगीतासु गर्भितं ज्ञानम्

**सुश्रीसाधनात्रिपाठी**
शोधच्छात्रा
महात्मागान्धिकाशीविद्यापीठस्य, वाराणस्याम्



'गीयते इति गीता' कर्मणि क्तप्रत्यये स्त्रीत्वविवक्षायां रूपसिद्धिः। गुरुशिष्यकल्पनया अपि आत्मविद्योपदेशात्मके प्रतिष्ठिता भगवद्गीता-रामगीतादिभेदैर्बहुधात्वेन भिन्ना अपि, भगवद्गीता एवगीतात्वेन प्रसिद्धा। अत्र प्रसङ्गेनोपात्तविषये भगवद्गीतातिरिक्तगीतासु को विषयः कश्चैषामुपयोग इति शङ्का जायते। तदुक्तं महाभारते—

भारते सर्ववेदार्थो भारतार्थश्च कृत्स्नशः।
गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता।।
कर्मोपास्तिज्ञानभेदैः शास्त्रं काण्डत्रयात्मकम्।
भक्तिस्तूपासनाकाण्डात्तृतीयान्नातिरिच्यते।। इत्यादि।

एवं भगवद्गीतातिरिक्त महर्षि व्यासप्रणीताध्यात्मरामायणान्तर्गता रामगीता,महाभारताश्वेधिकोक्ता ब्राह्मणगीता, देवीभागवतोक्ता देवीगीता, वैष्णवश्रीमद्भागवतोक्ता गोपीगीता, शिवपुराणान्तर्गता शिवगीता, सूर्योपासनसम्प्रदायगता सूर्यगीता, गाणपत्यागमगता गणेशपुराणोक्ता च श्रीगणेशगीता इत्यादयो बहव्यो गीताः प्रतिष्ठन्ते। एताः सर्वाश्च अध्यात्मविद्याप्रवर्तिकाः ज्ञान-विज्ञानयुक्ताःसत्यः मानवकल्याणपराः सन्ति। एतासां सर्वासामालोडनेन नव-नवानां ज्ञानानाम् उन्मेशोऽअद्यतनीयसमस्याणां समाधानं च दृश्यते।

वस्तुतस्तु एतासु गीतासुवेदविज्ञानं, सनातनहिन्दुसार्वभौमधर्मस्य रहस्यानि, गभीरमध्यात्मतत्त्वातिरिक्तं महर्षीणां ज्ञानगौरवं, सर्वजनसुखाय शान्तवे चोपायाः निर्दिष्टा विद्यन्ते। किञ्चात्रनिर्गुणब्रह्मणोपासनरहस्यं, सगुणोपासनमहत्त्वं,अधिभूतत्त्वादिसहितं वेदस्य साररहस्यं गर्भितं विद्यते। यथा

हि ज्ञानकाण्डस्य विघ्नोऽहंकारः, उपासनकाण्डस्यान्तरायः साम्प्रदायिको विरोधस्तथैव कर्मकाण्डस्यान्तरायो दम्भ अस्ति। अतः गीतानां मनन-चिन्तनेन कर्मकाण्डिनो दम्भं परिहृत्य भक्ता जायन्ते, उपासकाश्च स्वस्वाशयं सम्प्रदायविरोधञ्च परित्यज्य उदाराः परमभक्ताश्च जायन्ते। तत्त्वज्ञानिभ्यः कृते त्वेताः गीता उपनिषत्सारभूतास्तु सन्त्येव।

इत्थमुपर्युक्तगीतारिक्तासु 'श्रीसन्यासगीता', 'श्रीगुरुगीता' अप्युपलभ्यन्ते। आचार्यबलदेवोपाध्यायैः प्रणीते 'संस्कृतसाहित्य का वृहद् इतिहास' इति ग्रन्थस्य तृतीये भागे पञ्चदशगीतानां विषयो विवरणञ्च प्राप्यते। पूर्वं धर्ममहामण्डलेन भगवद्गीतासप्तशतीगीतातिरिक्तं सप्तगीतासु विष्णुगीता, सूर्यगीता, शक्ति-देवी वा गीता, श्रीधरगीता, शम्भुगीता, गुरुगीताश्च प्रकाशिता आसन् परमद्यवे ताः सर्वा नोपलभ्यन्ते। यद्यपि तत्तद्गीतासु तत्तद्देवोपासनं तेषां पारमार्थिकस्वरूपं च विवृतं दृश्यते परं विषयोपयोगिमुख्यत्वेन भगवद्गीतातिरिक्तं सप्तशतीगीता, शम्भुगीता, सूर्यगीता च सर्ववर्ण सर्वसम्प्रदाय स्त्रीपुरुषसमानाधिकारेणात्यन्तोपयोगिन्यः समस्यानां समाधानाय स्पष्टं मार्गं निर्दिशन्ति।

किञ्च, विभिन्नप्रवृत्तिको लोकः स्व प्रवृत्ति-रुचिरत्व-अधिकारित्वभेदेन उपासकानां उपासनासु साहाय्यार्थं दिव्यदृष्टयो महर्षयो निर्गुणब्रह्मणः पञ्चसगुणोपासनानां निर्देशश्च विहितः। ताश्च शक्ति-शिव-विष्णु-सूर्य गणपतयो विद्योतन्ते। अनादिकालादेव एतेषां पञ्चरूपेषु सगुणब्रह्मण उपासनं जायतेस्म। भगवतो रामकृष्णयोरुपासनलीलाविग्रहस्योपासनमेतदन्तर्गतं वरीवर्ति। स्वरुच्या स्वभावेन वा इष्टदेवस्वरूपस्य ध्यानेन चित्तः सहजरूपेण समाहितमेकाग्रं च भवति। अत एवोक्तं पातञ्जल योगसूत्रे-'ईश्वरप्राणिधानाद्वा'[1] इत्युक्तं व्यासेन भाषितम् च 'प्रणिधानाद्भक्तिविशेषादावर्जित—ईश्वरस्तमनुगृहणात्यभिध्यान-मात्रेण। तदाभिध्यानमात्रादपि योगिनःसमाधिलाभः समाधिफलं च लभन्ते इति।

तत्र भवद्भिः सर्वैरनुभूयत एव चित्तस्यास्थैर्यम्। अनेकजन्मप्रयासेनापि चित्तस्य क्वचित् वश्यत्वं न लभते। परं सगुणसाकारब्रह्मणि सर्वथा चित्तस्य सन्नियोजनेन चित्तस्य समाधानमेकस्मिन्नेव जन्मनि भगवतोऽनुग्रहाल्लब्धुं शक्यते अयं सुकरोपायो योगस्य। एतेनैव सगुणोपायेन भक्ति-ज्ञानयोगात् अकारणकरुणावरुणालस्य परमेश्वरस्याहैतुकी कृपानुरोधाच्च सर्वं समाधीयते,

१. योगसूत्रे १.१२३।

सर्वे च दोषा लीयन्ते, सर्वैश्वर्यञ्च लभन्ते। तस्मादुक्तं शक्त्युपासनप्रकरणे रुद्रयामलतन्त्रे—

यत्रास्ति योगो नहि तत्र भोगः
यत्रास्ति भोगो न हि तत्र योगः।
श्रीसुन्दरीसाधनतत्पराणां
योगश्च भोगश्च करस्थ एव[1]॥
श्रीशिवपदाम्भोजयुगार्चकानां
योगश्च भोगश्च करस्थ एव॥ इति वा।

मनुष्यस्य भौतिकशरीरे आकाश-वायु-अग्नि-जल-पृथ्वी इति पञ्चतत्त्वानां सन्निवेशः। एतत्तत्त्वान्तर्गतमेवाधिदेवाः सत्त्वस्वरूपाः जीववत् रूपं दधानां अपि लीलाविग्रहा भवन्ति। ते च सर्वं-कर्तुं सदा समर्थाः सर्वैश्वर्य-सर्वमाधुर्यादिगुणोपपन्नाः भक्तानुग्राहकाः। एवं यस्य स्वरूपस्योपासनायां यस्य यत्र स्वाभाविकी गतिस्तेन ते देवाः शीघ्रं प्रसीदन्तिः। यस्य साधकस्य योह्यभीष्टस्तस्य रूपस्य ध्यानं, मन्त्रजपः, स्तुतयश्चैते सर्वे मन्त्रयोगस्योपासनेन कर्तव्यः।

शक्तिगीतायां सप्ताध्यायेषु शक्तेर्वैशिष्ट्यं तया जगतां सर्जकत्वं, देवैः प्रार्थनया सगुणस्वरूपावस्थानं, देवस्तुतौ तस्या विविधरूपत्वञ्च वर्णितं दरीदृश्यते। तत्र च दयामयी, अखिलशक्तिरूपा, देवमाता वेदमाता वा त्रिगुणा दरीदृश्यते। त्रिगुणात्मिका, विष्णवादिपञ्चात्मकदेवरूपादि रूपैश्च चित्रिता। तद्यथा—

देवी प्रपन्नार्तिहरे! शिवे त्वं
वाणीमनोबुद्धिभिरप्रमेया।
यतोऽस्यतो नैव हि कश्चिदीशः
स्तोतुं स्वशब्दैर्भवतीं कदाचित्[2]॥

अयंभावः-देवा ऊचुः—हे महादेवी! भवती वण्या-मनसा-बुद्ध्या च त्वमगोचरा। अतोऽस्मिन् जगति एतादृशः कोऽपि नास्ति यः शब्दैर्भवतीं स्तोतुं शक्नुयात्।

---

१. रुद्रयामलवचनम्; २. शक्तिगीतायाम् १.४१।

अन्यच्च—

परात्परा त्वं परतत्त्वरूपिणी
स्वतीत्य तत्त्वान्यखिलानि राजसे।
सच्चित्साहाय्यत आत्मना पुन
र्दाम्पत्यरूपं युगलञ्च बिभ्रति॥
तनोषि शृङ्गारमयीं समन्ता-
ल्लीलाललामान्वितसृष्टिमेताम्।
स्वानन्दसन्दोहभरप्रकाशा-
मनाद्यनन्तां जगदम्बिकेऽलम्[1]॥

हे मातः। भवती तत्त्वातीता सती परमतत्त्वरूपिणी असि। भवती एव पुरुष-स्त्रीस्वरूपं दधाना स्व चिद्-सत् स्वभावसाहाय्येन युगलं रूपं बिभ्रती स्वपरमानन्दस्य प्रकाशिका शृङ्गारलीलामयी सती अनाद्यनन्तसृष्टिलीलां प्रवाहयसि। किञ्च—

निष्कामयज्ञावलिनिष्ठसाधकान्
विराट्स्वरूपे च विधाय दर्शनम्।
श्रुतेर्महावाक्यमिदं मनोहरं
करोष्यहो 'तत्त्वमसीति' सार्थकम्[2]॥

हे मातः! भवती स्वज्ञानिभक्तान् सच्चिदानन्दरूपेण उपासकभक्तान् ईश्वरीरूपेण, तथा निष्काम-यज्ञनिष्ठकर्मभक्तान् विराट्मूर्तिरूपेण दर्शनं विधाय 'तत्त्वमसि' इति महाश्रुतिवचनं चरितार्थयसि।

एवं देवान् स्वरूपदर्शनं विधाय मनोवाञ्छितप्रश्नकर्तुमाज्ञां ददाति, तदनु देवानां जिज्ञासा महादेव्या आज्ञापनमत्राध्याये च निरूपिता विद्योतन्ते। एवं द्वितीयाध्याये चित्कलाविज्ञानयोगः, तृतीयाध्याये वेदकाण्डत्रययोगविज्ञानं, चतुर्थाऽध्याये मन्त्रशक्तिविज्ञानयोगः, पञ्चमाध्याये कर्म्मविज्ञानयोगः, षष्ठाध्याये ज्ञानविज्ञानयोगः, सप्तमाध्याये विराड्रूपदर्शनं विभूतियोगश्च विवृतो विद्यते।

अद्यत्वे आधुनिके युगे सर्वत्राशान्तिः, विविधा अनुपपत्तयः, चरित्रह्रासः, लोलुपत्वमुत्कोचश्च, हंत्या-लुण्ठनं, भयश्च सर्वत्र समाजे प्रसृतो दृश्यते।

---

१. शक्तिगीतायाम् २.४४-४५; २. शक्तिगीता १.६२।

देविस्वभावस्तु दुष्टानां निग्रहो भक्तेष्वनुग्रहः, साधकानां मनोवाञ्छितफलप्रदानञ्च विद्यते, किञ्च सप्तशत्यां 'यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्' इति वचनेन सुमेधासुरथयोर्भिन्नप्रकृतित्त्वेन मेधाऋषेरनुग्रहेण च मन्त्रप्रसादे सुमेधसे मुक्तिः सुरथाय च अखण्डा भुक्तिर्ददाति देवी। तद्वच्छक्तिगीतायाः फलश्रुतौ—

शक्तियागविधानेन दुःखी दुःखाद्विमुच्यते।
धनार्थं लोलचित्तेभ्यो महालक्ष्मीः प्रसीदति।।
सुपुत्रं प्रलभेयातां पुत्रहीनौ हि दम्पती।
राजद्वारे तथा देवा! साफल्यं जायते नृणाम्।।
आधिव्याध्यपनोदार्थममोघे स्तौ महौषधी।
श्रवणं मननं कार्य्यमस्या अध्ययनन्तथा[१]।।

अतः शक्तिगीताया आश्रयणे तत्सिद्धान्तसमीक्षणेनाचरणेन चाधुनिक समग्रसमस्यानां समाधानं जायते। एवं समग्रगीतानां लोककल्याणाय सर्वविधदुःखनिवृत्तये चोपायाः सन्दिष्टा दृश्यन्ते। एतद्धिया शम्भुगीतासूर्य्यगीतयोश्च सम्बन्धे किञ्चिद् विचारयितुं प्रवर्तते।

## शम्भुगीता

समस्तविरोधानां यत्र समाहारोऽसौ शिवः। शिवयति इति शिवः, कल्याणम्। देवाधिदेवो शम्भुर्जगतां कल्याणाय प्रवर्तते। समेषां जीवानां वर्णानां च तत्र गतिः।'ऋते ज्ञानान्नमुक्तिरि'त्यनुरोधात् 'ज्ञानमिच्छेन्महेश्वरात्', 'ज्ञानकामस्तु गिरिशमिति' स्मृतिवचनाच्च ज्ञानस्य प्रकाशस्य च परमाश्रयः शिव एव। स च लघुनोपायेन अल्पश्रमेण च आशु एव जीवाननुगृह्णाति। अतो ब्रह्मज्ञानातिरिक्तमपि सर्वमभीष्टं साधयति, ब्रह्मरेखाञ्चान्यथायते। अतः स सर्वकाले, सर्वदेशे विदेशेषु च पूज्यः। भगवता व्यासेन शम्भुगीतायामेवं स्थाप्यते।

अस्यां गीतायां सप्ताध्याया विलसन्तितमाम्। तत्राध्यायेषुं प्रथमाध्याये धर्म्मनिरूपणम्, द्वितीयाध्याये पिण्डसृष्टिनिरूपणम्, तृतीयाध्याये चक्रपीठशुद्धिनिरूपणम्, चतुर्थाध्याये दैवलोकनिरूपणम्, पञ्चमाध्याये अध्यात्मतत्त्वनिरूपणम्, षष्ठाध्याये भगवद्भागवतसम्बन्धनिरूपणम्,

१. शक्तिगीता ७.१५९-६०, १६२।

सप्तमाध्याये च शिवलिङ्गनिरूपणमित्येते विषयाः सूक्ष्मतया निरूपिता विद्योतन्ते। अतोऽत्र एक-द्वि-अध्यायाधारेण तत्र निरूपितो भावो विविच्यते।

अस्ति किल दर्शनस्य 'अण्ड-पिण्ड'-सिद्धान्तः। 'यद् ब्रह्माण्डे तदेव पिण्डे' इति वर्तते। ब्रह्माण्डो ब्रह्माण्डात्मकपिण्डेन, पिण्डः तत्तद् जीवजगतः स्वरूपेण। यथा ब्रह्माण्डे विविध नद-नदी समुद्राःसन्तिष्ठन्ते, विविध देव-देवी-ग्रहा-विद्यन्ते, पर्वत भूखण्डादिसहिता प्रकृतिर्विलसति तथैव मनुष्यजीवादीषु पिण्डे सर्वमेतद् प्रतिष्ठितम्। पञ्चभूत-पञ्चतन्मात्र, मनःसहितानि कर्म-ज्ञानेन्द्रियाणि तत्तदिन्द्रियेषु तत्तद् देवाः, फलदात्रित्वेन ग्रहाः, अस्थि-मज्जा-रक्त-शिरा-वीर्यादिरूपा धातवः, अहङ्कारः, बुद्धिः प्रकृतिर्विद्यन्ते तद्वदेव ब्राह्मण्डात्मकशिवशरीरे सर्वमेतत् समाविष्टा वर्तन्ते। अत अण्डपिण्डसिद्धान्तः प्रतिष्ठते, यद्येवं न स्यात्तदा योगिषु साधकेषु देवभावनैव न स्यात् दृश्यते चैवम्। अतो यद् पिण्डे तदेवब्रह्माण्डे इति सिद्धान्तः सङ्गच्छते। अहङ्कारे जीवभावना, बुद्धौ प्रकाश (ज्ञानं) भावना, ज्ञानेन्द्रियाणि पञ्चतन्मात्र पञ्चमहाभूतानि च वर्तन्ते। एतदेव रहस्यं शुम्भुगीताया द्वितीयाध्याये विवृतः सिद्धान्तः आगमेष्ववपि बृंहितो विद्यते। अध्वज्ञानान्तर्गते जीवे भावोऽयं गतार्थो यदिस्यात्तर्हि समस्यानां समाधानं सुतरामेव भवेत्। अतो 'यत्र-तत्र गोष्ठीषु, दूरदर्शन-समाचारादिसु च माध्यमेन सिद्धान्तोऽयममवश्यं प्रकाशितो भवेत् येन नूनमेव समस्यानां समाधानं भवेत्। तदुक्तं तत्र—

अत्र मत्स्थदेहेषु दैवसम्पत्तिधारिणः।  
प्रवेशं कर्तुमर्हन्ति जीवाःसौभाग्यशालिनः॥

तत्त्वज्ञा एव ते देव्याः सम्पत्तेरधिकारिणः।  
नूनं धर्मस्य नित्यस्य सार्वभौमस्वरूपकम्[१]॥इत्यादि।

शम्भुगीता हि पितृ-शिवसम्वादरूपेण भगवता व्यासेन प्रणीता। अत्र 'चक्रपीठशुद्धिनिरूपणमि'त्यध्याये भगवतश्चक्रमयशरीरं विवक्षितं विद्यते। एतस्मादेवागमेषु षट्चक्रनिरूपणं दृश्यते। शरीरमपि षट्चक्राधीनम्। तानि च क्रमशो मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्धि-आज्ञानि। आज्ञाचक्राधारादूर्ध्वं शिवशक्त्योरमृतस्थानं सहस्रारं विद्यते। तत एवामृतनिष्यन्दो निरन्तरं श्रवते। आज्ञाचक्रभेदिनो योगिनःसाधका वा खेचरीमुद्रया जिह्वाधारेण तदमृतं पीयन्ते येन केचन जीवमुक्ताः केचन च

१. शम्भुगीतायां २.६८.६९।

नित्यमुक्ता जायन्ते। एतस्याधारः प्राणायामक्रिया। प्राणायामाभ्यासेन प्राणस्याधानं कुम्भकरीत्या मूलाधारे नियोज्यते। तत एव त्रिवलयाकारायां सर्पिणीव महाकुण्डल्यां सुप्तावद् वर्तते। कुम्भकेन मूलाधारे स्थितो प्राणः (वायुः) वायुनिरोधेन जागर्ति। जागृतायाञ्च कुण्डलीन्यां फणिसर्पवत् सा ऊर्ध्वं गच्छति येन स्वाधिष्ठानचक्रमाहतो भवति। शास्त्रोक्तपद्धत्या तत्र ध्यानस्थापनेन तच्चक्रं भिद्यते। एवं मणिपूरणे अनाहतः ततो विशुद्धिचक्रं ततश्चाज्ञाचक्रं क्रमशो भिद्यन्ते। एवं सहस्रारे वायोराधानेन तच्चक्रान्निष्यन्दितममृतं पीत्वा साधकः कृतकृत्यो भवति। अयमेव सिद्धान्तः चक्रपीठशुद्धिनिरूपणाध्याये निरूपितो विलसति। एतदेव स्वारस्यं दृश्यतान्नाम्—

क्रमशो वस्तु साहास्यं समासाद्योत्तरोत्तरम्।
गच्छन्त्यसंशयं पुण्यामार्य्यकोटिं समुन्नताम्।।
ततोऽप्यार्यपदं प्राप्ता शुद्धयोश्चक्रपीठयोः।
अधिकारीभवन्तो हि साहाय्याच्छुद्धयोस्तयोः।।
प्राप्य मामधिगच्छन्ति मत्सायुज्यं न संशयः[१]।। इत्याद्युक्तम्।

एवं समस्तौघग्रस्तेऽस्मिंल्लोके यद्येवं लोकशिक्षणं स्यात्तदा नूनं लोकस्य विवक्षितो भावः पूर्तिमियात्।

यद्यपि शम्भुगीतायां बहवोरहस्यगर्भिताः विषया विद्यन्ते येषामुद्घाटनेन जिज्ञासुसहितः सुखापेक्षीजीवः कृत-कृत्यः स्यात्तथापि लेखकलेवरदृष्ट्या विचारोऽयमत्रैवावसीयते।

पुनरेका गीता या सूर्य्यगीता रूपिणी तत्सम्बन्धेऽपि संक्षेपेण विविच्यते किञ्चित्—भारतीयजीवनपद्धतौ सर्वजनहिताय सर्वजनसुखाय च पञ्चदेवानामुपासनं विशिष्टतामादधाति। तत्र पञ्चदेवाधिकृता विष्णु-शिव-शक्ति-गणेश-सूर्य्या इति गीतासूपदिष्टाः, तदधिकृत्य विष्णुगीता-शम्भुगीता शक्तिगीता-श्रीधरगीता (गणेशगीता)-सूर्यगीता च भगवता कृष्णाद्वैपायनेन प्रणीताः। एताः सर्वाऽपि गीता श्रीमद्भगवद्गीता इवोपनिषत्स्वरूपाः। एतेषु पञ्चदेवेषु सूर्य्यः प्रत्यक्षदेवता भवति। सूर्यः किलास्य सौरमण्डलस्यास्ति अधिष्ठाता। परं सूर्य्योपासनायां स एव सर्वोत्कृष्टत्वेन सर्वदेवमयत्वेन वर्णितो विद्यते। सूर्य्य एवहरिहरादिरूपेषु अभिव्यक्ती भूय निखिलं ब्रह्माण्डं सृजते। यो हि सूर्य्यमधिकृत्य तदर्पितभावस्तस्य सर्वे मनोरथाः पूर्णतां यान्ति।

---

१. शम्भुगीतायां ३.१०.११ $\frac{१}{२}$।

किञ्चासाध्यरोगाणामप्यपहर्ता सूर्य्यः। अत गायत्री-सावित्री—सविता सूर्य एव। अत उक्तं भवति वेदे—

ॐ चित्रं देवानामुगादनीकञ्च चक्षुर्मित्रस्य वरुणस्याग्नेः। अप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च।

आकृष्णेन रजसा वर्त्तमानः निवेशयन्नमृतं मर्त्यञ्च।
हिरण्येन सविता रथेन देवो याति भुवनानि पश्यन्।। इत्यादि।

एतैर्मन्त्रैः सूर्यस्य जगतोऽऽत्मात्वं जगद्रक्षकत्वञ्च व्यज्ञते। एवं भगवद् गीतावत् सूर्यगीताऽपि तापत्रयोन्मूलिनी एका उपनिषद्। अत्रापि अधिदैव, अधिभूताध्यात्मभावानां च मनः समाधानकारि विवरणं वरीवर्ति।

सूर्यगीता हि सूत-व्यास-सम्वादरूपेणोत्पन्ना। अस्या मननेनाश्रयणेन च कतिपये वैज्ञानिका गूढरहस्या उद्घाटन्ते। आधुनिका हि वैज्ञानिकास्ततो लोकरहस्यज्ञानाय सन्ति किलानुरक्ता यद् पृथिव्यतिरिक्तग्रहेषु जीवनं वर्तते न वेति। सूर्यगीतायाञ्च सूर्यलोके सप्तर्षीणां गमनं तत्र षड्ऋतूनां च वर्णनं दरीदृश्यते। तथा हि—

जगतां हितमिच्छन्तः पुरा सप्तर्षयो ध्रुवम्।
सौरलोके विभुं सूर्यं द्रष्टुमासन्नुपस्थिताः।।
तेजोमयोऽपि लोकः सः शैत्यसौन्दर्यपूरितः।
ऋतवः षट् विराजन्ते सदा तत्र समं मुदा[1]।। इति।

सप्तर्षयो हि लोकमङ्गलाय सूर्येण कर्म, उपासन-ज्ञानानां रहस्यं वेत्तुं उत्सुका अभूवन्। अस्मिन्नेव प्रसङ्गे तैर्मुक्ति-भुक्तिलाभाय प्रश्ना अपि अकार्षुः। इयं गीता तत्समाधानाय विहिता। अत्र समग्रज्ञान-विज्ञान-लोककल्याणाय प्रभूततत्त्वानि खगोलविज्ञानानि च विद्यन्ते इति शम्।

●

१. सूर्यगीता २.६-७।

# महिमाचार्यस्य सूक्ष्मा दृक्

**प्रो. रेवाप्रसादद्विवेदी**
इमेरिटस प्रोफेसर (संस्कृतस्य)
काशी-हिन्दू-विश्वविद्यालये
वाराणस्याम्



सा ह्येव शारदाभूर्जनिमदात् काव्यमीमांसिषु श्रेष्ठत्वेन समाहृताय महिमाचार्याय यस्यामजायेताम् आनन्दवर्धनः (ई. ८५०) अभिनवगुप्तश्चे महाप्रतिष्ठावाचार्यैऽ(१०००-११००)-त्येतौ। विस्मारिता एताभ्यां पूर्वापरवर्त्तिनः प्रायः सर्वेऽपि साहित्यशास्त्रप्रणेतारः। सांप्रतं नास्ति प्रतिष्ठा भरतस्य (३०० ई.पू.), न दण्डिनः (६३० ई.), न भामहस्य (७०० ई.), नोद्भट-वामनयोः (८०० ई.), न राजशेखर-कुन्तकयोः नापि च रुद्रट-क्षेमेन्द्रयोः। अभिनवगुप्तमम्मटयोर्मध्यवर्त्ती महिमाचार्यः पुनर्दृढं विरुद्धोऽपि श्वसित्येव, हृदयदर्पणकर्त्तर्भिट्टनायक इव नासौ विलोप-विलं प्रवेशितः। नूनमस्त्येव तत्र सत्त्वम्। तच्चाकलनीयमेवाऽऽधुनिकैः। तथा च महिमाचार्यस्य काव्यलक्षणम्।

**काव्यलक्षणम्**

महिमाचार्यस्य काव्यलक्षणमेवंस्वरूपमस्ति—

रसात्मकोऽर्थसमूहः काव्यम्।

इति। अर्थपदेन द्वितयमप्यत्र विवक्षितम् 'शब्दना-करणात्मा शब्दरूपोऽर्थः, तच्छब्दनयाऽधिचित्तमारुढोऽर्थश्च। अनयोराद्यः साधनभूतः, द्वितीयश्च प्रथमार्थजन्यः साध्यभूतः। यश्चासौ रसः स आनन्दरूपः। आनन्दश्च-मत्क्रियात्कम्भावो ब्रह्मेत्यनर्थान्तरमित्यागमिकाः। तथा च स्मृतिः (अग्निपुराणे ३३९.१)—

अक्षरं ब्रह्म परमं सनातनमलं परम्।
वेदान्तेषु वदन्त्येकं चैतन्यज्योतिरीश्वरम्।। इति।

स एष आगमो: व्यपदिश्यते 'अहमागम' इति तत्रैव पुराणे। अस्य प्रकाशे सामग्रीभूता भवन्ति श्लेषप्रसादादयो गुणाः, उपमादयो विच्छित्तयः, विभावादियोजना च। एते हि धारासम्प्रदाये भोजादिभिरुक्तिपदेन परिभाष्यन्ते। तत्र या गुणोक्तिस्तस्याः संज्ञा स्वभावोक्तिरीति, या ह्युपमादि विच्छित्त्युक्तिस्तस्या संज्ञा वक्रोक्तिरिति, या च विभावाद्युक्तिः सेयमुक्ता रतोक्तिरिति। तत्र रसायोक्तिरिति क्रियते व्युत्पत्तिः।

ध्वनिवादिभिस्त्वन्यथा प्रस्थीयते, किन्तु त इमे सर्वेऽपि बौद्धाः श्रा आनन्दाद्, सा अभिनवगुप्तादा च मम्मटात्। तत्र आनन्दो वैदिकानामानन्दं वर्धयति (छिनत्ती-)त्यानन्दिवर्धनः, अभिनवगुप्तः शिराऽद्वयी ब्रह्मचारीति गुप्तेन रूपेणाभिनवः, यश्च मम्मटः सोऽपि पञ्चशुकत्वावच्छिन्नभावात् किञ्चिदेवाधिकः। अभिनवत्वं चास्य बौद्धत्वेनैव। अन्यथा तु भामहोऽपि शैवः, स्वकीयेऽलङ्कारग्रन्थे सर्वज्ञं प्रतिदर्शितादरत्वात्। सर्वज्ञत्वं च मारजितो भगवतोबुद्धस्य प्रसिद्धं तथैव शिवस्यापि—'सर्वशः शिवबुद्धयोरि'-ति कोषाच्च।

यथा हि गुणा भोजस्य मतेऽलङ्कारत्वेनाभिमतास्तथा रसादयोऽपि 'रसस्य प्राधान्यान्नालङ्कारतेति यो ध्वनिवादिनां हठः सोऽत्र दूरं परित्यज्यते, अन्यथाऽसम्बद्धत्वमापतेद् रसादीनां काव्येन। या च रसभुक्तिः साऽकाव्यान्न भूत्वा केवलात् काव्यादेव भंक्तीत्यन्वयव्यतिरेकाभ्यां जन्यजनकभावः सिद्ध एव काव्यरसयोः। जनने च मूलं भवति काव्ये विभावादीनामुपलब्धिः। तदिदं काव्यगतं यद्वैशिष्ट्यं तस्य .गणता कुत्रापि काव्यधर्मेषु कर्तव्यैवेति दण्डिप्रभृतिभिस्तत्रालङ्कारत्वमस्थितम्। काव्यशास्त्रस्येतिहासे रसेऽलङ्कारत्वं परिहीर्षन्ति केवलाध्वनिवादिनः।

अस्ति चानन्दवर्धनस्यैव विरुद्धाऽपि प्रतिज्ञा। स हि वक्ति—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रतादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥ (ध्व. २.५) इति।

अत्र या वृत्तिर्यच्च तत्राभिनवगुप्तस्य लोचनम्, तदुभयं 'रसदिति पदस्य प्रयोक्तारं दण्डिनं न स्मरति। लोचनं पुन-र्भामहमुद्भटं च नाम्ना द्विर्द्विः स्मरति, तथापि तयोः कारिके नोद्धरति। दण्डी पुनः प्रथमतम आचार्यो यो रसवत्पदं

प्रयुङ्क्ते। तत्रोदाहरणत्वेन चाष्टावपि रसान् प्रस्तवीति। तस्य रसवदिति यत् पदं तद्धि विशेषणपदम्, विशेष्यमस्य भवति 'वच' इति 'रसवद् वच' इति तस्य कारिकान्वयः। नास्यार्थो रसतुल्यमिति। मतुप्प्रत्ययसाध्यैषा परिभाषा, नास्त्यत्र वतेखसरः। अथापि (ध्वन्यालोकारिका २.५) रसवदिति पदम् प्रौढ्या तुल्यार्थपरत्वेनयोजयति, साहङ्कारं च प्रतिजानीते 'इति मे मति'-रिति।महानेषोऽन्यायः। लोचनकृन्महामाहेश्वराचार्योऽभिनवोऽपि शास्त्रसिद्धान्तेषु परिभाषाणामन्यथाकारान्यायेऽत्रमौनव्रती। अत्र 'काञ्ची-स्थस्याचार्यस्य दण्डिनः कश्मीरस्थैर्दविष्ठैरेभिः काव्यादर्शो न परामृष्टः इति वक्तुं न शक्यम्, आनन्दवर्धनो हि वारं वारं 'काव्यलक्षण'-कोरेः' इति 'काव्यलक्ष्मविधाविभि'-रिति यत् परामृशति तत्र 'काव्यलक्षण'-पदेन दण्डिनः काव्यादर्शमेव परामृशति, द्वितीयमिदं नाम काव्यलक्षणस्य यत् 'काव्यादर्श इति। तदेव तु प्रसिद्धिं प्रापदित्यन्या कथा, यथा भामहग्रन्थस्य मुख्यं नाम 'भामहालङ्कार' इति 'काव्यालङ्कार'-रूपेण तु तस्य प्रसिद्धिः। दण्डिवः काव्यादर्शे दृष्टे सोऽयं सम्पूर्णोऽप्यन्यायः स्पष्टो भवति।'मे मति'-रिति वादिनि 'तर्हि अन्यस्य का मति'-रिति पृष्टे दण्डिनो ग्रन्थ एवोपस्थापयितव्यो जायते, स च विषयः परिहास्ये-ति शारदादेश्यावुभावपीमावाचार्यौ शिष्टामाचारं जहीतः, स्वैरं च प्रवर्त्तेते।

रसविषयेध्वनिवादिनामपि भवति प्रस्थानद्वयम्। तत्र रस आस्वाद्यः पानकरसवदिति प्रथमं प्रस्थानम्। एतस्मिमुच्यते विभागदिभिः परिवृतः स्थायी रसनाम लभत' इति, 'स्थायी भावो रसः स्मृत' इति च। अपरः पुना 'रस आस्वाद आनन्दात्मा' इति। अत्र दृष्टान्तः परभागरूपः परिभक्तः। तं चाभिनवो लोचनेऽभिनवभारत्याञ्च विस्पष्ट्याञ्चक्रेऽत्र। अनयोर्द्वितीयस्य प्राधान्यमेव चरमत्वात् तस्य। किन्तु योऽयं प्रथमस्तस्य रसान्तरस्य प्राधान्ये गुणीभावोऽनुभवसिद्ध एव यथा—'श्रयं स रसनोत्कर्षी'-त्यादिषु शृङ्गारस्य करुणं प्रति। एवमेकांशेऽनुभूतस्य विशेषस्य सम्पूर्णेऽवयविति व्याप्तिसमुद्घोषं को वा सचेता उचितायेत।

रसस्य प्राधान्येऽप्यलङ्कारत्वं न विप्रतिषिध्यति। विवक्षोपारूढा हि प्राधान्याऽप्राधान्यव्यवस्था। रसस्याप्यलङ्कारत्वमास्ते साहित्यागमसिद्धम्। 'अक्षरं ब्रह्म परमं सनातनमल'-मिति पूर्वोद्धृतायां कारिकायां रसस्येवालङ्कारस्यापि

पर्यायत्वेन गणनात्। ननु अलङ्क्रियतेऽनेमेति करणव्युत्पत्त्याऽलङ्कार-पदसिद्धिरिति कथमलङ्कारस्याऽऽस्वादरूपेण चरमेण परमेषा च रसेन सहैकरूपत्वमिति चेत्, साधु व्युत्पत्त्यन्तरं तर्हि गृह्यताम्। तथाहि—स्वरूपमात्रपरोऽपि कारशब्दो भवति यथाऽहङ्कार इति, ओङ्कार इति, वषट्कार इति. कर्त्रर्योऽपि कुम्भकार इति। यच्च 'वर्णात्कार' इति वार्त्तिकम्, तत्र बाहुलकानुवृत्तेर्वर्णसमुदायस्यापि संग्रहः, सिद्धिश्च महाभाष्यकृतः प्रयोगस्य 'एवकार' इत्येतस्य। स्वरूपार्थत्वेन कारशब्दः अलङ्कार-शब्दे अलमिति पदं त्यजति, कर्त्रर्थत्वेन कर्मतया गृह्णाति। उभयथापि नास्ति करणव्युत्पत्ति-मात्रसीमितत्वमलङ्कारपदस्या स्वातन्त्र्ये पुनः सुलभ एवाभेदो रसेन सहालङ्कारपदार्थस्य। कामं 'भूषणेऽलमि (१.४.६४) त्याचायवचनेन भूषणार्थत्वमपि प्रसिद्ध्येदलङ्कारशब्दस्य, किन्तु, 'सौभाग्यवत्याः को वाऽलङ्कार इति पृष्टा नवपाणिग्रहणा वधूरुत्तरति 'पतिरि'-ति संतुष्यन्ति च ततः प्रश्नकर्त्र्यो ननान्दारः। तत्र को हेतुः? जीवति शरीरे निवस्त्रतायामप्यादरणीयातिशयत्वे को वा हेतुः, विहाय चैतन्यम्। सिद्धमेतेनात्मन एव भवत्यलङ्कारत्वमुपादेयत्व-संपादकम्। एवमेवोभयरूपस्य रसस्याप्यलङ्कारत्वमपि काव्य-निकाये। ततश्च रिक्तं वचो ध्वनिवादिनाम् 'रसस्य च प्राधान्यान्नालङ्कारते'-ति (काव्यप्रकाश-१)। अत एव ध्वनेरेव गुणभावे द्वितीयस्य काव्यस्य परिचयो गुणीभूतव्यङ्ग्यमिति। महिमभट्टस्यात्र स्पष्टोक्तिः—

'काव्ये तर्हि गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता' इति। अत्र चारुतेति पदं चारुताऽतिशयत्वपरं भवति।

**'शब्दना'-नाम्नी शक्तिः**

नास्ति शब्दे 'शब्दना'-स्याद् व्यापारादतिरिक्तं व्यापारान्तरं किञ्चिदिति महिम्नोऽपरंमद्भुतञ्च दर्शनम्। तस्यास्य प्रतिपत्तये द्रष्टव्यो व्यक्तिविवेकाख्यस्य महिमभट्ट-ग्रन्थस्य सोपपत्तिको व्यतिकरस्तृतीयस्य विमर्शस्यारम्भ एव। तत्रार्थान्तरपरत्वं शब्दे न ह्येव सम्भवीति तस्योपन्यासः। साध्वसाध्वप-शब्दत्वैस्त्रैविध्यं चास्य महद् दर्शनम्। तत्र साधुत्वं तदेव यदभिमतं संस्कृतिपदेन ध्वनिवादिनाम्, तद्विपरीतं चासाधुत्वमिति तत्रापि न मतिभेदः, यच्चेदं तृतीयम्।

**अपशब्दः**

अपशब्दत्वं नाम तत्रास्ति महिम्नो मति—'शब्दादयेतोऽपशब्द' इति। शब्दत्वं च वक्तुर्विवक्षितानां समेषामप्यर्थामां प्रतिपादकत्वम्। 'शप आक्रोश' इति धातोः 'आक्रोशो वैखरीत्वम्। ततस्ते सर्वेऽप्यर्था प्रतिपिपादयिषित्वाऽनपेता भवन्ति ये हि वक्तुर्विक्षिता भवन्ति। एवं हि शब्दना-नामा व्यापारस्तेनैवाखण्डाभिधावद् यावदर्थप्रतिपादनात्रह्येवावश्यकताऽभिधानाम्या मुख्यायाः शक्तेः, नास्ति च 'लक्षणाः व्यञ्जना' चेतमुख्ययोः शक्त्योः। ननु 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति यो निगऽस्तस्य कथं परिपालनमिति चेच्छब्दनयैव तस्याः प्रतिज्ञाया मुखस्य मुद्रणात्। सति विरामे निगड एष प्रतिबन्धीयात् प्रतिपत्तारम्, विरामश्चासौ घटतेऽन्तिमस्यार्थस्य ज्ञानानान्तरमिति निगडिता एव तिष्ठाम इत्यक्तं स्वैरित्वशङ्कया।

इमां विवक्षामधिएरूढाः सर्वेऽपि विधिनिषेधाः शब्दत्वेनैष परिगृहीताः। ततस्तस्यैव शब्दस्याऽपशब्दत्वं यस्य शब्दानायामस्याम् असामर्थ्यमि'-ति। तत्र कारिकाः—

शब्दप्रयोगः कर्त्तव्यः प्रधानार्थव्यपेक्षया।
तदन्यापेक्षया त्वर्थदिने विपरिणामवेत्।।१।।

विपरीतमतो यत् स्यादपशब्दः स मां प्रति।
हेतुर्ध्वनेश्चायमेव प्रयोगपरिणामयोः।।२।।

परिणामो बहुविधो वाचो लिङ्गादिभेदतः।
स च प्रसिद्ध एवेति नास्माभिरिह दरितिः।।

(व्यक्तिविवेक ४.१.३, पृ. ४८२, चौ.सं. १९६४)

कुन्तकस्याप्यानन्दवर्धनस्येवैष एवार्थोऽभिमतः। तद्यथा कुन्तकः—

वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि।
तथापि परमार्थोऽयमेतयोः काव्यवर्त्मनि।।

शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः।। इति। (प्रथम उन्मेषः)

एवमानन्दवर्धनस्यापि—

सोऽर्थ स्तिद्व्यक्तिसामर्थ्य-योगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।। (ध्व. १.८)

विस्तरश्चास्य व्यक्तिविवेकस्य तृतीय एव विमर्शे द्रष्टव्यः। नितान्तमेव व्युत्पादक एष विमर्शः।

शब्दैरेभिर्महर्षिभूतेभ्यः पाण्डेयेभ्यो म.म.श्रीरघुनाथशर्मभ्यः शतं प्रणामाः।



# शान्तरसस्यानभिनेयत्वम्

**प्रो. छोटेलालत्रिपाठी**
आचार्यः, साहित्यविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



साहित्यशास्त्रविदां परम्परायां निर्धारिते समये रसानाश्रित्यास्ति कश्चन शान्तरसविषयको विवादः। रसाश्च नव संख्याकाः, तेषां स्थायिभावा अपि रत्यादयस्तथैव नव एव सन्ति। इमे रत्यादय एव स्वानुकूलान् विभावादीनाश्रित्य रसरूपेण परिणतिमवाप्यास्वादयोग्यतां भजन्तीति सामान्या सरणिः। अत्र नवरसेषु प्रथमतयाष्टौ रसाः अद्भुतपर्यन्तं प्रवृत्तिमूलकाः, नवमश्चासौ शान्ताख्यो रसः निवृत्तिमूलक इति काव्यतत्त्वविदो वदन्ति। तत्र प्रवृत्तिमूलकावष्टावपि रसाः मुनिना भरतेनाभिनेयतया निगदिताः। तत अन्यैरपि तदुत्तरवर्तिभिः काव्यलक्ष्मविधायिभिः काव्यतत्त्वविद्भिः भरतोक्तिमनुश्रृत्य त एव रसा अभिनेयतया सङ्ग्रथिताः। शान्तस्तु श्रव्यत्वेनैव परम्परया स्वीकृतः। किन्तूत्तरवर्तिभिः कैश्चिदाचार्यैस्तस्याभिनेयत्वमप्यभिहितम्।

अत्राभिनेयत्वमनभिनेयत्वं तस्य सकारणमेवेति विविच्यमाने सति प्रतीयते, यत् नटस्याभिनयेऽभिनिविष्टत्वात्स न रसास्वादकः, अतस्तस्याभिनयोपपादकत्वं सम्भवत्येव। तथापि मुनिना नाट्येऽष्टावेव रसा इत्यभिधाय स्वाभिप्रायविशेषः निर्दिष्टः। कोऽयमभिप्रायविशेष इत्यपेक्षायां प्रथमं पूर्वाचार्याणां मतानि पर्यालोचनीयानि भवन्ति। यद्यपि तैस्तस्यानभिनेयत्वे न किमपि प्रबलं विनिगमकमुपस्थापितम्, केवलं नटगतास्वाद्यत्वमनास्वाद्यत्वमेवोररीकृतम्। तत्रेदन्तु स्पष्टमेव यन्नटो न रसस्यास्वादकः, स तु शिक्षाभ्यासद्वारा विभावादीनुपस्थापयितुमेव सक्षमः। यतो हि-स तु श्रावकः,

विभावादीनामभिनयद्वारा प्रदर्शको वेति। अस्तु नाम विवादोऽयं नाट्यशास्त्रमूलकः। नाट्यशास्त्रे भरतेन 'नाट्ये अष्टावेव रसाः' इत्युक्तम्। तेप्यद्भुतपर्यन्तम्। शृङ्गारादारभ्याद्भुतपर्यन्तं रसाः लोकप्रवृतिमूलका इति पूर्वमेवोक्तम्। प्रवृत्तिमूलकानां रसानाञ्च याऽभिव्यञ्जनसामग्री कविभिरपेक्षते सा सर्वाऽपि सहृदयैर्ग्राह्या पुनः पुनरनुसन्धानात्मिका च भवति। तस्याञ्च सामग्र्यां समस्तप्रयोजनानि बीजरूपेण सन्निहितानि सन्ति। इयं च दिव्या चेदक्षुण्णा, अदिव्या चेदनित्यैव। उभयावस्थायामपि लौकिकं स्वरूपमेव ग्राह्यम्, तन्न सम्भवति दिव्येषु। या च लौकिकी सामग्री सा च तव, मम, तटस्थेषु विकीर्णा समष्टित्वेन विषयात्मिका भोगरूपा, मनोवृत्ति कल्पा चेति। भोगात्मिकासांसारिकमनोवृत्तिविपर्ययः विषयविरागरूपः। अष्टावपि रसाः विषयसापेक्षाः। शान्तस्तु विषयनिरपेक्षः। निरपेक्षत्वमिदं विषयविरागरूपम्। विषयविरागस्फूर्तिस्तु क्वचिल्लोकस्यासारतामनुभूय, अन्यत्र च प्रियवस्तुविनाशादिजन्या। उभयथा जन्येयं स्फूर्तिः निर्वेदरूपैवेति। तत्र—

यथा यथा विपर्येति लोकतन्त्रमसारवत्।
तथा-तथा विरागोऽत्र जायते नात्र संशयः[१]।।

इति वादरायणमुनिदिशा संसारासारताजन्यो निर्वेदः शमस्थानीयत्वात् स्थायीरूप एव। इष्टार्थवियोगजन्यो निर्वेदः व्यभिचारिरूपः। अत्र विरागः मनोवृत्तेरवस्थाविशेषमात्रम्। नैरन्तर्येण सांसारिकविरक्त्यभावदर्शनात्। संसारे यावत्यपि जडचेतनात्मिका सामग्री लब्धसताका वर्तते तावति सर्वाऽपि मानवानामुपभोगायैव, यतो हि पुरुषार्थत्रयोपलब्धिरूपा लोकयात्रा लौकिकसाधनैरेवोपपद्यते। यात्रिणस्तु वर्णचतुष्टयमेव। वर्णचतुष्टयेनाप्युपभुज्यमाना लोकसामग्रीयं चातुर्वर्णिकेत्यप्युच्यते। ततः निवृत्तिस्तु विराग एव। अयमेव विषयविरागः निर्वेदात्मकः शमात्मको वेत्युच्यते तत्त्वविद्भिः। अस्यैव शमस्याभिनेयत्वमनभिनेतयत्वमासाद्य विवदन्ते बुधाः। तत्र नटमुद्दिश्य चेद्विवादस्य निराकरणं प्रतिपद्यते तदा तु स्पष्टमेव यन्नास्ति नटो रसास्वादकः

---

१. महाभार. शा.प.।

शिक्षाभ्यासमात्रेणाभिनयोपस्थापनात्। एककालावच्छेदेन तस्योभयप्रवृत्यभावात्। यथोक्तं सङ्गीतरत्नाकरे—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु, यतः कश्चिन्न रसं स्वदते नटः[१]।। इति।

किन्त्वविहन्यमानं लक्ष्यं सम्प्रेक्ष्येदं वक्तुं शक्यते यत् 'प्रबोधचन्द्रोदय' 'नागानन्द' प्रभृति नाटकानि शान्तमेवोपद्बलयन्ति, एवमेव शास्त्रकाव्य-छायान्वियिनि महाभारते, बुद्धचरितादिषु वैराग्यशतके, शिल्हण विरचिते च शान्तशतकेऽन्यत्रापि च शान्तमेव प्राधान्येन परिपोषं प्राप्नोति। इत्थमनिर्णयावस्थायां विचारसरणिं परिणतिपर्यन्तमानेतुं नाट्यशास्त्रमेवाधार-भूततया पुनः पुनः रन्वेष्टुमपेक्षते। तत्र च—

न वेदव्यवहारोऽयं संश्राव्यः सर्वयोनिषु।
तस्मात्सृजापरं वेदं पञ्चमं सर्ववर्णिकम्[२]।।

इत्यनया कारिकया कर्मानुरूपिण्या गुणानुरूपिण्या च व्यवस्थया व्यवस्थापितायां वर्णव्यवस्थायां न समेषां कृते वेदाध्ययनं तदनुरूपञ्चाचरणं सुसाध्यम्, तत्कथं ते सर्वे जनाः समानफलभागिनो सुखिनश्च भवन्विति स्वयं सृष्टा प्रामाणिकं लौकिकं सर्वजनहितकरञ्च लोकवृत्तानुकरणात्मकं पञ्चमं वेदं विरचितुं मुनिर्भरतः निर्दिष्टः। यथोक्तं मुनिना—

नानाभावोपपन्नं नानावस्थान्तरात्मकम्।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्[३]।।

उत्तमाधममध्यानां नराणां कर्मसंश्रयम्।
हितोपदेशजननं नाट्यमेतद्भविष्यति[४]।।

अत्राभ्यां कारिकाद्वयाभ्यां मुनिना नाट्यफलं निर्दिशता व्यवस्थापितं यदिदं नाट्यं रत्यादिस्थायिभावोपपन्नमथ च सात्विकादिभिर्व्यभिचारिभिश्चेति

---

१. सङ्गीतरत्नाकरः; २. नाट्यशास्त्रम्।
३. तत्रैव; ४. तत्रैव।

युक्तं देशकालप्रकृत्याद्यवस्थाविशेषप्रदर्शकं शुद्धं लोकवृत्तानुकरणात्मकं जायते। तथैवास्मिन्नाटके उत्तम-मध्यमाधमानां मानवगतवृत्तीनां संश्रयत्वात्तेषां तेषां फलपरिपाकद्वारा सदसद्प्रवृत्तिद्वारकमुपदेशजनकत्वमपि सिध्यति। अर्थान्नाट्य-माध्यमेनोत्तममध्यमाधमानां नायकादीनां फलपरिपाकपर्यन्तं वृत्तमवलोक्य लोकाः फलप्रदेषु सद्वृत्तेषु प्रवृत्तिं कुर्वन्तीत्याशयः। समेषां वर्णानां ऋषीणाञ्च मोदजनकं चित्तवृत्युल्लासकं नाट्यं लोकानां दुःखमपसारयति, श्रमार्तानां श्रममपनोदयति। शोकार्तानाञ्च शोकमुत्सारयतीति। उत्तमाधममध्यानां जीवनचरितमभिनयद्वारा लोकानां चक्षुर्गोचरीक्रियमाणेन 'सत्यं शिवं सुन्दरमिति' विचारसरणिरुत्कर्षं प्राप्नोति। एवमेव दुखार्तानां श्रमार्तानां शोकार्तानाञ्च मोदजनकत्वात् 'सर्वे भवन्तु सुखिनः.....' इत्यादिभिर्लोकमङ्गलकामनाऽपि चरितार्था भवति। अथ च लोकवृत्तानुरोधेन क्रियासु जायमानायां प्रवृत्तौ निदर्शनारूपेण पूर्वपुरुषैः भुक्तं शुभाशुभफलमुपस्थितं सत् प्रवृत्तौ निवृत्तौ च चेतयति। नह्यत्रादृष्टफलकल्पनापेक्षतेऽभिनयस्य प्रत्यक्षरूपत्वादिति। अतोऽग्रे मुनिः स्वयं लोकस्वभावजन्यं नाटकमभिदधन् तत्प्रयोगे लोकप्रामाण्यमेवापेक्षते। तथाहि—

लोकसिद्धं भवेत् सिद्धं नाट्यं लोकस्वभावजम्।
तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते[१]॥

लोके तु नाना स्वभाव (शील) सम्पन्नानां जनानां चेष्टा अपि विभिन्नाः भवन्ति, मनोवृत्तयश्च बुद्धिसम्बलिताः तासां चेष्टानामुत्प्रेरिकाः। एतासामेव मनोवृत्तीनां चेष्टानां वानुकर्त्रा प्रदर्शनमभिनयपदवाच्यः। यथोक्तम्—

वयोनूरूपः प्रथमस्तु वेशः वेशानुरूपश्च गतिप्रचारः।
गतिप्रचारानुगतञ्च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः[२]॥

यतोहि—

अदेशजो हि वेशस्तु न शोभां जनयिष्यति।
मेखलोरसि वन्धे तु हास्यायैवोपजायते[३]॥

---

१. नाट्यशास्त्र; २. तत्रैव-१३.६८।
३. तत्रैव-२३.६९।

एवं लोकविषयेतरेण विषयेन न नाट्यं सिद्धं भवतीति। नापि कायिकवाचिक-सात्विकाहार्याणां चुतर्णामभिनयानामदेशजत्वं नाट्योत्कर्षाया-नुकूल्यं भजते। एवं नाट्यं सर्वात्मना लोकस्वभावसिद्धत्वात् लोकप्रवृत्ति-मूलकमामोदं जनयति। शान्तस्तु न तथेति न तस्याभिनयाय मुनिर्भरतोऽभिमत:। तथाहि—

वादरायणानुसारेण लोकतन्त्रस्यासारतामनुभूय यथा-यथा तं प्रति अनाशक्तेरभ्युदय; तथैव विरागोप्युन्मेषं प्राप्नोति। अभ्युदिते विरागे निर्वेदात्मक: शम स्थायी शान्ततया परिष्फुरति। लोकप्रवृत्यभावरूपे शमाख्ये स्थायिनि परिपोषे प्राप्ते सति न पुन: पूर्वावस्थावाप्तिरिति। नाट्ये ये चाष्टौ रसा: मुनिना प्रोक्ता: ते सर्वेऽपि विभावादिजीविताविधिका: सन्ति, किन्तु विभावादिभ्यो शान्तस्याभ्युदयानन्तरं न पुन: तेषां विभावादिकानामभावेऽपि विरागस्य प्रशम इति। एवं शान्तस्तु न विभावादिजीविताविधिक:, अपितु शाश्वतिकश्चेति। एवमेव देशकालाद्यपरिच्छिन्न; लोकसामग्र्यभवजन्य: निवृत्तिमूलकोऽयं शम: लोकवृत्त्यनुकरणरहित: केवलमनुभवैकजन्य: न वर्णाश्रमव्यवस्थामनुसरति। अवस्थाभेदरहितश्चायं 'प्रजातन्तुं मा व्यवच्छेत्सी:' इति वेदविरुद्धत्वं भजमान: धर्मार्थकाममोक्षाणां पुरुषार्थानां समुपलब्धिक्रममपि तिरस्करोति। अपि च सर्वैरपि काव्यलक्ष्मविधायिभि: सहृदयै: काव्यस्य चरमं फलं विगलितवेद्यान्तरा-नन्दानुभूतिपुरस्सरं रामादिवद्वर्तितव्यं न रावणादिवदिति प्रतिपादितम्। तत्र रामस्य वृत्तन्तु सत्प्रवृत्तिमूलकं लोकप्रवृत्तिमूलकं वेति न निर्मूलकमिति समेषामनुभवात्मिकाभिमति:। एवं सम्प्राप्तसाक्ष्यसमीक्षणधिया विविच्यमाने सति वक्तुमिदं समीचीनं प्रतिभाति यत्—

शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते।।

अपि च—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु, यत कश्चिन्न रसं स्वदते नट:।।

तत्त्वतः लोकोपकारधिया शान्तस्तु न सार्ववर्णिकः न सर्वावस्थात्मकः न च सर्वकालिक इति तस्यानभिनेयत्वे कर्कशतर्कोल्लासनं न सङ्गतम्। मोदजनकस्य नाट्यस्य सार्ववर्णिकत्वात् सर्वावस्थायां प्रेक्षणीयत्वात् च शमस्य लोकसामग्र्याः निःसारतायाः भावनाविषयत्वाल्लोकयात्रासम्पादनायायं नोपयुज्यते। अतः शान्तस्याभिनयः न प्रस्तोतव्य इति। यतो हि रागेणैव रजोजुषः लोकान् जनयन्ति। न रागं विना सृष्टिसमुद्भवः। विरागस्तु केवलं मोक्षाय कल्प्यते। अतो विरागिणः सृष्टिं नियमयन्ति न तु जनयन्ति। एवं सर्वावस्थायां समेषां बालवृद्धयूनां समक्षं विरागजनकस्य शान्तस्याभिनयः न सङ्गतं प्रतिभातीति सम्भावयन्तु बुधा इति।



# टीका-विमर्शः

**प्रो. प्रभुनाथद्विवेदी**
आचार्यचरः, संस्कृत-विभागस्य
महात्मा-गान्धि-काशी-विद्यापीठे, वाराणस्याम्



टङ्कितष्टीकते टङ्को भालं भाति सुटीकया।
टीकया ज्ञायते ह्यर्थः टीका सन्धानपद्धतिः॥

शास्त्रं ग्रन्थश्च दुर्बोधः क्लिष्टं मूलं तथाविधम्।
गुरुवागथवा टीका शरणं तत्र केवलम्॥

उपलभ्यते खलु 'टीकृ'-धातुः पाणिनि-धातुपाठे। 'ईरणं' ह्यस्य प्रतीयते प्रारम्भिकोऽर्थः। 'वृक्षष्टीकते' इत्युदाहरणं दृश्यते काशिकायाम्[1]। तत्र 'टीकते' इत्यस्यार्थो भवति वायोः प्रभावाद् ईर्तेः। अतः परमस्य धातोरर्थः 'सञ्चलने' 'गमने' वा सङ्क्रमितः। 'टीका'-शब्दः टीकृ-धातोः निष्पद्यते। यया मूलवचो भावरूपं रहस्यमधिगम्यते सैव टीका। अत्र टीकायाः स्वरूपे धातोर्गत्यर्थकत्वमन्तर्निहितम्।

टीकायाः व्युत्पत्तिस्ति—टीक्+क+टाप्। टीक्यते गम्यते ग्रन्थार्थोऽनयेति टीका। 'वाचस्पत्यमि'ति नाम्नि कोशे सेयमवं प्रदर्शिता—'टीक् गतौ। भ्वा.आत्म.सक. सेट् टीकते, अटीकिष्ट। टीका-स्त्री.। टीक्यते ग्रन्थार्थोऽनया। टीकृकरणे घञर्थे क वा। विषमपदव्याख्यारूपे ग्रन्थभेदे'। अमरकोशे टीकायाः पाठः कृतः—'लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी' (३.५.७)। अत्र रामाश्रमी-व्याख्यायां टीकामधिकृत्य विमृष्टम्—'टीक्यतेऽर्थो यया। टीकृगतौ (भ्वा.आत्म.से.)। गुरोश्च हलः। विषमपदव्याख्या'। काव्यमीमांसायां राजशेखरो निर्वक्ति—'यथासम्भवमर्थस्य टीकनं टीका'[2]। अभिधानचिन्तामणौ हेमचन्द्रस्तु, 'टीका निरन्तरव्याख्या' इत्येतं व्याकरोति—'टीक् गतौ। गमयत्यर्थान् टीका, सुगमानां विषमाणां च निरन्तरं व्याख्या यस्यां सा तथा'[3]।

---

१. काशिका, ८.३.३४।

२. काव्यमीमांसा, द्वितीयोऽध्यायः, पृ. २०; ३. अभिधानचिन्तामणिः, २.१७०।

पाश्चात्यः कोशकारो मॉनियर-विलियम्समहाशयः स्वीये संस्कृताङ्ग्लकोशे टीकाविषये लिखति—'टीका—A commentary (esp. on another commentary, e.g. Anandgiri's ṭīkā on Śānkara's Bhāṣya)' नोचितमिदम्। भाष्यादीनां टीकनमनुटीका भवति, न तु टीका। मूलग्रन्थस्यार्थावबोधसाधनं, तद्भावादीनां स्पष्टीकरणं वा टीका। वस्तुत आनन्दगिरिणा श्रीमच्छङ्कराचार्यस्य वेदान्तभाष्यमधिकृत्य 'न्यायनिर्णय'-नाम्नी टीका कृता। मन्ये, तेनैवास्मिन्नर्थे प्रथमतया 'टीका' इति शब्दस्य प्रयोगो विहितः।

टीका-शब्दस्यानेके पर्यायाः प्रयुक्ता दृश्यन्ते। सामान्यतया ते सर्वे प्रायेण समानार्थका एव प्रतीयन्ते, तेषाञ्च प्रयोगोऽपि टीकाया अर्थे भवति; किन्त्वस्त्येव तेषु सूक्ष्ममन्तरं प्रक्रियार्थतः स्वरूपतश्च। तत्त्वगुणवैशिष्ट्येन समे शब्दाः सन्ति कुटुम्बिनः। त एते सन्ति—'निरुक्तम्, भाष्यम्, व्याख्या, वृत्तिः, वार्तिकम्, पञ्जिका, चूर्णिः, अवचूर्णिः, निर्युक्तिः, विवरणम्, विवृतिः, टिप्पणं टिप्पणी वा, दीपिका, तिलकम्, फक्किका, समीक्षा, पद्धतिश्च'।

अतः क्रमेणैतेषां स्वरूपाख्यानं विधीयते।

**निरुक्तम्**

श्रीमच्छङ्कराचार्येण छान्दोग्योपनिषदि—'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳहृद्यमिति तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेति' (८.३.३) इत्यस्य भाष्यं कुर्वता निरुक्तं व्याख्यातम्—'.....तस्यैतस्य हृदयस्यैतदेव निरुक्तं निर्वचनं नान्यत्'। एवं निरुक्तस्यार्थो 'निर्वचनमि'ति कृतः। वैजयन्तीकोषे निरुक्तमेवमुक्तम्—'निरुक्तं पदभञ्जना'[१] इति। सिद्धशब्दार्णवेऽपि, 'पदभञ्जनं निरुक्तम्'[२] इत्यङ्कितम्। 'निर्' इत्युपसर्गपूर्वकं वच्-धातुना क्त-प्रत्यये कृते सति 'निरुक्तम्' इति पदं निष्पन्नं भवति। निर्+वच्+क्त = निर्+उक्तम् = निरुक्तम्। क्त-प्रत्ययस्थाने 'क्तिन्'-प्रत्यये युक्ते सति पदमायाति 'निरुक्तिः' इति। निरुक्तं हि निरुक्तेरुत्पद्यते। अत्र व्युत्पत्तियुता व्याख्या निरुक्तिरिति कथ्यते। निरुक्तिर्नामालङ्कारस्यैको भेदोऽपि वर्तते, यस्य लक्षणम्—'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्'[३]। वेदाङ्गभूतं निरुक्तं तु निघण्टोः व्याख्यात्मको ग्रन्थविशेषो यास्कप्रणीतः। तत्र वेदमन्त्रानधिकृत्य सङ्कलितानां शब्दानां निरुक्तिपरा व्याख्या वर्तते—'नाम च धातुजमाह निरुक्ते'।

---

१. वैजयन्तीकोषः, ३.६.३१; २. सिद्धशब्दार्णवः, १.१७८।

३. वामनशिवरामआप्टेकृतः संस्कृत-हिन्दी-कोशः।

वेदभाष्यकृत्सायणाचार्यो निरुक्तलक्षणं द्विधा प्रस्तौति[1]—

१. अर्थावबोधनिरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्।

२. एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेण उच्यन्ते तदपि निरुक्तम्।

अत्र प्रथमे लक्षणे, पदार्थज्ञाने निरपेक्षतया यत्र पदसमुदाय उच्यते तन्निरुक्तम् इत्याशयः। द्वितीये लक्षणे, पदार्थाभिव्यक्तौ पदानां प्रकृतिप्रत्ययार्था यत्र साकल्येन कथ्यन्ते, तदपि निरुक्तम् इत्याशयः। यथा 'हिरण्यम्' इति पदस्य निर्वचनम् (निरुक्तिः)—'हिरण्यं कस्मात्'? ह्रियते आयम्यमानम् इति वा, ह्रियते जनाज्जनम् इति वा, हितरमणं भवतीति वा, हृदयरमणं भवतीति वा, हर्यते वा स्यात्प्रेप्साकर्मणः। एवमत्र 'हिरण्यमि'ति पदस्य सकलसम्भावितावयवार्थानां निर्वचनं घटितम्। एतदेव निरुक्तम्। अर्थानुसारं प्रकृति-प्रत्ययकल्पनापूर्वकं वर्णागमं वर्णविपर्ययं वर्णविकारं वर्णनाशं धातोश्चानेकार्थत्वमधिकृत्य शब्दस्य निर्वचनमिति पञ्चधा (पञ्चप्रक्रियात्मकं) निरुक्तम्—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्[2]॥

एवं टीका-निरुक्तयोरन्तरं स्पष्टमेव। टीका शब्दस्य वाक्यस्य वा यथासम्भवमर्थं बोधयति विशदयति च। निरुक्तन्तु व्युत्पत्तियुतं व्याख्यानं निर्वचनं वेति। 'निरुक्तमि'त्यस्य शाब्दिकोऽर्थः—'निःशेषेणोक्तं निरुक्तमि'ति। कमपि शब्दमधिकृत्य तद्विषये स्वरूपार्थविज्ञानविशदीकरणं तादृशं यत्तदतिरिक्तं वक्तुं न किञ्चिदवशिष्यते। निरुक्तस्य प्रक्रियायां निर्वचनस्यैतत्स्वरूपं स्पष्टमेवालक्ष्यते।

'निरुक्त'-नाम्नी मेघदूतस्यैका टीकाऽस्तीति सूचयति कोलाचलमल्लिनाथ-सूरिः मेघदूतसञ्जीवन्याम्[3]।

**भाष्यम्**

अमरकोशे 'भाष्यमि'ति शब्दः पठितः[4]। तत्र रामाश्रमी-टीका भाष्यं विवृणोति—'भाष्यते सूत्रार्थो येन। भाष् व्यक्तायां वाचि (स्वा.आ.से.)।

---

१. श्रीछज्जूरामशास्त्रिसम्पादितं 'निरुक्तम्', भूमिका, पृ. 'ड'।

२. तत्रैव, भूमिका, पृ. 'थ'।

३. सारस्वती सुषमा, ४५.३-४, पृ. २४३।

४. अमरकोशः, ३.५.३१।

'कृत्यल्युटो.....' इति करणे ण्यत्। एवं ज्ञायते यत् शब्दोऽयं 'भाष्'-धातुना 'ण्यत्'-प्रत्ययस्य योगतो व्युत्पद्यते—भाष्+ण्यत् = भाष्यम्।

'आक्षिप्य भाषणाद् भाष्यम्' इति काव्यमीमांसायां राजशेखरः[1]। सिद्धशब्दार्णवे तु 'भाष्यं विस्तारकं मतम्' इत्युल्लिखितम्[2]।

भाष्यस्य स्वरूपमाख्यातुं श्लोकद्वयमतिप्रसिद्धम्—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।

संक्षिप्तस्याप्यतोष्यैव वाक्यस्यार्थगरीयसः।
सुविस्तारतरा वाचो भाष्यभूता भवन्तु ते।।

लोकमान्यो बालगङ्गाधरतिलकः टीकाभाष्ययोरन्तरं विशदयति—'प्रायेण टीकाभाष्ये समानार्थे ह्युपयुज्येते। परन्तु मूलग्रन्थस्य सरलान्वयपरा सुगमार्थबोधिका टीकेति मे मतम्। भाष्यकारस्तु न तुष्यत्येतावतैव। स ग्रन्थस्य निष्पक्षं समालोचनं प्रस्तौति, स्वाभिमतं तात्पर्यमारचयति, ततश्चापि निर्दिशति ग्रन्थार्थप्रकाशनविधिम्[3]।

वस्तुतः टीकायां टीकाकारः प्रामुख्येन ग्रन्थार्थं पाठकावबोधार्थमाविष्करोति प्रथयति च वैशिष्ट्यं ग्रन्थवस्तुनः। भाष्ये तु भाष्यकारो ग्रन्थवस्तु विविच्य तत्रानुचितोचितमपि विमृशति। तदतिरिक्तं च, शास्त्रोक्तदिशा ग्रन्थप्रतिपाद्यमधिकृत्य स्वाभिमतप्युपस्थापयति। टीकायां मूलानुसरणं भाष्ये तु मूलानुसन्धानेन सह स्वतन्त्रतया स्वाभिमतप्रदर्शनमपि युज्यते।

पतञ्जलिमुनेर्महाभाष्यं, सायणादीनां वेदभाष्याणि, श्रीमच्छङ्कराचार्यस्य चोपनिषद्भाष्याणि सर्वविदितान्येव विराजन्ते।

**व्याख्या**

अर्थस्वरूपदृष्ट्या व्याख्या टीकामुपतिष्ठति। 'व्याख्या'-शब्दस्य व्युत्पत्तिरस्ति—'वि+आ+ख्या+अङ्+टाप्'। कोशेषु शब्दस्यास्यार्थो दृश्यते—स्पष्टीकरणम्, विवृत्तिः, टीका भाष्यं वा। हलायुधकोशो 'व्याख्या' इति शब्दं परिभाषते—'व्याख्या विवरणं स्मृतम्'। (श्लोकसंख्या-४००)

---

१. काव्यमीमांसा, द्वितीयोऽध्यायः, पृ. २०।

२. सिद्धशब्दार्णवकोशः, १.१७७।

३. श्रीबालगङ्गाधरतिलककृतं श्रीमद्भगवद्गीतारहस्यम्, विषयप्रवेशः, पृ. १।

श्रीमद्भागवतमहापुराणे 'व्याख्या'-शब्दस्य प्रयोग उपलभ्यते—

न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद् बहून्।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित्।। (७.१३.८)

अत्रापि व्याख्या-शब्दो यथानिर्दिष्टार्थ एव प्रयुक्तो विद्यते। वस्तुतः टीका, अथ च व्याख्या-शब्दः समानार्थवाचक एव। न तत्र किमपि विशिष्टमन्तरम्। विशेषाख्यानपूर्वकं यया ग्रन्थार्थो बोध्यते सा व्याख्येति निगद्यते।

**वृत्तिः**

वृत्तिरिति शब्दः 'वृत्'-धातुना 'क्तिन्'-प्रत्यये कृते सति व्युत्पद्यते। राजशेखरः काव्यमीमांसायां वृत्तिं परिभाषते—'सूत्राणां सकलसारविवरणं वृत्तिः'[१]। अपि च, 'ग्रन्थभेदाविमौ पृथग् वृत्तिनिबन्धावन्वर्थौ' इति सिद्धशब्दार्णवकोशः। कातन्त्रे तु, 'सूत्रस्यार्थविवरणं वृत्तिः' इति सूत्रितम्।

टीकातो वृत्तिः भिद्यते। वृत्तिस्तु टीकावदर्थपद्धतिं नानुसरति। सा सूत्रे कारिकायां वा निबद्धं वस्तु तथा विवृणोति यथा तस्य वस्तुनो याथातथ्यमधिगमो भवेत्। सन्निबद्धा वृत्तिः श्लोकवृत्तान्तादिरूपैरुदाहरणैः प्रमाणप्रगल्भा भवति। अनया सुपुष्टया वृत्त्या तत्रस्थं सिद्धान्तमतं लक्षणं वा सुगमतयाऽवबुध्यते।

प्राचीनकालादेव सूत्राणां कारिकाग्रन्थानां वा वृत्तिलेखनपरम्परा विद्यत एव। पाणिनिप्रणीतानां व्याकरणसूत्राणां वामनजयादित्यकृता 'काशिकावृत्तिः' समुल्लसत्येव। सांख्यकारिकाया 'माठरवृत्तिः', पातञ्जलोगसूत्राणाञ्च भोजराजकृता 'राजमार्तण्डवृत्तिः' सुप्रसिद्धैव। काव्यालङ्कारसूत्र-ध्वन्यालोक-काव्यप्रकाशादिग्रन्थानां तत्कर्तृकृताः स्वोपज्ञवृत्तयः सर्वविदितास्सन्ति।

**वार्तिकम्**

टीकापरिवारस्यायं सदस्यः स्वरूपभिन्नतया पृथगेव विभाति। अस्त्येव वार्तिकविषयको विख्यातः श्लोकः—

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञविचक्षणाः।।

---

१. काव्यमीमांसा, द्वितीयोऽध्यायः, पृ. २०।

अपि चैवमेव सिद्धशब्दार्णवकोशे पठन्ति वार्तिकलक्षणम्—

उदितोऽयमनुक्तोऽयं दुरुक्तोऽर्थसञ्चय:।
तस्य ज्ञानं करोत्येतद्वार्तिकं विविदुर्बुधा:।।

वार्तिकं त्वेको व्याख्यापरोऽतिरिक्तनियमोऽस्ति य उक्तानामनुक्तानामथ चापूर्णानां तथ्यानां व्याख्यां विधत्ते—'उक्तानुक्तदुरुक्तार्थव्यक्तिकारि तु वार्तिकम्'। पाणिने: व्याकरणसूत्राण्यधिकृत्य कात्यायनप्रणीतानि व्याख्यापरकनियमरूपाणि वार्तिकानि जानन्त्येव वैयाकरणा:।

महर्षिजैमिने: मीमांसासूत्राणां व्याख्याने कुमारिलभट्टविरचितं 'तन्त्रवार्तिकं' 'श्लोकवार्तिकञ्च' केनाऽविज्ञातम्? सुरेश्वराचार्यप्रणीतं 'सम्बन्धवार्तिकम'पि विख्यातमेव। अतो वार्तिकं व्याख्याविशेषं टीकात: किमपि विलक्षणम्।

**पञ्जिका**

'पञ्जिका'ऽपि टीकाया: पर्यायत्वेन गृह्यते। अयं पञ्जिका-शब्दोऽमरकोशे (३.५.७) पठित एव। तत्र रामाश्रमी-टीकायां शब्दोऽयं व्याख्यात:—'पिञ्जयतेऽर्थोऽस्याम्। पिजि-भाषार्थ: (चु.उ.से.)। 'गुरोश्च' इत्य:। पृषोदरादित्वादिकारस्याकार:। स्वार्थे कत्। पिज्जयति वा। क्वुन् (उ. २.३२) सकलपदव्याख्या'।

एवं 'पञ्जिका' इति शब्दं व्युत्पाद्य तस्यार्थ: कृत: 'सकलपदव्याख्या' इति। अर्थात्, यत्र सर्वेषां पदानां व्याख्या प्रस्तूयते सा पञ्जिका। सिद्धशब्दार्णवकोशे पञ्जिका-लक्षणं वर्तते—'विषमपदभञ्जिका पञ्जिका' इति। एवमेव राजशेखरोऽपि काव्यमीमांसायां व्यनक्ति—'विषमपदभञ्जिका पञ्जिका'[1] इति। अभिधानचिन्तामणौ 'पञ्जिका पदभञ्जिका'[2] इत्यस्य व्याख्यानं कुर्वताऽऽचार्यहेमचन्द्रेण प्रोक्तम्—'पच्यन्ते व्यक्तीक्रियन्ते पदार्था अनया इति पञ्चिका। 'नाम्नि पुंसि च' इति ठक्। पृषोदरादित्वाज्जत्वे पञ्जिका। विषमाण्येव पदानि भनक्ति पदभञ्जिका' इति।

एवं 'पञ्जिका' (क्वचित् 'पञ्चिका' अपि) इति शब्दस्य द्वे स्वरूपे निष्कृष्टे—प्रथमं यस्यां टीकापद्धतौ न कश्चिच्छब्दोऽनाख्यात: शिष्यते सा टीका सकलपदव्याख्यारूपा पञ्जिका इति कथ्यते। द्वितीयं तु, यस्यां व्याख्यापद्धतौ

१. काव्यमीमांसा, द्वितीयोऽध्याय:, पृ. २०।
२. अभिधानचिन्तामणि:, २.१७०।

क्लिष्टानां दुरूहानां वा पदानां वाक्यावयवानां वाऽर्थः स्पष्टीक्रियते सा पञ्जिकेति बुधाः प्रमाणम्।

**चूर्णिः/अवचूर्णिः**

अमरकोशे (३.५.९) 'चूर्णि'रिति शब्दः पठितः। अमरकोशस्यैकस्मिन् मुद्रिते संस्करणेऽस्य[1] शब्दस्यार्थो हिन्दीभाषायाम्—'अष्टाध्यायी का पातञ्जल महाभाष्य'—इति प्रदत्तः। 'चूर्णमि'ति पदे इन्-प्रत्ययस्य योजनया 'चूर्णिः' इति शब्दो व्युत्पद्यते। अमरकोशेऽस्य शब्दस्योल्लेखतो ज्ञायते यदयं शब्दः टीकाया अर्थे प्राचीनकालादेव प्रयुज्यते। प्रतिपादितं वस्तु बोधयितुकामः कोऽपि तद्वेत्ता पदानि विच्छिद्यैवं योजयति यत्प्रतिपादितं वस्तु तत्र स्पष्टं विभाव्यते। एवं प्रक्रियावशात्पदजातानाञ्च चूर्णनाच्चूर्णिरिति बोधव्यम्। 'अव' इत्युपसर्गपूर्वकं चूर्णिः इति 'अवचूर्णिः' तदर्थतयैव सम्यग्बोधने प्रयुक्ता। मेघदूतस्यैका टीका 'अवचूर्णिः' इति नाम्ना ह्युपलभ्यते।

**निर्युक्तिः**

अयमपि शब्दः टीकार्थे प्रायेण प्रयुज्यते। जैनसम्प्रदायस्य धार्मिकग्रन्थानां टीका 'निर्युक्ति'रित्युच्यते[2]।

**विवरणम्/विवृतिः**

'वृ'-धातुना 'वि'-उपसर्गपूर्वकं 'ल्युट्'-प्रत्यये कृते सति 'विवरणम्' इति शब्दो व्युत्पद्यते।अस्यार्था भवन्ति—उद्घाटनम्, विवृतिः, अनावरणम्, व्याख्या, वृत्तिः, टीका, भाष्यञ्च। हलायुधकोशे—'व्याख्या विवरणं स्मृतम्' इति पठितम्। वैजयन्तीकोशस्तु—'भञ्जना स्याद् विवरणे' इति पठति। विवरणमिव विवृतिरपि। वि+वृ+क्तिन् = विवृतिः। मूलग्रन्थस्य रहस्यानावरणं तत्त्वोन्मीलनं वा विवरणमथ च विवृतिरित्युक्तम्।

**टिप्पणी**

टीकाया अर्थे 'टिप्पणी'-शब्दोऽपि प्रयुज्यते। कदाचिद् भाष्यस्य व्याख्या 'टिप्पणी'ति निगद्यते। यथा—महाभाष्यमधिकृत्य कैयटेन कृता टीका अथवा,

---

१. अमरकोशः, ३.५.९, चौखम्भा-संस्करणम्, १९७० ई.।

२. मानियर विलियम्सकृतः संस्कृताङ्ग्लकोशः, पृ. ५५७।

कैयटकृतटीकाया नागोजिभट्टकृता टीका। मेघदूतस्यैका 'टिप्पणी' (टिप्पणं वा) नाम्नी टीका श्रूयते।

कस्यचिद्विषयस्य प्रतिपादनविधौ प्रायेणैतादृशः प्रसङ्ग आपतति, यस्य बोधनं पृथक्तयाऽऽवश्यकं भवति। यतो हि तस्य शब्दस्य प्रसङ्गस्यावगमनं विना विषयस्य सुगमबोधो भवितुं नार्हति। अतो मूलं परित्यज्य स्वतन्त्रतया तस्य शब्दस्य प्रसङ्गस्य वा विशेषाख्यानं 'टिप्पणी'ति कथ्यते।

### दीपिका

'दीपिका' टीकायाः पर्यायरूपाऽङ्गीक्रियते सहृदयैः। अर्थदृष्ट्या व्युत्पत्तिरस्ति—'दीप्यते प्रकाश्यते ग्रन्थार्थोऽनयेति दीपिका। अतो दीपिका गूढार्थप्रकाशनम्। सचित्रवर्णनं स्पष्टीकरणमिति वामनशिवराम-आप्टेमहोदयः। संस्कृतसाहित्ये दीपिका (दीपिनी वा) संज्ञिता नैकाः टीका उपलभ्यन्ते। मेघदूतस्य जगद्धरकृता 'रसदीपिका', नैषधीयचरितस्य नरहरिकृता 'दीपिका', महाभारतस्य 'ज्ञानदीपिका', सांख्यकारिकायाः टीका 'युक्तिदीपिका' चेति। नीलकण्ठकृतो 'भारतभावदीपो' विख्यात एव।

### फक्किका

वैजयन्तीकोशे (३.६.३३) 'फक्किका'-शब्दः पठितः—'ब्राह्मणश्चेत्य-वच्छेदा एकग्रन्थस्तु फक्किका'।

तीक्ष्णधारैर्धातूपकरणैर्दण्डादिकस्य कर्तने निर्भिन्नो ध्वनिविशेषः'फक्क्' इति। 'फक्किका'-शब्दोऽपि 'फक्क्'-धातोर्निष्पन्नः—फक्क्+ण्वुल्+टाप्, इत्वम्। अस्यार्थो भवति—शनैः शनैः गमनं, विसर्पणं सत्वरं चलनं वा। अस्मिन् टीक्-धातोः मूलार्थः प्रतिष्ठितः। आङ्ग्लभाषायाम्—'Fakkikā denotes a thesis or assertain to be maintained'. अथ च, 'प्रमाणैः सिद्धान्तपोषणं फक्किका' इत्यपि केषाञ्चिन्मतम्। नैषधीयचरितमहाकाव्ये 'फक्किका' इति पदस्य प्रयोग उपलभ्यते—'फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता' (२.९५)। अत्र नारायणो व्याख्यां वितनोति—'फणिभाषिता शेषोक्ता भाष्यस्य फक्किका ग्रन्थस्तद्वद्विषमा दुर्ग्रहा शेषव्यतिरिक्तेन ज्ञातुमशक्या। यथा भाष्यफक्किका वररुचिना कुण्डलितेति प्रसिद्धिः'[1]।

---

१. नैषधीयचरितम्, निर्णयसागरमुद्रणालयसंस्करणम्, १९५२ खि., पृ. १००।

**तिलकम्**

टीकायाः पर्यायरूपेण 'तिलकमि'ति शब्दोऽपि प्रसिद्धः, तत्तु ग्रन्थे वा स्याद् भाले वा स्यात्। ग्रन्थेषु यथा—वाचस्पतिमिश्रकृता 'भामती', तत्र अल्लालिदेवसूरिकृतं 'भामतीतिलकम्' इति। नैषधीयचरितस्य चारित्रवर्धनकृता टीकाऽपि 'तिलकम्' इति जानन्त्येन सहृदयाः। शृङ्गबेरपुरनृपतिना विशेन-वंशालङ्कारभूतेन श्रीयुतराजारामवर्मणा कृतं 'रामायणतिलकं' सुविदितमेव।

**समीक्षा समीक्षणं वा**

समीक्षाऽपि टीकानुगतः शब्दः। 'अन्तर्भाष्यं समीक्षा' इति काव्यमीमांसायां राजशेखरः। तत्रैव स पुनरपि ब्रूते—'अवान्तरार्थविच्छेदश्च सा' इति। इत्थं राजशेखरमतानुसारं, यत्र ग्रन्थस्य किमपि तत्त्वमादाय तस्य विवेचनं तथा चा-वान्तरेभ्योऽर्थेभ्यस्तस्य विच्छेदनं यया प्रक्रियया क्रियते सा समीक्षा। वस्तुत इयं दर्शनशास्त्रस्य मीमांसापद्धतिः।

'समीक्षा' टीकातः क्वचिद्भिन्ना। विशिष्टपद्धतौ शब्दार्थविवेचनं, व्युत्पत्तिप्रदर्शनं, तात्पर्यार्थनिरूपणं, भावनिर्देशनं, ध्वनि-रस-अलङ्कार-गुण-दोषाद्याविष्करणेन सह छन्दोनिरूपणन्तु टीकनम्। समीक्षणन्तु कमपि सिद्धान्तं किमपि मतं वाऽधिकृत्य ग्रन्थविशेषस्य प्रतिपाद्यवस्तुविमर्शः, ततश्च निष्कर्षः। अपि च, वस्तु-मूल्याङ्कनं भवति समीक्षणं समीक्षा वा। आलोचनं समालोचनं वास्य पर्यायः। तत्कर्ता समीक्षकः समालोचको वा। समीक्षकः कमपि विषयं तलस्पर्शिबुद्ध्या प्रतिश्य, तस्य सदसत्पक्षयोरुद्घाटनं विधाय, निष्पक्षतया प्रतिपाद्यं समालोच्य रहस्यरूपं निष्कर्षं प्रस्तौतीत्यस्मद्गुरवः। गुरुवर्या 'आलोचक' इत्येतं लक्षयन्ति—

सम्यग् विषयमालोच्य रहस्यं येन गद्यते।
आलोचक इति ख्यातः स सदा विदुषां मतः[१]॥

अधुना, अनुसन्धानस्य नवविधौ भूयसी भवति समीक्षा समालोचना वा कस्यचिद्ग्रन्थस्य वस्तुनिष्ठपरा व्यक्तिनिष्ठपरा' वेति।

**पद्धतिः**

'सूत्रवृत्तिविवेचनं पद्धतिः' इति काव्यमीमांसायां राजशेखरः। अस्यायमभिप्रायः—सूत्रेषु सन्निहितानां सिद्धान्तानां स्पष्टीकरणं विवेचनं वा वृत्तिः।

---

१. डॉ. अमरनाथपाण्डेयः, शब्दविमर्शः, पृ. ३१।

साऽपि सूत्रात् किञ्चिदधिकं विस्तरप्रस्तारा किन्तु मिताक्षरैर्युता। तस्या एव वृत्तेर्विवेचनं पद्धतिरिति। पद्धतिस्तु मार्गः। अतः पद्धतिस्तु वृत्तेः सुगमार्थबोधाय भवति। अतः पद्धतिः 'अनुटीके'ति वक्तुं युज्यते।

अन्येऽपि बहवः शब्दाः टीकाया अर्थे प्रयुक्ता दृश्यन्ते। यथा—आलोकः, छाया, पर्यायः, पदयोजनिका इत्यादयः।

भण्यते—'कारणं विना कार्यं न भवती'ति। अत्र प्रश्नोऽयमुदेति टीकाया उद्भवे किं स्यात्कारणम्? शब्दार्थयोरभिन्नत्वं न प्रमाणमर्हति। केनापि माध्यमेन व्यक्तः शब्दः सर्वथा सार्थको भवति। पुराकाल आचार्याः शिष्यान् श्रुतिमुपदिशन्ति स्म, शिष्यास्तु तां मूलात्मिकां श्रुतिं यथावद् गृह्णन्ति स्म। उपदेशप्रकृतिः स्पष्टार्थबोधिकाऽऽसीत्। काचित्पृथगर्थप्रक्रिया नाभूत्। कालान्तरे शिष्यानां प्रज्ञा-मेधा-स्मृतिह्रासवशादुपदेशस्य च दुर्बोधतया श्रुत्युपदेशा उदाहरणोपाख्यानदृष्टान्तो-पेताः प्रयोगपरम्परामधिरूढा बभूवुः। एवं दुर्बोधापन्ने मूलप्रतिपाद्ये गुरवः सप्रयत्नमर्थावबोधोपायानाविष्कुर्वन्ति स्म। तेषूपायेषु 'टीका', 'व्याख्या' वेत्येकतमा।केषाञ्चिद् ग्रन्थानां दुरूहतयाऽधुनापि पुराकाल इव तेषां टीकाः विद्योतन्ते। उपनिषदां व्याकरण-दर्शनादिशास्त्रग्रन्थानां तथा चान्येषामपि सन्त्यनेकाष्टीकाः किन्तु टीकनं तत्राद्यापि प्रचलत्येव। यथोक्तम्—'काव्यप्रकाशस्य टीकाः कृता गृहे गृहे विद्यन्ते तथाप्येष तथैव दुर्गमः'।

टीकासाहित्यमस्ति विपुलं संस्कृतवाङ्मये। मन्ये, वैदिकवाङ्मय उपलब्धाः ब्राह्मणग्रन्था एव टीकासाहित्यस्योद्भवं प्रथयन्ति। संहितासु ये मन्त्रास्तेषां स्पष्टीकरणार्थं यज्ञेषु च विनियोगविधिनिर्देशनार्थमेव ब्राह्मणग्रन्थानामाविर्भावोऽभूत्। ततश्च टीकासरणौ निरुक्तं प्रसिद्धम्। तत्परं सूत्रग्रन्थानां टीकाः। एवं टीकाधारा मांसलतामायान्ती विविधशास्त्रग्रन्थानधिकृत्य स्मृति-पुराण-रामायण-महाभारतादीनां साहित्यग्रन्थानां चान्येषामपि ग्रन्थानां टीकाभिः समृद्धा विपुलाकारा भाति। आदिशङ्कराचार्यः, महर्षिपतञ्जलिः, सायणाचार्यः, कोलाचलमल्लिनाथसूरिः, वाचस्पतिमिश्रः, कुल्लूकभट्टः, श्रीमदभिनवगुप्तप्रभृतयो विश्रुताष्टीकाकारा अद्यापि स्वकर्तृत्वयशोभिर्जीवन्ति। संस्कृतवाङ्मयस्य सञ्जीवने तेषां महनीयं योगदानं विस्मर्तुं नैव शक्यते। सन्त्येते टीकाकाराः सर्वथा स्पृहणीया अभिनन्दनीयाश्च। टीकाया मुख्यतो द्वौ भेदौ भवतः—दण्डान्वया टीका, खण्डान्वया टीका। एतौ द्वावपि भेदौ पद्यकाव्यविषये सङ्गतौ। अत्र **प्रथमे भेदे**, पद्यस्यान्वयं विधाय तदनुसारमर्थः क्रियते। अनया रीत्या काव्यं व्याख्यायते। अस्यां टीकायां शब्दानां

व्युत्पत्तिः, विभक्तेर्लकारस्य वा निर्देशः, समासविग्रहः, सामान्योऽर्थः, सम्भावितो विशेषोऽर्थो मुख्यतो भवति। क्वचिच्च टीकान्ते तात्पर्यार्थो, भावो, रसोऽलङ्कारः छन्दश्चापि निर्दिश्यन्ते। मल्लिनाथः प्रायेणेमामेव टीकापद्धतिमाश्रयते। **द्वितीये भेदे** पद्यानामर्थोऽन्वयं विनैव क्रियते। पद्ये प्रयुक्तां पदावलीं प्रगृह्य प्रश्नप्रकारैराक्षिप्य तस्या व्याख्या विधीयते। एवं, खण्डान्वयायां टीकायामन्वयगता पदानां क्रमबद्धता न भवति किन्तु प्रश्नमाध्यमेन वस्तूपन्यासतोऽर्थावबोधः सम्यग् जायते। राघवभट्टकृता अभिज्ञानशाकुन्तलटीका खण्डान्वयाऽपि च नारायणकृता नैषधीयचरितटीका खण्डान्वयैव।

सन्ति टीकाया अन्येऽपि नैके प्रकाराः। ते सन्ति—शृङ्खलाटीका, शास्त्रीया टीका, तुलनात्मिका टीका, व्यवस्थापिका टीका, अनुगामिनी टीका, स्वतन्त्रा टीका, व्यापिका टीका, रसग्रहणात्मिका टीका च।

टीकायां षडङ्गानि निर्दिष्टानि—

पदच्छेदः पदार्थश्च विग्रहो वाक्ययोजना।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं विदुः॥

टीका सैवोत्कृष्टा भवति या पाठकानध्येतॄन् वा कविप्रतिपादितवस्तुनोऽर्थं सम्यग् बोधयति। समर्थो व्युत्पन्नश्च टीकाकारः स्वटीकाबलेन पाठकान् कवेर्भावभूमिं गमयति। ये टीकाकाराः 'सहृदयाः' न भवन्ति, ते स्वटीकाभिः मूलस्य सरलमपि वस्तु ग्रन्थिजटिलं कुर्वन्ति। यथा—मघवामूलं विडौजा टीका इति। ताष्टीका अनादृता भवन्ति यतो हि तासां न क्वचिदुपयोगः। एतादृशान् टीकाकारानुपहसता भोजराजेन यथार्थमेव चित्रितम्—

दुर्बोधं यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः[१]॥

एतद्विपरीतमेकस्यामादर्शटीकायां ते सर्वेऽपि गुणा भवेयुर्यैः स्पष्टार्थसहिताः काव्यस्य विविधाः पक्षा उद्भासितास्स्युः। भवेट्टीकाया भाषा सरला सुखबोधिका सर्वजनसंवेद्या च। शब्दानां व्याकरणसम्मता व्युत्पत्तिस्सिद्धिश्च, कोशपाठः,

---

१. पातञ्जलयोगसूत्रम्, भोजराजविरचितराजमार्तण्डवृत्तिः, भूमिका, श्लोकः षष्ठः।

सलक्षणमलङ्कारनिदर्शनम्, अर्थेन सहालङ्कारस्य समन्वयः, छन्दोनिर्देशः, प्रमाणानि, ध्वन्यर्थः, सन्दर्भसङ्ग्रहः, प्रयोजनम्, अर्थसारः, प्रश्नोत्तराणि, शङ्कासमाधानम्, ग्रन्थान्तरेषूपलब्धसमानवस्तुसङ्केतः, वैकल्पिकोऽर्थः, कथानक-रहस्यम्, दृष्टान्तः, परमतप्रदर्शनं तन्निरसनञ्च, पारिभाषिकपदलक्षणम्, कविप्रसिद्धिः, रसः, नायकनायिकालक्षणम्, रीति-गुण-दोषाविष्करणमित्येवमेते विषया तत्रादर्श-टीकायामवश्यमेव प्रयोक्तव्याः। अत एवैकस्यामुत्कृष्टटीकायां तेषां समेषां गुणानां सद्भावः समपेक्ष्यते, यैः सा टीका स्वप्रयोजनस्य सिद्धिमवाप्नुयात्। ग्रन्थस्य दुर्बोधं स्थलं स्पष्टीकुर्वन्त्या तया तन्निगूढरहस्योद्घाटनं तत्त्वोन्मीलनं वाऽभीष्टं प्रयोजनमिति।



# काव्यलक्षणान्वीक्षा

**प्रो. चन्द्रमौलिद्विवेदी**
अध्यक्षः, साहित्यविभागस्य
संस्कृतविद्याधर्मविज्ञानसङ्काये
काशी-हिन्दू-विश्वविद्यालये, वाराणस्याम्



काव्यशास्त्रस्य विचारणे प्रस्तुते काव्यस्य स्वरूपविचार एव प्रथमतया मनस्युदेति। किं नाम काव्यं यस्य शास्त्रं प्रतिपिपादयिषते। चेत् पूर्वतना आचार्यास्तस्य लक्षणं व्यदधुस्तर्हि तदर्वचीनाः सर्वथा तल्लक्षणं निरस्य तद्भिन्नलक्षणकरणोत्साहोद्यता वा तदेव स्फुटीकर्तुं कृतप्रत्यत्नाः। आद्यश्चेत् परम्पराया हानिः, द्वितीयश्चेत् काऽन्वीक्षा। तत्र—

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्।
यन्न विशेषविधेश्च समुत्थं प्रत्ययतः प्रकृतेश्च तदुत्थम्।।

इत्युक्त्या काव्यशब्दस्य नाम्नो वा प्रकृतिप्रत्ययावन्वेष्टव्यौ याभ्यां विशेषविधेः समुत्थानं भवति। तत्र कष्ट-वर्णे, कूङ्-शब्दे कुङ्-शब्दे कु-शब्दे इति चत्वारो धातवो लभ्यन्ते। तत्र कवृवर्णे इति पवर्गीयान्तो धातुर्न दन्त्यौष्ठ्यवकारान्ततां प्रत्ययसंयोगेन गन्तुं प्रभवति, अतोऽयं सर्वथा त्याज्यः। यैश्च प्रतिपादितमस्माद्धातोस्ते कदाचित् नोचितं कुर्वन्ति। अवशिष्टा ये त्रयो धातवस्तैः काव्यं व्युत्पादयितुं शक्यते। यत्र शब्दकर्मणोऽवश्यम्भावस्तत्र 'ओरावश्यके' इति सूत्रेण 'ण्यत्' इति कृत्प्रत्यये कृते काव्यं व्युत्पन्नं भवितुमर्हति। इत्थं काव्येषु शब्दस्यावश्यम्भावः, तं विना काव्यं न भवितुमेव शक्नोति। शब्दोपादानेनार्थः स्वयमेव प्रतीयते यतो हि प्रवृत्तिनिवृत्त्यर्थमुपात्तस्य शब्दरूपवाक्यस्य नैरर्थक्यं लोके न दृश्यते। 'अनन्यलभ्यो हि शब्दार्थः' इत्युक्तौ शब्दस्य प्रमाणान्तरनिरपेक्षप्रामाण्यहानेः। इत्थं शब्दो विनाऽर्थं न तिष्ठति, अर्थश्च शब्दं विनाऽपि तिष्ठति, यथा चाक्षुषप्रत्यक्षे अर्थो भवति किन्तु शब्दो नास्ति। यथोक्तम्—

नामरूपात्मकं विश्वं यदिदं दृश्यते द्विधा।
तत्राद्यस्य कविर्वेधा द्वितीयस्य चतुर्भुजः॥

इति कवेः कृतौ नाम्नः शब्दस्यैव प्राधान्यम्। चतुर्भुजकृतौ तु रूपस्यार्थस्य। अनुकरणात्मकशब्देन यद्यपि शब्दस्वरूपमात्रबोधो भवति न तेन प्रवृत्तिनिवृत्तिरूपव्यवहारो सेद्धुं शक्यते, तथापि अनुकरणेति विशेषणेन तद्व्यावृत्तिः। शब्दे तावदर्थसन्निहितिरस्त्येव अन्यथा अनुकार्येति विशेषणदानेऽपि नार्थप्रतीतिस्तस्मात् शब्दात् स्यात्। अतो महाभाष्ये गौरिति शब्दः गौरित्यर्थः इत्याद्युक्तम्।

इत्थं विचारणायां काव्यशब्दव्युत्पत्त्या शब्दार्थयोः समशीर्षिकया लक्षणे निवेशः किमुचित इति विचार उदैति। अत एव सर्वप्रथमं अग्निपुराणे—

संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली (अ. ३३७.६) इत्युक्तम्।

वाक्यमिति शब्दसंज्ञा। वच्-धातोः कृत्प्रत्यये ण्यति कृते 'ऋहलोर्ण्यत्' 'वचोऽशब्दसंज्ञायाम्' वाच्यम्, शब्दाख्यायां तु वाक्यम्। समानधातुप्रत्ययाभ्यां वाच्यवाक्ययोः सिद्धिः। कुत्वे शब्दसंज्ञा, अन्यथा चार्थ इति। इत्थं वाक्यशब्दयोर्नास्ति भेदः। आकाङ्क्षादियुक्त एव शब्दो भवति अन्यथा शब्दत्वहानिः। एकानेकाभ्यामेव शब्दवाक्ययोर्भेद इति प्रायोवादः। गच्छेत्यादेरेकत्वेऽपि वाक्यत्वम्। अत एव 'पदं' विहाय पदावलीति लक्षणे निविष्टम्।

इत्थं दण्ड्यपि—'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' (काव्यादर्शः १.१०) इत्युक्तवान्।

तदनन्तरं भामहस्तु 'शब्दार्थौ सहितौ काव्यमिति' लक्षणं (का. १.१६) कृतवान्। इतः प्रभृति केचन शब्दार्थौ, केचन च वाक्, वाक्यं, शब्दश्चेति विधेयतया प्राधान्येन काव्यलक्षणं व्यदधुः।

व्यासदण्डिभामहकृतलक्षणेषु दत्तावधानेनैवं प्रतिभाति—व्यासस्तावत् काव्यलक्षणं सम्पूर्णं, दण्डी तावत् काव्यस्य शरीरलक्षणं, भामहस्तु तावत् शरीरं विहाय, पुनः पूर्णं काव्यलक्षणं कृतवान्। इष्टार्थव्यवच्छिन्नेति इष्टोऽर्थो व्यवच्छिद्यते विच्छित्त्याऽऽव्रियते यया सेति विग्रहः सुकरः। इष्टोऽर्थः रसगुणालङ्कारादिः, विच्छित्त्या तु अनितरसाधारणपदप्रयोगविच्छित्त्या इत्यर्थः। अतः 'क्तप्रत्ययगुणीभूतो य इष्टार्थव्यवच्छेदः स शरीरप्राणः शरीरीति। काव्यस्य शब्दप्रधानत्वात् आपामरप्रसिद्धप्राप्त्यर्थं पदावली'ति लक्षणं कृतम्, न च त्यक्तं प्राचीनव्यासलक्षणान्वीक्षणम्।

भामहस्तु 'शब्दार्थौ' इति समशीर्षिकया द्वन्द्वेन शब्दार्थयोरुपादानं व्यधात्। किन्तु विधेयतया 'सहितौ' इति पदं प्रायुङ्क्त। अत्र पूर्वोक्तादिष्टार्थ-व्यवच्छिन्नेति पदाद् अर्थमाकृष्य पदावलीति पर्यायप्रायेण शब्देन सह द्वन्द्वसमासः कृतः, इष्टव्यवच्छेदस्थाने सहितौ इति विधेयतया प्रयोगश्च।

तत्र केचन 'सहितौ मिलितौ' इत्यर्थं कुर्वन्तो दृश्यन्ते मिलितौ द्वौ शब्दार्थौ इत्यर्थे कृते दोषो दुर्विवाद एव। द्वन्द्वेनाभिहितौ शब्दार्थौ समप्राधान्येन क्रियायामन्वितौ भवतश्चेत् कावश्यकता 'सहितौ'-पदस्य, द्वन्द्वेनैव सम्पृक्तत्व-बोधनात्। अतः सहितावित्यस्य अर्थान्तरमेव 'न संयुक्तौ' इत्युदितायां बुद्धौ 'यत्र विशेषविधेश्च समुत्थं प्रत्ययतः प्रकृतेश्च तदुत्थमि'ति वचो बुद्धौ विशति।

'सहितौ' हितेन सह सहितः ताविति विग्रहे हितपदार्थस्य प्रकृतिप्रत्यय-विचारणायां धाधातोः क्तप्रत्यये प्रथमपुरुषस्य द्विवचने रूपमथवा क्तिन्प्रत्यये सप्तम्यैकवचने 'हितौ' रूपं दृश्यते।

अभ्युपपदधाधातोरभिहितौ इति। तत्र 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपः' इति वार्तिकेन 'अभि'पदस्य लोपे कृते अभिहितश्चेद् वाच्यम्, अभिहितिश्चेदभिधेति पर्यायः स्यात्, तत्र वाच्येन हितेन सह सहितः, अथवा हित्या अभिधया सह 'सहितिः' इति रूपसिद्धिः सुकरा। अभिधया वृत्त्या वाच्यः शब्दश्च वेदादिषु प्रयुक्तयोः शब्दार्थयोर्वर्तते। अतः शब्दार्थौ इति लक्षणं काव्यातिरिक्तवेदादिष्वतिव्याप्तम्, तद्वारणाय 'सहितौ' इत्युक्तश्चेदवश्यमेव वाच्येन सह वाच्यवृत्त्यतिरिक्तवृत्तिबोध्यः कश्चन व्यङ्ग्यो द्योत्यः, अनुमेयः, तात्पर्यार्थो वा अर्थो ग्राह्यो भवति। स चार्थः गुणालङ्काररसादेर्विच्छित्तिप्रदः किमु वा स्वयं विच्छित्तिरूपः। इत्थम् इष्टार्थव्यवच्छिन्नेति पदमनुहरति 'सहितौ'-शब्दः। चेत् सप्तम्यन्तं तदानीं हित्या सह लक्षणव्यञ्जनादिव्यापारो ग्राह्यः, तदानीं लक्षणं भवति—अभिधया सह लक्षणाव्यञ्जनाऽनुमितितात्पर्याख्यादिवृत्तौ, 'शब्दार्थौ'-शब्दः वाच्यार्थश्च यदा स्यातां तदानीं काव्यम्। कदाचिदमुमेवार्थ-माधाय वक्रोक्तिजीविते काव्यलक्षणं विहितम्—

> शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
> बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।। (वक्रो.१.७)

सहितावित्यस्य सप्तम्यन्तं पदं किमुत प्रथमान्तं पदमुभयथा संग्रहः। प्रथमान्तं चेत् 'बन्धे' पदं विशेष्यम्, प्रबन्धे इत्यर्थः। व्यवस्थितौ सप्तम्यन्तश्चेत् सहितिः, यो बन्धः तस्मिन् 'शब्दार्थौ' व्यवस्थितौ इति मन्तव्यम्। अव्यवहितोपादानेन 'सहितिः' वक्रः कविव्यापार एव बुद्धो भवति।

'शब्दार्थौ' इति शब्देन अर्थग्रहणेऽपि शब्दस्य प्राधान्यद्योतनायैव पूर्वनिपातः। न च द्वन्द्वे उभयपदप्राधान्ये कथमत्र शब्दस्य प्राधान्यमिति प्रष्टव्यम्। चेद् अर्थस्यापि शब्दसमानकोटिकत्वेनोपादानं विवक्षितं स्यात् तदानीं 'शब्दश्चार्थः' इत्येव वक्तव्यतामर्हति। उक्तञ्च व्यक्तिविवेके आचार्यमहिमभट्टैः—

'तदिदमत्र तात्पर्यं यत् कथञ्चिदपि प्रधानतया विवक्षितं न स्यात् तन्नियमेनेतरेण सह समासमर्हतीति। इतरत्तु विशेष्यमन्यद् वाऽस्तु न तत्र नियमः। तेन द्वन्द्वपदानां सरूपाणां च पदानामर्थस्यान्योन्यं विशेषणविशेष्य-भावाभावेऽपि यदा प्रत्येकं क्रियाभिसम्बन्धोपगमलक्षणं प्राधान्यं विवक्ष्यते तदा तेषामपि समासः एकशेषश्च नेष्यत एव'। (द्वितीयविमर्शे मत्कृतविवेका-लोकव्याख्यायाम्, ३८६ पृष्ठे)।

इत्थं 'शब्दार्थौ काव्यं लक्षयतः' इति लक्षणक्रियायां समशीर्षिकयान्वेतुं शब्दश्चार्थश्चेति वक्तव्यम् (स्यात्), अन्यथा शब्दस्य प्राधान्यं निर्विवादमेव। उभयपदप्रधानं द्वन्द्वेति प्रायोवादः। इत्थं भामहेनाऽपि पूर्वाचार्यकृतकाव्य-लक्षणान्वीक्षणं कृतमेव। वामनेन काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते।

अत्राऽपि सहितत्वमेव गुणालङ्कारसंस्कृतत्वं मन्तव्यम्। काव्यशब्दोऽय-मित्यत्र इदमा पुरोनिर्दिश्यमानं वर्तमानं वा काव्यमित्युक्त्या परोक्षं प्राचीनमपि किमपि काव्यमेतदतिरिक्तमपीति भाति। सर्वं काव्यं शब्दार्थकाक्वादिधातुभिरेव निष्पन्नं किन्त्विदं काव्यं न केवलं प्रसिद्धार्थशब्दात्मकं प्रमाणात्मकमेवापि तु गुणालङ्कारसंस्कृतात्मकमिति ज्ञापयत्ययं शब्दः। अतः 'पश्य देवस्य काव्यं न ममार न जीर्यति' इत्यादिश्रुतेः प्रामाण्यम्। नामरूपात्मकं विश्वं.....इत्युक्तावपि नामात्मकविश्वस्य वेधाः कविर्भवति, अर्थात्मकविश्वस्य वेधा न कविरपि तु चतुर्भुज इत्येवार्थो बुध्यताम्। अत इदं दृश्यमानमर्थभूतं जगदपि काव्यभूतमेव इत्यर्थानवबोधमूलम्। अर्थभूतनाट्याङ्गानामपि काव्यत्वापत्तेः।

तर्हि कथम् अर्थेऽपि काव्यशब्दोऽयं वर्तत इत्यस्य विचारे 'सहिति' इत्यत्र अभिहित्या सहितः तदतिरिक्तः यो व्यापारः स अभिधावत् शब्दनाव्यापार इवार्थेऽपि कश्चन व्यापारो भवतीति व्यापारवत्त्वेन अर्थोऽपि शब्दपुच्छभूत एव मन्तव्यः, अर्थनाम्ना लोकप्रसिद्धशब्दार्थदृष्ट्या प्रत्यक्षीभूतया विभक्तोऽर्थः काव्ये व्यापारवत्त्वसाधर्म्येण भिन्नोऽप्यभिन्नः तद्गुणवत्त्वधी-प्रकाशनाद् रूपकवत् प्रथमान्तद्वन्द्वेन तावत् प्रत्यक्षविरोधः स्यात्, सप्तम्यन्तं 'शब्दार्थयोर्वर्तते' इत्युक्तेस्तत्रापि शब्दवद् व्यापारसम्भवः। चन्द्रालोके 'षड्-

विधामभिधां प्राहुः' तत्र निर्देशेन या अभिधा सा अर्थनिष्ठैव। 'कंसं हिनस्तिकंसारिः' इत्यादावुदाहृतम्। पण्डितराजेनापि शब्दस्यार्थगतः अर्थस्य शब्दगतः सम्बन्धविशेषोऽभिधेति लक्षणं कृतम्। लक्षणाव्यञ्जनयोस्तूभय-शब्दार्थनिष्ठत्वं व्यक्तमेव। इत्थं न जगद्रूपार्थात्मकोऽयं काव्यशब्दार्थः, अपि तु तदभिन्न इति शब्दार्थयोः काव्यं वर्तत एव न तु केवलार्थे। अभिधालक्षणाव्यञ्जनानां शब्दार्थोभयनिष्ठत्वं मदीयरसवसुमूर्तौ वृत्तिविचारे द्रष्टव्यम्।

आचार्यानन्दवर्धनः 'काव्यस्य शब्दार्थौ शरीरम्' इत्युक्तावपि न विसंवादः, सहितपदत्यागात्। शब्दार्थौ शरीरं सहितत्वं तु आत्मा। न तु नाट्यशास्त्राद् विरोधो मन्तव्यः, 'नाट्यस्यैषा तनुः स्मृता' इत्यत्र केवलं वाचः शब्दस्य वा तनुत्वात्। काव्ये शब्दस्यावश्योपादानत्वात् स तनुः शब्दव्यतिरिक्तार्थस्य कल्पनायां न काव्यत्वं रूपकत्वेति धिया वाचस्तनुत्वं दर्शितम्। शब्दोपादानेनाविनाभावसम्बन्धेन जायमानोऽर्थोऽपि चेत् शरीरं तर्हि का हानिः। शरीराद्व्यतिरिक्तात्मप्रतिष्ठाने नियतार्थशब्दयोस्तनुत्वमतिशाय्यर्थस्तु आत्मा।

भोजस्तु काव्यं शब्दात्मकं यथाव्युत्पत्ति, अर्थस्तु शब्दप्रतिपाद्य-त्वेनाविनाभावात्, शब्दोक्तशब्दनाव्यापारसत्त्वात्सम्बन्धिनोर्लाभात्। अतो यत् शरीरं श्रीमदानन्दवर्धनार्येण दर्शितं तदेव एतन्मतेन काव्यम्। एतेन आदिकवि-ब्रह्मोक्तश्रुतिपुरुषोक्तकाव्ययोरैक्यनिर्देशः आपतितः। पुनश्च पुरुषोक्तेदानीन्तन-काव्यस्य कृते निर्दोषादिविशेषणं दत्तम्। कीर्तिप्रीत्योर्लाभप्रयोजनं पुरुषस्यैव न तु ब्रह्मण इति धियोक्तम्—

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।<br>
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति॥

सहितशब्दार्थस्य काव्यत्ववादिनां मते सालङ्कारस्यैव शब्दार्थस्य काव्यत्वं भोजमते न काव्यस्यालङ्कारादिरिति बोद्धव्यम्।

मम्मटेनतु भामहादिभोजयोरुभयोरप्यन्वीक्षणं लक्षणे कृतम्। सहितयोः गुणालङ्कारोपस्कृतयोः शब्दार्थयोरुक्तौ मम्मटो भोजानुसारेणालङ्कारस्य काव्य-बहिरङ्गत्वं गुणस्य चान्तरङ्गत्वं वामनप्रभृत्यनुसारेण गृहीतवान्। अतो लिखिलम् 'अनलङ्कृती पुनः क्वापि' इति। 'सगुणौ' पदं वामनाद्युक्तगुणसहितौ मन्तव्यम्। रसमात्रधर्मोक्तगुणोपादाने शब्दार्थविशेषणत्वेन गुणेभ्यो गुणीलक्ष्य आक्षेप्यो वा

स्यात् तदनन्तरं शब्दार्थयोरन्वितत्वे सरसावित्यस्यैव प्रयोगे लाघवः, लक्षणे तु जघन्यवृत्तेरनाश्रय एव श्रेयस्करः। त्रिविधकाव्यमध्ये चित्रकाव्येऽव्याप्तिर्न स्यादिति धिया सामान्यं काव्यलक्षणं विधाय पुनः ध्वनिगुणीभूतव्यङ्ग्याभ्यां वरकाव्यं न्यदर्शयत्। सामान्यलक्षणं तु सर्वत्र प्रसृतम्, तत्रैव चेद् वाच्यादतिशायी व्यङ्ग्यः प्रधानश्च तदानीं ध्वनिः वाच्यादनतिशायी चेद् गुणीभूतव्यङ्ग्यं काव्यं भवति। एतदतिरिक्तमवरं काव्यमिति स्पष्टं विविच्य निर्दिष्टम्। अतः सगुणावित्यादिविशेषणेनोत्कृष्टकाव्यलक्षणं कृतमिति यैरुच्यते ते अश्रद्धेयाः। अत्रापि सामान्यं लक्षणं काव्यशरीरमात्रम्। तत्रैव वरकाव्यं तु 'सहितौ' इति पूर्वोक्तकाव्यलक्षणस्यान्वीक्षणम्। ध्वनेर्लक्षणमेवोत्कृष्टकाव्यस्य लक्षणम्। ननु विरुद्धमुक्तं यतो हि ध्वनिलक्षणे शब्दस्योपादानमेव नास्ति, विना शब्दं केवलेनार्थेन काव्यत्वमेव पूर्वं निरसितमिति पूर्वापरविरोध आपतित इति न वक्तव्यम्। यतो हि—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।

इति काव्यलक्षणे शब्दार्थयोरुपादानेऽपि मम्मटकृतध्वनौ शब्दस्यानुपादानमपि किमपि पूर्वाचार्यवचोऽन्वीक्षणं मन्तव्यम्। ध्वनिलक्षणे आचार्यो महिमभट्टो दशदोषानुद्भाव्य ध्वनिलक्षणं खण्डितवान्। तत्रैव उपसर्जनीकृतस्वार्थ उपसर्जनीकृतार्थः शब्दः यथोपात्तः तथैवाभिधापि उपसर्जनीकृतात्मतयोपादेया। अन्यथा दीपकादावलङ्कारे उपमायाः प्रतीतौ ध्वनित्वं व्यङ्ग्यत्वं वा न स्यात्। चेद् अर्थशब्दयोरुपसर्जनीकृतस्वार्थत्वाभिधानसामर्थ्यादभिधाया उपसर्जनी-भावावगतिश्चेत् तर्हि अर्थस्यैवोपसर्जनीभावो वक्तव्यो न शब्दस्य, अभिधाया इव शब्दस्याप्यवगतिसिद्धेरिति लक्षणवाक्ये व्यर्थं शब्दग्रहणम्। (व्यक्तिविवेक-विवेकालोके, पृ.२६)

इत्थं सर्वं पदजालं धनिलक्षणतो निरस्य केवलं 'यत्रार्थस्तमर्थं व्यनक्ति स ध्वनिः' इत्येव लक्षणं कर्तव्यम्।

इत्थं महिमभट्टमनुसरन् आचार्यो मम्मटः ध्वनिलक्षणमेतावदेवाकृत। 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः' इत्यत्र बहुसम्मानपूर्वकमाचार्यमहिभट्टमनुसरतो ध्वनिलक्षणान्वीक्षणं तस्य प्रतिभाति।

काव्यप्रसङ्गे अर्थोपादानेनैव शब्दावगतिः, अतः शब्दोपादानं नावश्य-मर्हति।

अच्युतरायस्तु मम्मटकृतकाव्यसामान्यलक्षणमेवानूदितवान्—

तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम्।
गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम्।। (सा.सा. १.१८)

एवं 'शब्दार्थौ सविशेषणौ' काव्यं स्वीकुर्वत्सु हेमचन्द्रवाग्भटादयो मनाक् संशोध्य समानमेव लक्षणमकुर्वन्।

शौद्धोदनिः वाक्यं, जयदेवः वाक्, विश्वनाथो वाक्यं, जगन्नाथः 'शब्दः' काव्यमिति ब्रुवाणा अग्निपुराणकारदण्डिनावेवानकुर्वन्ति। तत्र शौद्धोदनि-विश्वनाथौ इष्टार्थव्यवच्छिन्नेति पदाद् इष्टार्थेन रसं गृहीतवन्तः। जयदेवस्तु, दोषाभाव-लक्षण-रीति-गुण-भूषणालङ्कार-रसवृत्तयश्चेष्टार्थत्वेन गृहीताः।

पण्डितराजजगन्नाथेन 'शब्दस्य काव्यत्वं रमणीयार्थप्रतिपादकत्व-विशिष्टस्य लक्षितम्। अत्र कुधात्वर्थशब्दस्य प्राधान्यं काव्ये लक्षितम्, तथा पूर्ववर्तिनामाचार्याणां च लक्षणान्वीक्षणं प्रकाशितम् इत्येतल्लक्षणं विवृणोमि।

आचार्यपण्डितराजजगन्नाथमहोदयेन काव्यशास्त्रं विवृण्वता सूक्ष्मवस्तु-विमर्शनाय न मनागपि शैथिल्यं क्वापि प्रकाशितम्। यथाभिप्रायं स्वयमेव समुचितशब्दार्थोपस्थापनसमर्थया प्रतिभया यत् किञ्चित् प्रसूतं तत् प्राचीनसिद्धान्तापरिहारपूर्वकं न किञ्चिद् नवीनमुन्मीलितमिति न। लेखेऽस्मिन् प्राचीनानुबद्धमपि सर्वथा नवीनमिव प्रतिभातं वस्तु किमप्युन्मीलयामि।

तत्र कीर्तिपरमाह्लादगुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्य-स्येत्युक्त्या काव्यस्य यत् प्रयोजनं प्राचा 'करोति कीर्तिं प्रीतिञ्चेति' 'काव्यं यशसेऽर्थकृते व्यवहारविदे' इत्यादिना दर्शितं तन्नातिप्रधानतया काव्य-विशेषणत्वेनात्र निबद्ध्यैतत् सूचितं यत् काव्यस्येयत्तया प्रयोजननिरूपणं नोचितम्। कीर्तिपदेन यशः साक्षादुपात्तं, गुरुप्रसादेन व्यवहारज्ञानं राजप्रसादेन अर्थप्राप्तिः, देवताप्रसादेन शिवतरक्षतिः, तथा च परमाह्लादपदेन परनिर्वृतिश्च दर्शिता। राष्ट्रलोकाभ्युदयादिः आदिपदेन संग्राह्यः।

'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' इति धिया प्रयोजनमुद्दिश्य काव्यस्य व्युत्पत्तेः काव्यकर्तुः काव्यभावयितुश्चोभयोरावश्यकत्वात् काव्यलक्षणं निरूपयति। तच्च काव्यलक्षणं प्राचीनैर्विहितमपि गुणालङ्कारादिविशिष्टं काव्यं पूर्वमनूद्य गुणालङ्कारादिभिर्निरूपणीये तस्मिन्नित्युक्त्या पुनः स्वलक्षणमुप-स्थापयति। गुणालङ्कारादिभिर्विशेषणैः विशेष्यतया स्थिते काव्ये विशेष्यताऽ-वच्छेदकं यद्यपि गुणालङ्कारादि वर्तते तथापि तल्लक्षणं युक्तं न प्रतिभाति। यतो

हि गुणालङ्कारादीनां बहुसंख्याकत्वात् तैः स्वरूपस्यानुगमो न कर्तुं शक्यते। अतस्तदितरं विशेष्यतावच्छेदकमिष्यते येन काव्येतरभेदसाधनरूपलक्षणं सुस्थिरं भवेत्। शब्दार्थालङ्कारादीनां वेदादिष्वपि सत्त्वात् तदितरभेदबुद्धिर्न तैः साध्यते, अतः लक्षणं कृतम्—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'। इति।

अर्थप्रतिपादकः शब्दः स्वयंसिद्धः। वेदादिषु सर्वत्र शब्दस्यार्थप्रतिपादकत्वं लभ्यते। अतः शब्दस्यार्थप्रतिपादकत्वविशेषणं निरर्थकम्। व्यभिचाराभावात्। न व्यभिचारः अशब्दात्मककटाक्षादिष्वपि अर्थप्रतिपादकत्वमस्तीति तद्वारणाय विशेषणमुचितमित्यपि वक्तुं युक्तम्। 'तत्र कीर्तिपरमाह्लादिना' तत्र पदेन 'रसगङ्गाधरनामकसन्दर्भे' इत्यस्योपादानात् स्वयमेवात्र शब्दोपस्थितिः, शब्दं विना काव्यशास्त्रसन्दर्भस्यायुक्तत्वात्। अतोऽत्र शब्दार्थयोः प्रतिपाद्यप्रतिपादकत्वं स्वयमेवागतं, शब्दोपादानात् पुनरुक्तत्वम्।

इत्थं तदितरभेदबुद्धिसाधनत्वेन 'रमणीयेति' पदं गृहीतम्। रमणीयो योऽर्थस्तस्य प्रतिपादकः शब्दः काव्यमित्यर्थे कृतेऽपि न निस्तारः। रमणीयेत्यानुपूर्व्युच्चारणचतुर्वर्णात्मकरमणीयपदार्थस्य प्रतिपादको शब्दः रमणीयशब्दो स्तीति विशेषणदानेऽपि न निस्तारः। रमणीयपदमात्रेऽपि काव्यत्वप्रसक्तिः।

रमणीयपदमात्रेऽतिव्याप्तिवारणाय रमणीयपदार्थः परिष्क्रियते। रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता। लोकोत्तराह्लादेन, लौकिकाह्लादस्य वारणं क्रियते। 'पुत्रस्ते जातः, धनं ते दास्यामि' इत्यादौ वाक्यप्रतिपादितार्थविषयकज्ञानजन्याह्लादो न लोकोत्तर इति न लौकिकशब्देऽनिव्याप्तिः। सर्वैः खलु लौकिकं वस्तु दृश्यते अनुभूयते, ततश्च सुखदुःखादिरधिगम्यते, लोकोत्तरं तु केनानुभूतम्, अनुभूयते वा अतः शशविषाणवत् लोकोत्तरत्वोक्तिः निरसनीयेति विचार्य सहृदयानुभवसाक्षिकोऽयमाह्लाद इति न शशविषाणवद् लोके तरं मन्तव्यम्। सर्वहृदयानुभवसाक्षिको नास्ति अत एव लोकोत्तरत्वं न जातिः, अपि तु जातिविशेष एव। इदमेवात्र चमत्कारत्वापरपर्यायेणोच्यते यत् लक्षणपरिष्कारे 'चमत्कारत्ववत्वं काव्यत्व'मिति वक्ष्यते। तादृशचमत्कारस्य यद् जनकं ज्ञानं तदपि न घटपदादिज्ञानसामान्यमपि तु चमत्कारत्वापरपर्यायलोकोत्तरत्वावच्छिन्ने पुनः पुनरनुसन्धानात्मा भावनाविशेषरूपमस्ति। इत्थं रमणीयतेत्यस्य, चमत्कारजनकभावनाविषयतेति पदार्थः। लक्षणात् प्रतिपादकपदनिरासे 'रमणीयार्थः शब्दः काव्यमि'ति फलितम्। रमणीयोऽर्थो यस्य इति

बहुव्रीहिणा प्रतिपादकत्वस्य लाभात् चमत्कारजनकभावनाविषयार्थकशब्दत्वं काव्यत्वमिति फलितम्। काव्यशास्त्रप्रकरणे शब्दार्थयोः प्रतिपाद्यप्रतिपादकत्वं स्वयमेव सिद्धम्। आचार्येण रमणीयार्थेति यथाश्रुतलक्षणस्यानुपूर्विविन्यासं कुर्वतोच्यते चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वं काव्यत्वमिति। रमणीयेत्यस्य चमत्कारजनकभावनाविषयोऽर्थः। तस्य प्रतिपादकः यः शब्दः तत्त्वं काव्यत्वमिति। वस्तुतोऽत्र प्रथमपरिष्कारेऽपि विधेयतया शब्दस्यैवोपादानाद् अर्थप्रतिपादकशब्दस्य काव्येतरस्थलेऽपि सत्त्वात् समासे निपतितमपि विधेयतया विवक्षितरमणीयपदार्थस्य सर्वभरसहिष्णुत्वाद् विधेयशब्दमुद्देश्यीकृत्य लक्षणं पुनः परिष्क्रियते यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकताऽवच्छेदकं तत्त्वमिति।

अत्र यत्पदेन लक्षणोक्तप्रकृतशब्दो गृह्यते, अतः शब्दप्रतिपादितार्थ-विषयकभावनात्वं चमत्कारजनकतावच्छेदकमित्यायातम्। चमत्कारजनिका या भावना तस्या विषयतयाऽर्थोऽन्वेति। अतः कारणतावच्छेदको विषयतया अर्थोऽपि कार्यतया चमत्कारेऽपि। एतदेव काव्यलक्षणं सम्यक् प्रधानतयोपादेयार्थविधेयत्वेन रमणीयत्वेन निष्पादितम्। पुनः यत्तृतीयं लक्षणं परिष्कृतं तत् किमर्थम्? यदुच्यते टीकाकारैः लक्षणेऽस्मिन् यत्सर्वनाम-पदप्रयोगबलात्तटस्थलक्षणं परिहर्तुं स्वरूपलक्षणार्थं तृतीयमिति तत्र विचारसहम्। यतो हि अत्र यत् सर्वनाम्ना प्रकृतलक्षणोक्तशब्दस्यैव ग्रहणं नान्यस्येति। श्रौतादिशब्दवारणायैव शब्दप्रतिपादितार्थेति लक्षणं कृतम्। यथोक्तचमत्कार-जनकतावच्छेदकभावनात्वस्य तत्राभावात्।

यत्तु नागेशेनोक्तं धारावाहिकसकलज्ञानविषयतादृशार्थप्रतिपादके वाक्येऽतिव्याप्तिपरिहाराय, यत्प्रतिपादितेति लक्षणमुक्तं तदपि चिन्त्यम्। चमत्कारजनकभावनाया विषयः (कारणं) चमत्कार्यर्थ एव नाचमत्कारीति सुलभम्। कथं धारावाहिकतयाऽचमत्कार्यर्थस्य विषयतया ग्रहणं युज्यते।

यच्च-यत्प्रतिपादितार्थविषयकभावनात्वमित्यस्य व्याख्याने यत् पदेन, यादृश्यनुपूर्विप्रतिपादितार्थविषयकत्वविशिष्टभावनात्वं तज्जनकताऽवच्छेदके तादृश्यनुपूर्वीमत्वमिति व्याख्यातं तदपि चिन्त्यम्। यादृशानुपूर्व्युच्चारित-शब्दस्यैव विधेयतयोपादानात्। नात्र विधेयतया शब्दस्योपादानं पण्डित-राजस्याभीष्टम्, प्रथमलक्षणेनैवाधिगतत्वात्। तृतीयलक्षणविधानाय तद्हृदयमेवं भाति—यदत्र पूर्वमुक्तम्। अर्थशब्दयोः प्रतिपाद्यप्रतिपादकभावः लोकशास्त्रसिद्धः। स्वयंसिद्धस्य पुनः शब्दतः कथनं पुनरुक्तदोषदुष्टम्। तत्रापि लक्षणे तु

विशेषतोऽवकरप्रायपदार्थसन्निवेशः परिहार्यः। अतः प्रतिपादकत्वं वृत्त्यविषयत्वमेव नेयम्। संसर्गतः प्रतिपादकत्वस्य बोधो भवतु इति विचार्य, केवलं 'चमत्कारत्ववत्त्वं काव्यत्वमि'ति लक्षितम्। लक्षणेऽस्मिन् नास्ति किमपि पुनरुक्तं न च तदितरालक्ष्यगम्यत्वम्। काव्यशास्त्रे काव्यलक्षणं शब्दं विना न सम्भवतीति शब्देतरप्रतिपादकत्वस्य वारणम्। यतो हि तल्लक्षणं तावन्निरूप्यते इति पूर्वमेवोक्तम्। केवलं काव्यीयचमत्कारग्रहाय, चमत्कारत्वं जातिविशेषः पूर्वं प्रतिपादितः, अतः तादृशजातिविशेषचमत्कारत्ववान् यश्चमत्कारः तन्निष्ठजन्यतानिरूपितजनकता भावनायां तिष्ठति तस्या विषयो योऽर्थस्तस्य प्रतिपादकत्वसंसर्गः शब्दे, इति स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकत्वं ससर्गः, न वाच्यवृत्तिविषयः। तेन संसर्गेण चमत्कारत्ववत्त्वं शब्दत्वं काव्यत्वमिति लक्षणं पर्यवसितं सर्वविधदोषशून्यम्।

संक्षेपेणायं सारांशः—रमणीयार्थेति लक्षणे विधेयतयोपात्तमपि शब्दं न काव्यलक्षणत्वेनेष्टं यतो हि काव्यमुद्दिश्य कृतं लक्षणम् उद्देश्यतावच्छेदकत्वेन शब्दस्यावस्थानात्। अतः काव्यपदोपादानेनैव शब्दात्मकत्वं तस्य सिद्धश्चेत् किं पौनरुक्त्या। सामान्यशब्दरूपस्य परिहाराय अर्थप्रतिपादक इति विशेषणविशिष्टं क्रियते तदपि न कश्चन लाभः। शब्दनिष्ठशब्दनाव्यापारेणैव सम्बन्धिनोऽर्थस्य लाभात् शब्दार्थयोः प्रतिपादकप्रतिपाद्यत्वं लोकप्रसिद्धमेव। 'सम्भवव्यभिचाराभ्यामेव विशेषणमर्थवत्' इति न्यायेन शब्दस्यार्थप्रतिपादकत्वमव्यभिचरितश्चेत् विशेषणं व्यर्थम्, इत्थं 'अर्थप्रतिपादकः शब्दः' इत्युपादानं पिष्टपेषणमेव। यथापूर्वं ध्वनिलक्षणखण्डने महिमभट्टस्य मतं दर्शितं तथा च मम्मटेन तस्यानुसरणमपि निरूपितम्। अतः पण्डितराजः महिमभट्टमम्मटाचार्ययोर्लक्षणान्वीक्षणं कुर्वन् यन्नव्यन्यायदृष्ट्या काव्यलक्षणं विहितं तत्सर्वथाऽस्पृष्टपूर्वाचार्यलक्षणं पण्डितराजत्वमस्य साधयति। परिष्कृतलक्षणत्रये पूर्वलक्षणद्वयं तु वृत्तिविषयकं तृतीयं तु ससंर्गविषयकमिति भेदः आद्ययोस्तु प्रथमपरिष्कारः यथालक्षणं शब्दविधेयताकत्वेन, द्वितीयस्तु शब्दोद्देश्यकभावनाविषयार्थकत्वविधेयताकत्वेन। तृतीयस्तु रमणीयार्थनिष्ठचमत्कारत्वविधेयताकत्वेन संसर्गमर्यादयेति वैलक्षण्यं त्रिषु मन्तव्यम्।

इत्थं काव्यपदव्युत्पत्तिलभ्यशब्दमात्रमेव काव्यस्य तनुः, न तत्र तदविनाभावलभ्यनियतार्थस्य योजनमावश्यकम्। सहिताविति विधेयतयोपात्तसहितपदार्थस्यैव रमणीयपदार्थत्वेन ग्रहणं विधायोद्देश्यकोटौ सत्यामपि विधेयतयैव परिष्कारः।

अत्र केचन वदन्ति वस्तुतः पण्डितराजोऽपि 'शब्दार्थौ काव्यमि'त्येव प्रच्छन्नतया स्वीकृतम्, अन्यथा प्रतिभालक्षणे काव्यघटनानुकूलशब्दार्थोपस्थितिः शब्दार्थौ गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तः तदाद्यमित्यादिकं कथं ग्रथ्नीयात्। अन्यथा पूर्वापरवचोविघात इत्यादिकं कथनं निःसारम्। प्रतिभालक्षणे स्वकाव्यलक्षणस्य योऽर्थः तस्योपस्थितिः दर्शिता न तु वाच्यार्थस्य। लक्षणस्यार्थस्य रमणीयविशेषणकत्वेन, चमत्कारजनिका या भावना तस्य विषयः योऽर्थः स गृहीतः, न तु 'शब्दार्थौ' इत्यादौ योऽर्थः स इति। अत एव काव्यघटनानुकूलशब्दार्थोपस्थितिरित्युक्तम्। काव्यघटनानुकूलता रमणीयार्थे इति न दोषः। ध्वनिलक्षणे शब्दार्थौ गुणीभावितात्मानौ इत्यत्र योऽर्थ उपात्तः स नियतार्थः वाच्यार्थोऽपि भवन् न दोषावहः शब्दमात्रस्य काव्यत्वे। ध्वनिलक्षणे शब्दो गुणीभावितात्मेति कथिते वाच्यार्थं प्रति शब्दस्य गुणीभावितात्मत्वं लोकत एव सिद्धम्। यो हि यदर्थमुपादीयते तं प्रति तस्य गुणीभावितात्मत्वं व्यवहारत एव सिद्धम्, यथा जलार्थमुपादीयमानस्य घटस्य। अतस्तादृशः शब्दो वाच्यं प्रकटयतीति, अनिष्टवारणाय अर्थस्योपादाने (काव्यस्य शब्दत्वलक्षणे) न काचिद् हानिः। अतो यैरुच्यते, शब्दार्थयोः काव्यत्वं निर्दिशन्तोऽपि मुधैव मम्मटस्य काव्यलक्षणमखण्डयन् पण्डितराजाविचारितारम्भकाः। इत्थं यथाव्युत्पत्ति यथालोकव्यवहारं 'काव्यं श्रुतमित्यादि'-शब्दस्यैव काव्यत्वम्।

यत्तु नागेशेन काव्यं श्रुतं काव्यं बुद्धमित्युभयप्रयोगदर्शनात् काव्यस्यार्थरूपत्वमिति तत्तुच्छम्। काव्यं बुद्धमिति व्युत्पत्त्यैव काव्यस्य शब्दत्वे बुद्धत्वस्य बाधः, तथा सति लक्षणाया विषयः, न तु अभिधायाः। 'तदधीते' इति सूत्रेण वेदस्य शब्दराशित्वेन वेदपाठप्रवणो वैदिकः, न केवलं वेदपाठी एव वैदिकोऽपि तु 'तद्वेद' तदर्थज्ञस्यापि कृते वैदिकपदप्रयोगः करणीय इति धिया 'तदधीते तद्वेद' इति सूत्रं रचितम्। इत्थं शब्दज्ञमात्रे अर्थज्ञमात्रे, शब्दार्थोभयज्ञमात्रेऽपि वैदिकपदप्रयोगः साधुः। किन्त्वत्रार्थमात्रे न क्वापि काव्यप्रयोग इति दृष्टान्तदार्ष्टान्तिकयोः विसंवादः।

शब्दार्थौ न काव्यमिति निराकुर्वतोक्तं शब्दार्थयोः काव्यत्वं व्यासक्तं प्रत्येकपर्याप्तं वा। व्यासज्यवृत्त्या चेत् 'एको न द्वौ' इति व्यवहारस्येव श्लोकवाक्यं न काव्यम् इति व्यवहारस्यापत्तेः। न द्वितीयः, एकस्मिन् काव्ये काव्यद्वयव्यवहारापत्तेः। व्यासक्तं तु एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिकत्वम्। शब्दार्थौ काव्यमित्यत्र काव्यत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं शब्दार्थो-

भयगतद्वित्वं न तु एकत्वम्, अतो द्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वं काव्यं व्यासज्यवृत्तित्वेन सङ्गतम्।

प्रत्येकपर्याप्तं प्रत्येकनिरूपितपर्याप्तिमत्। पर्याप्तिश्चायमेक इमौ द्वौ, इत्यादावेकत्वद्वित्वादेः स्वरूपसम्बन्धविशेषः। द्वित्वादिप्रतियोगिकभेदस्य एकस्मिन् सत्त्वेन 'एको न द्वौ' इत्यादि यथा प्रामाण्यं तथा शब्दार्थोभय-प्रतियोगिकभेदस्य एकस्मिन् श्लोकवाक्ये सत्त्वेन श्लोकवाक्यं न काव्यमित्यस्यापि प्रामाण्यं स्यात्। प्रत्येकपर्याप्तञ्चेत् एकस्मिन् काव्ये शब्दमादायैकं काव्यमर्थमादायैकञ्चेति काव्यद्वयव्यवहारापत्तेः। प्रत्येकपर्याप्तित्वं नाम एकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकत्वम्। शब्दः काव्यम्, अर्थः काव्यमिति काव्यद्वयव्यवहारः। काव्यत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं शब्दगतैकत्वं किं वा अर्थगतैकत्वम्, अत एकत्वावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगिकत्वं काव्यत्वं प्रत्येकपर्याप्तित्वेन सङ्गतम्। इत्यादि रसगङ्गाधरे निर्दिष्टम्।

घटो न घटपटौ इत्यादिवत् काव्यं न शब्दार्थौ। तथा च घटोऽपि द्रव्यं पटोऽपि द्रव्यं तथापि एकत्वं द्वित्वमादाय भेदाभावो दृश्यते, शब्दार्थौ तु शब्दः आकाशगुणः अर्थस्तु द्रव्यरूपः गुणत्वद्रव्यत्वजातिभेदात् सर्वथा शब्दार्थ-योर्भिन्नत्वेऽपि यदेकत्ववत्काव्यत्वेनाभेदः स्वीक्रियतेतत्तु सर्वथा न विचारसहम्, व्याकरणादिसर्वतन्त्रविरोधात्।

'शब्दार्थौ' इति द्वन्द्वादिनोपात्तार्थस्य न तावत्प्रतिभासंरम्भगोचर-चमत्कारजनकभावनाविषयार्थात्मकत्वं तथा चेत् गुणालङ्कारादिविशेषणानां वैयर्थ्यम्, गुणालङ्कारादिसाहाय्येनैव चमत्कार्यर्थस्याभिव्यक्तेः, अथवा गुणालङ्कारादिरूपचमत्कार्यर्थस्याभिव्यञ्जनाय शब्दाभिहितार्थस्यैव 'शब्दार्थौ' इत्यादौ उपादानम्। कविसमवेतरसबोधौपयिकसामग्रीसंघटनविषयकज्ञानकर्मता न वाच्येऽर्थे अपि तु व्यङ्ग्येऽर्थे यस्तु पश्चाद्भावी रमणीयार्थ इति। अतः लोकोत्तरवर्णनानिपुणकविकर्मता न वाच्येऽर्थे इति नैकधाचार्यैर्निर्दिष्टम्। शब्दोच्चारणाव्यवहितोत्तरकालप्रतिपादितार्थ एव 'शब्दार्थौ' इत्यादेः गृहीतम्। व्यञ्जकरूपार्थो भिन्नः रमणीयार्थत्वेन व्यङ्ग्यार्थस्तु भिन्नः, भिन्नकालिकत्वात्। अत एव 'अर्थस्य व्यञ्जकत्वे तु शब्दस्य सहकारिता' शब्दार्थयोः सहचरितत्वात्। अत एव अर्थशक्तिमूलकध्वनिः अर्थगतदोषगुणालङ्काराणाञ्च निरूपणं सङ्घटते। अतो यैस्त्वाचार्यैरनुपहसनीयकाव्यलक्षणं प्रकाशकारेणोक्तमिति किं नोत्कृष्टकाव्यलक्षणमिति व्याह्रियते, तन्नोचितम्।

चेदनुपहसनीयोत्कृष्टकाव्यलक्षणमेवेदं तर्हि काव्यस्य तृतीयावरकाव्यभेदे कथं लक्षणं घटेत। न ह्युत्कृष्टार्थकवरकाव्यस्य तथा च तदितरावरकाव्यस्यैक्यं वदितुं युक्तम्। व्यङ्ग्यात्मकरमणीयार्थमादाय वरत्वं ध्वनिगुणीभूत-व्यङ्ग्ययोस्तदितराव्यङ्ग्यार्थात्मकमवरत्वम् अधमकाव्ये च निर्देशाय तददोषौ शब्दार्थौ इति सामान्यकाव्यस्य लक्षणमादौ कृतमिति मन्तव्यम्। विशेषकाव्यानां तु लक्षणोदाहरणं पृथक्तयैव निर्दिष्टम्। अनुपहसनीयत्वं तु शक्तिनिपुणताभ्यासानां समवधाने, अवरत्वं तु हेतुत्रितयमध्यान्यतरराहित्ये युक्तम्, न तु शब्दार्थौ इति काव्यलक्षणेन वरकाव्यत्वं लक्षितम्। सगुणौ सालङ्कारौ इति विशेषणेऽपि शब्दगतगुणालङ्कारयोः वाच्यार्थगतगुणालङ्कारयोः वामनाद्युक्तयोर्ग्रहणाय दत्ते। न तु व्यङ्ग्यार्थगतगुणालङ्कारग्रहणाय। तद्विशिष्टयोः शब्दार्थयोरेव व्यङ्ग्यरसवस्त्वलङ्काराङ्गिनामर्थानां व्यञ्जकत्वम्। अतो गुणपदेन गुणिनं रसमभिलक्ष्य रसवन्तावित्याद्यर्थबोधो न प्रकाशानुरूपः। पूर्वावरग्रन्थ-व्याघातात्।

लोकोत्तरत्वं नाम कविप्रतिभा। तस्यां यः खलु विषयितया रमणीयार्थो भासते स प्रथमकोटिकः। तदानीं तदर्थौपयिकशब्दार्थसंघटनमिति तस्य अपरा कोटिः, न तु तयोः समकालिकत्वम्। सहृदयहृदये तु क्रमेण शब्दः संकेतः वाच्यर्थः, तदनन्तरं रमणीयार्थः स्फुरतीति सर्वविदितम्।

ननु शब्दस्य काव्यत्वे दृश्यश्रव्यभेदाभ्यां काव्यं द्विधेति न व्यवहर्तुं शक्यते इत्युक्तिर्न विचारसहा। यैरेवमुच्यते तैः स्वयमेव भ्रान्तम्। शब्दं विना दृश्यमात्रस्य काव्यत्वे सर्वेषां नाट्याङ्गानां काव्यत्वापत्तिरिति ध्येयम्। अतो 'धनञ्जयः श्रव्यमेव भवेत् किञ्चित्, दृश्यश्रव्यमथापरम्' इत्युक्तं विशेषतो मम रसवसुमूर्तौ ग्रन्थे द्रष्टव्यम्।

चेद् विशेष्यतावच्छेदकस्य लक्षणत्वमिति 'गुणलङ्कारादिभिर्निरूपणीये तस्मिन्' इति पण्डितराजोक्तौ वदतोव्याघातः। गुणालङ्कारयोर्न काव्यलक्षणे निवेश इति चेत् कथं 'गुणालङ्कारवत् काव्यमि'ति तदुक्तौ फलिततया निवारयितुं शक्यत इति कथनमपि नोचितम्। विशेष्यतावच्छेदकं तदितरभेदबुद्धौ साधनं च तल्लक्षणं तावन्निरुप्यत' इति लक्षणे विचारः कर्तव्यः।

विशेष्यतावच्छेदकं तदितरभेदबुद्धौ साधनमिति लक्षणं द्वयं वा एकमेव। तत्र विशेष्यतावच्छेदकं लक्षणं, प्रयोजनञ्च तदितरभेदबुद्धौ साधनम्। व्यावृत्तिर्व्यवहारश्च लक्षणस्य प्रयोजनम्। तत्र व्यावृत्त्यर्थं स्वेतरभेदेति कथनम्। काव्यं स्वेतरभिन्नं रमणीयार्थप्रतिपादकत्वे सति शब्दत्वादित्यनुमानेन

स्वेतरभेदानुमितिरत्र प्रयोजनम्। लक्षणं द्विविधं क्वचिद् विशेष्यतावच्छेदकं क्वचित्तद्भिन्नम्। तत्र अन्त्यो विशेषः, इत्यत्र अन्त्यत्वं विशेषलक्षणम्। तच्च विशेष्यतावच्छेदविशेषत्वरूपं विशेषत्वस्य जातित्वाद्यभावेन तदभिन्नत्वात्। क्वचिद् तद्भिन्नम्। यथा गन्धवती पृथिवीति गन्धो पृथिव्या लक्षणम्, तच्च विशेष्यतावच्छेदिकायाः पृथिवीत्वजातेर्भिन्नम्। रमणीयार्थप्रतिपादकत्वविशिष्ट-शब्दत्वरूपं काव्यलक्षणम्, तच्च विशेष्यतावच्छेदककाव्यत्वात्मकमिति न वक्तुं शक्यम्, न च काव्यत्वं जातिः वक्तुं शक्या चेत् शब्दार्थयोः काव्यत्वं स्वीक्रियेत। शब्दार्थोभयपर्याप्ततया अर्थस्य अभावसाधारण्येन जातित्वस्या-सम्भवान्न जातिः। किन्तु शब्दमात्रे चेत् शब्दत्वजातिः सिद्धा। अतो विशेष्यतावच्छेदकशब्दत्वभिन्नरमणीयार्थप्रतिपादकत्वलक्षणं मन्तव्यम्, वेदादेः शब्दत्वे सत्यपि रमणीयार्थत्वाभावात्। 'चमत्कारत्ववत्त्वम्' इत्यस्य शब्दत्व-जातिभिन्नत्वात्। अतो गुणालङ्कारादिभिर्निरूपणीये तस्मिन्नित्यस्य विशेष्यता-वच्छेदकभिन्नात्मकलक्षणे सिद्धेऽपि न गन्धवत् पृथिव्या असाधारणं लक्षणं तत्र घटते, गुणालङ्कारयोः वेदमन्त्रेऽपि दृष्टत्वात्। अतो 'निरूपणीये' इति पदस्योपस्करणीये इत्यर्थो मन्तव्यः।

इत्थं वाक्यं पदावल्यादिकं विहाय शब्दस्य यदुपादानं तत् काव्यशब्दव्युत्पत्तिलभ्यत्वात् प्रामाणिकम् इत्यवगन्तव्यम्। तत्र सिद्धसाध-नत्वदोषवाराणाय यत् 'चमत्कारत्ववत्त्वं' काव्यलक्षणं तत्तु अनितर-साधारणमेधाप्रकाशनपरं पण्डितराजस्येति मम प्रतिभाति।

आधुनिका अपि 'अलङ्कृतार्थसंवित्तिः काव्यम्' इत्यादिकाव्यस्वरूपं कुर्वाणा नोपहसनीयाः, काव्यलक्षणप्रसङ्गेनैव शब्दस्य सिद्धत्वात्। अलङ्कृतत्वं तु चमत्कारत्ववत्वम्। संवित्तिः ज्ञानं भावना वा। अतः शब्द-(यत्) प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वमिति द्वितीय-परिष्कृतकाव्यलक्षणस्य सङ्गतत्वमित्यलम्। इत्थम्—

आग्नेयनाट्यशास्त्रादेर्यावन्तोऽद्यावधेः स्थिताः।
काव्यशास्त्रप्रणेतारः तेष्वनौपम्यया धिया।।

पण्डितराजजगन्नाथः काव्यलक्ष्मपरिष्कृतौ।
भात्यप्रतिमस्तस्मात्तन्नमामि मुहुर्मुहुः।। इति।

●

# कर्पूरमञ्जर्यां चरित्रचित्रणम्

**प्रो. हरिशंकरपाण्डेयः**
आचार्योऽध्यक्षश्च
प्राकृत एवं जैनागम-विभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये, वाराणस्याम्



नाट्यशास्त्रीयलक्षणलक्षितं प्राकृतभाषानिबद्धं प्रथमस्थान-गणनीय-सट्टकमिदम्। सट्टकेऽस्मिन् चन्द्रपाल-कर्पूरमञ्जर्योः प्रेमाख्यानकं वर्णितमस्ति। नायकः नृपति-चन्द्रपालः महिषीविभ्रमलेखा नायिका सर्वाङ्गसुन्दरीकर्पूरमञ्जरी हास्यकारो विदूषकः दासीद्वयविचक्षणा-सुलक्षणा। सर्वकल्याण साधको भैरवानन्दश्च। अधोविन्यस्तानां पात्राणां संयोजनमस्ति सट्टकेऽस्मिन्—

(१) पुरुषपात्राणि—

१. नायकचन्द्रपालः
२. विदूषको कपिञ्जलः
३. योगी भैरवानन्दः
४. सूत्रधारः
५. पारिपार्श्विकः
६. रत्नचण्डः कांचनचण्डश्च

(२) स्त्रीपात्राणि—

१. नायिका कर्पूरमञ्जरी
२. देवी विभ्रमलेखा
३. दासी विचक्षणा
४. कुरङ्गिका सारङ्गिका प्रतिहारी च

**नायकः चन्द्रपालः**

राजाचन्द्रपाल उच्चकुलोत्पन्नः विनीतः विद्याविभूषितश्च। गुणदृष्ट्या स धीरललितःनायकः। धीरललितः सदासुखी कलासक्तश्च भवति। धीरललितः

कलासक्तः सुखी मृदुः[१] सः सौन्दर्यप्रिय भवति। राजा चन्द्रपालः स्वभावतः एव सौन्दर्यलावण्यरससरसिकः। सट्टकारम्भे वसन्तोत्सवस्य प्रभावस्य आकर्षकं वर्णनं करोति[२]।

**काव्यकलापारखी**—स नायकः कविता-लालित्यरसनचक्षुः गुणविलोभनविदग्धश्च। दासी-विदूषकयोः काव्यसंलापं श्रुत्वा काव्यगुणानुसारं प्रशंसति स अत एव काव्यगुणज्ञः। विचक्षणायाः काव्यपाठानन्तरं काव्यरसज्ञो राजा एवं कथयति—

सच्चं विअक्खणा विअक्खणा। चदुरतणेण उत्तीणं विचित्तदाए रीदीणं। ता किं पि अण्णं। कइणं सुकइति कइचूडामणित्तणे ठिदा एसा[३]।

**विलासी कामुकप्रवृत्तियुक्तश्च**—स कामासक्तः। द्वितीयजवविकान्तरे महादेव्या मंडितायाः कर्पूरमञ्जर्याः विषये विचक्षणया श्रुत्वा तस्या कामोत्तेजकं सौन्दर्यविलासलावण्ययुक्तं वर्णनं करोति स नायकः। विचक्षणा निवेदयति देव! मंडिदा टिक्किदा मूसिदा तोसिदा य।

राजा—कधं विअ!

विचक्षणा—घणमुव्वट्टिदमंगं कुंकुमरसपंकपिजरं तिस्सा।

राज—रोसाणिअं फुडं ता कंचणमअबालिआरूवं[४]।

पुनमेकेकप्रकारं देव्याकृतकर्पूरमञ्जरीशोभावर्णनं करोति विचक्षणा। प्रसङ्गान्ते साह—

विंचक्षणा—इअ देवीअ जहीच्छं पसाहणेहिं पसाहिआ कुमरी।

राजा—ता केलिकाणणमही विहूसिआ सुरहिलच्छीए[५]।

तस्याः नायिकाः यौवनोपरि सुगठितशरीरसौन्दर्योपरिनुरक्तो नायकः। पुनः पुन तामेवानुसंदधाति—

---

१. दशरूपकम्।
२. कर्पूरमञ्जरी, राजशेखरकृत, भारतीय विद्या प्रकाशन, १.१३-१४।
३. तत्रैव, पृ. ४४, भारतीय विद्या प्रकाशन।
४. तत्रैव, २.१२; ५. तत्रैव, २.२२।

तिबलिवलिअणाही बाहुमूलेसु लग्गं
थणकलसणिअंबाडम्बरेसूससंतं।
जलणिविडमिमीए लण्हअं ण्हाणपोतं
पिसुनदि तणुलट्ठी लंगिमं चंगिमं च[1]॥

**निसर्गशोभारसलोलुपः**—निसर्गचंगस्य सौन्दर्यस्याराधकः स नायक एवं कथयति—

मुद्धाण णाम हिअआइं हरंति हंत
णेवच्छकप्पणगुणेण णिअंविणीओ।
छेआ पुणो पअइचंगिमभावणिज्जा
दक्खारसो न महुरिज्जइ सक्कराए[2]॥

अभिज्ञानशाकुन्तलस्य नायकोऽपि निसर्गकमनीयसौन्दर्यस्य प्रतिपादकः। अत्र दुष्यन्तचन्द्रपालयोरैक्य परिलक्ष्यते—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्य लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेकनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम्[3]॥

**नायिकामिलनोत्सुकः**—नायिकया सह सम्मिलनार्थं स नायक अनवरतं विकलत्वमायाति। तृतीय-जवनिकान्तरे नायकनायिकयोः क्षणमात्रं मिलनं भवति यत्र स्वच्छन्दभावेन नायकनायिकयोः परस्परालापं कुर्वतः।

एवं राजाचन्द्रपालः धीरललितः गुणयुक्तः दक्षिणनायकोदारगुणसम्पन्नश्च। स च बुद्धि चातुर्यसम्पन्नः कलाविशेषज्ञः कान्तारञ्जनयोग्यालापसम्पन्नश्च।

## नायिका कर्पूरमञ्जरी

**प्ररोचना**—सौन्दर्यविलासललितलावण्यसंपृक्ता नवयौवनसम्पन्ना विधाताद्वयस्याद्भुतासृष्टिः सम्पन्नशोभासात्विकानुरागादिविभूषिता लावण्यरस-

---

१. कर्पूरमञ्जरी, २.२४; २. तत्रैव, २.२६।

३. अभिज्ञानशाकुन्तलम्, महाकवि कालिदासः १.१९-२०।

सारभूता नवजात्यकांचनेन समरूपपूर्णा छेकजनहृदयहरणकुशला कुंतलेश्वरसुता कर्पूरमञ्जरी अद्भुतैकजनकी सुभगसौभाग्यसम्पन्ना अस्य सट्टकस्य नायिका।

**नायिकाविमर्शः**—'नी' धातोः ण्वुलिटापि च कृते नायिका शब्दस्य निष्पतिः भवति। नयतीति नायिका। फललाभपर्यन्तं कथासूत्रान् नयतीति वा। सा च नैकप्रकारका भवन्ति। सट्टकलक्षणानुसारं सट्टके नायिका द्विविधा भवति—देवी (महिषी) नवीनाबाला च। नायकः देव्यात्रस्तः सन् तस्यां नव्यवालायां प्रवृतो भवति।

**नायिकाविचारणम्**—कर्पूरमञ्जरी कन्या-सुन्दरी-बाला-युवति-नव-यौवनाऽक्षतयौवना-विलासिनी-सौन्दर्यसारभूता च। कामदेवः तामाश्रित्य विश्वविजयं प्राप्तवान्। तस्यारूपगुणाशील यौवन माधुर्यसम्पन्नायाः कर्पूरमंजर्याः लक्षणशास्त्रदृष्ट्या नायिकाप्रकारत्वं विचारणीयमत्र।

सरस्वतीकण्ठाभरणे नायिकायाः वैभिन्न्यत्वं निरूपितमस्ति—

१. कथावस्तुशीलानुसारं नायिकायाः पञ्चभेदाः भवन्ति नायिका-प्रतिनायिका-उपनायिका-अनुनायिका-नायिकाभासाश्चेत्यादयः। कर्पूरमञ्जरी नायिकैव सम्पूर्णकथासूत्राणि तस्याः परितः परिभ्रमन्ति। तस्याः प्राप्तिरेव नायकस्य लक्ष्यविशेषः। सा शृङ्गारसञ्जीवनी, तामवाप्य राजा तृप्तः जातः चक्रवर्ती पदमपि प्राप्तवान्—

कुंतलेसरसुआकरफंसप्फारसोक्खसिढिलीकिदसग्गो।
पालएमि बसुहातलरज्जं चक्कवट्टिपअवीरमणिज्जं[१]॥

अग्रेऽपि कथयति नायकः यत् मानवजीवने यत्प्राप्तव्यं दुर्लभमपि भवति तत्सर्वं मयालब्धम्। सा शशाङ्कमण्डलमुखी कर्पूरमञ्जरी एव सर्वानन्दसारभूता यतः तत्प्राप्ते सर्वप्राप्तिः—

देवीरोसकसायमाणसवई णो होइ सावत्तए
लद्धा पुण ससंकमण्डलमुही सिंगारसञ्जीवनी।
संजाआ अवि चक्कवट्टिपअवी किं अण्णमब्भत्थणं
सव्वं तुज्झ अणुग्गहेण भरिअं जं माणुसे लब्भइ[२]॥

२. गुणानुसारेण नायिकायाः त्रिभेदाः भवन्ति—उत्तमा मध्यमा अधमाश्च। अतिशयेनोत्कृष्टा उत्तमा। उत्कृष्टा नारी सा उत्तम शीलाचरण-

---

१. कर्पूरमञ्जरी ४.२२; २. कर्पूरमञ्जरी ४.२३।

स्वभावसौन्दर्यादिगुणयुक्ता। सर्वथा हित साधिकैव। नायकमयजीविता। अहितकारिण्यपि प्रिये हितकारिणी। अस्याश्चेष्टा उत्तमा एव। कर्पूरमञ्जरी सर्वोत्तमगुणशीलयुक्तत्वात् उत्तमा। सा लावण्यकल्लोलिणी। नायकस्योक्तिरियम्—

अत्थाणीजणलोअणाण बहला लावण्णकल्लोलिणी
लीलाविब्भमहासवासणअरी सोहग्गपालितिआ।
णेतेंदीवरदीहिआ मह पुणो सिंगारसञ्जीवणी
जं जादा अह मम्महेण जणुहे तिक्खो सरो संधितो[१]।।

अभीष्टलक्षणलक्षिता सा कर्पूरमञ्जरी विश्वसुन्दरी सर्वगुणसम्पन्ना उत्तमानायिका।

३. वयानुसारेण स्वीयाया नायिकाया: त्रिविधभेदा: स्वीकृता:—मुग्धा मध्या प्रगल्भा च। कर्पूरमञ्जरी मुग्धा नायिका। **तत्रांकुरितयौवनामुग्धा**। सा च ज्ञातयौवना अज्ञातयौवना च। सैव क्रमशो लज्जामयपराधीनरतिर्नवोढा। अस्या चेष्टा क्रिया मनोहरा। सा कर्पूरमञ्जरी मुग्धत्वगुणयुक्ता नवयौवनविलाससम्पन्ना च। सा अद्भुतैकजननी। तस्या: तिर्यक्कटाक्षपातानन्तरं नायक: अभिव्यनक्ति—

जं मुक्का सवणंतरेण तरला तिक्खा कडक्खच्छडा
भिंगाहिट्ठिद केदअग्गिमदलद्दोणी सरिच्छच्छवी।
तं कप्पूररसेण णं धवलिदो जोण्हाइ णं ण्हाविदो
मुत्ताण घणरेणुण व्व छुरिदो जादोम्हि एत्थंतरे[२]।।

तस्या: लावण्यं नवजात्यकाञ्चनसंनिभममस्ति। मुग्धाया: रूपसौन्दर्यमेतादृशमस्ति—

राजा—एदाए दाव एदं। जदो—

लावण्णं णवजच्चकंचणणिहं णेत्ताण दीहत्तणं
कण्णेहिं खलिदं कवोलफलआ दोखंडचंदोवमा।
एसा पंचसरेण संधिदधणुदंडेण रक्खिज्जए
जेणं सोसणमोहणप्पहुइणो विधंतिमंमग्गणा[३]।।

---

१. कर्पूरमञ्जरी २.३; २. कर्पूरमञ्जरी १.२९।
३. कर्पूरमञ्जरी १.३२।

कविराजः विश्वनाथः मुग्धानायिकाविषये कथयति साहित्यदर्पणे—

प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा[१]।।

सा लज्जावती अतिशयमृदुगुणयुक्ता प्रथमावतीर्ण यौवना च। देवीविभ्रमलेखयैवं कथिते—ननु त्वं कर्पूरमञ्जरी सा सलज्जमधोमुखी भवति। भैरवानन्देन ध्यानविमानेन नीयमाने सति तस्याः रूपलावण्यमवलोक्य नायकः सहसा आश्चर्यान्वितः। न केवलं नायकरपितु कोऽपि जीवितहृदययुवक अवश्यमेव आश्चर्यरसे निमज्जितो भवति—

जं घोआंजण सोणलोअणजुअलग्गालअग्गं मुहं
हत्थालंबिदकेस पल्लवचए दोल्लंति जं बिंदुगो।
जं एक्कं सिचअंचलं णिवसिदं तं ण्हाण केलिट्ठिदा
आणीदा इअमब्भुदेक्कजणणी जोइसरेणामुणा[२]।।

**निसर्गरमणीया**—सा नायिका लावण्यसारभूता सहजसौभाग्यसौन्दर्ययुक्ता च। निसर्गरमणीयसौन्दर्यसाररसे सा कर्पूरमञ्जरी कालिदासस्य विधातुराद्यासृष्टेः यक्षिण्यारपि अतिक्रामति। कालिदासीया नायिका यक्षिणी एकस्यैव विधातुराद्यासृष्टिः परन्तु इयं कर्पूरमञ्जरी विधाताद्वयस्य प्रकृष्टप्रयत्नसारभूता-कालिदासीयायक्षिणी—

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्यैव धातुः[३]।।

राजशेखरीयायाः नायिकायाः निर्माणे प्रजापतिद्वयस्य परिश्रमः संलग्नः—

णूणं दुवे इह पआवइणो जअम्मि
जं देहणिम्मवणजोव्वणदाणदक्खा।
एक्को घडेइ पढमं कुमरीणंगं
कंडारिऊण पअडेइ पुणो दुईओ[४]।।

---

१. साहित्यदर्पणम् ३.५८; २. कर्पूरमञ्जरी १.२६।
३. मेघदूतम्, उत्तरखण्ड २२; ४. कर्पूरमञ्जरी ३.१७;

सट्टके सर्वप्रथमं भैरवानन्दस्य योगविद्याबलेण तस्यावतरणं भवति। नायकविदूषकयोरपूर्वमहिलारत्नस्य दर्शनस्य लालसं परिपूरणार्थमेव भैरवानन्दः तस्यारूपलावण्य ललितारपूर्वसौन्दर्यसारयुक्तायायाः कर्पूरमञ्जर्यारवतारणं करोति। सा अद्भुतमात्रेकजनकी नवयौवनसम्पन्ना वच्छोमकुमारी समस्तशोभा-गुणयुक्ताचास्ति।

अनीता इयमद्भुतैकजननीयोगीश्वरेणामुना। तस्या दृष्टिः सौन्दर्यसर्वस्वमिव—

ण्हाणावमुक्काहरणोच्चआए तरंगभंगक्खदमंडणाए।
ओल्लंसुउल्लासितणुल्लआए सुंदरेसव्वस्समिमीअ दिट्ठी[1]।।

**शरीरसौन्दर्यम्**—तस्या शरीरसौन्दर्यमलौकिकमप्रतिमञ्च। तनुशोभा कर्पूररसधवलिता ज्योत्स्नासदृशलावण्ययुक्ता च। तस्या तरलाकटाक्षच्छटा श्रवणान्तरेण परिव्याप्ता च—

जं मुक्का सवणंतरेण सवणंतरेणतरला तिक्खा कडक्खच्छडा[2]।

तस्याः मध्यभागस्यकृशत्वं डिम्बमुष्टिग्राह्यं रमणफलकं जघनस्थल-मेतादृशं यत् द्वाभ्यां बाहुभ्यामपि आवरीतुं वेष्टितुं वा न शक्यते। विदूषकः तस्याः शरीरलावण्यस्य निरूपणं करोति—

मण्णे मज्झतिवलिवलिअं डिंभमुट्ठीअगेज्झं
णो बाहूहिं रमणफलअं वेढ्ढिदुं जाइ दोहिं।
णेत्तक्खेत्तं तरुणिपसईदिज्जमाणोवमाणं
ता पच्चक्खं मह विलिहिदुं जाइ एसा ण चित्ते[3]।।

मण्डनविभूषणरहितापि सा निसर्गरमणीया। कालिदासस्योक्तिः सफला संजाता—

किमिव हि मधुराणां मण्डनं नाकृतीनाम्[4]।

मण्डनविभूषणादिकृत्रिमशरीरसौन्दर्यपक्षकारः विदूषकोऽपि तस्याः निसर्गरमणीयत्वं प्रतिपादयति—

---

१. कर्पूरमञ्जरी १.२८;   २. कर्पूरमञ्जरी १.२९।
३. कर्पूरमञ्जरी १.३०;   ४. अभिज्ञानशाकुन्तलम् १.१९।

विदूषकः—कधं ण्हाणधोतविलेवणा वि समुत्तारिदविहूसणा वि रमणिज़्जा।

अहवा—

रूवेण मुक्काविं विहूसअंति ताणं अलंकारवसेण सोहा।
निसग्गचंगस्स वि माणुसस्स सोहा समुम्मीलइ भूषणेहिं[१]।।

तस्याः नायिकायाः सर्वाङ्गानि परमाकर्षकशोभासम्पृक्तानि सन्ति। तस्या जघनथलस्य विशालता तावत्परिमाणं वर्तते यथा कांचीलता कटिसूत्रं वा तत्र नालं भवति। पयोधरयो। रेतादृशी उन्नतिः तथा वर्तते यथा नाभिप्रदेशं अवलोकयितुं नायिक शक्ता न भवति। कपोलौ एतादृशौ सुन्दरौ प्रतीयते यथा द्विशशिनी पूर्णिमा। अनाविलमुखसौन्दर्यस्य वर्णनमभूतपूर्णमस्ति। नायकः वर्णयति नायिकायाः शरीरसौन्दर्यमङ्गानां सुष्ठुसंगठनञ्च—

तहा रमणवित्थारो जह ण ठाइ कंचीलआ
तहा सिहिणतुंगिमा जह णिएइ णाहिं णहु।
तहा णयणवड्ढिमा जह न किं पि कण्णुप्पलं
तहा अ मुहमुज्जलं दुससिणी यथा पुण्णिमा[२]।।

देवी विभ्रमलेखा तिस्याः निसर्गरमणीयरूपसौन्दर्यं प्रशंसति। देवी—णहु ससिप्पहागब्भुप्पत्तिं अंतरेण ईदिसी रूवसोहा। णहु विडूरभूमिं अन्तरेण वेरुलिअमणिसलाआ णिप्पज्जदि[३]।

विरहाकुलो नायकः तां नेत्रेन्दीवरदीर्घिकां मुहुर्मुहुः स्मरति, निसर्गरूपलावण्यस्य शरीरचारुत्वस्य च वर्णनं करोति—

णो थाणाहि तिलंतरं पि चलिदा सुत्था निअंबत्थली
थोउव्वेलवलीतरंगमुदरं कंठो तिरिचच्छिट्ठिदो।
वेणीए उण आणणेंदुभमणे लहं थणालिंगणं
जादातीअ चउब्बिहा तणुलया तसं बललंती मए[४]।।

सा लावण्यकल्लोलिनी क्रीडारसोद्भासिनी लीलाविलासविभ्रमवासनगरी सौभाग्यस्यरक्षिका परमसौभाग्यवती शृंगार संजीवनी च। सर्वाङ्गसौभाग्य-

---

१. कर्पूरमञ्जरी १.३१; २. कर्पूरमञ्जरी १.३४।
३. कर्पूरमञ्जरी, पृ. ७४; ४. कर्पूरमञ्जरी २.१।

लालित्यपरिपूर्णेयं नायिका सत्यमेव निसर्गरमणीयत्वस्य स्फूर्तमूर्तिस्वरूपा ललितविलासहासविभ्रमादि गुणयुक्ता चास्ति।

**विभूषणविभूषिता**—प्रकृतिसुन्दरनिसर्गरमणीययुवतिजनानामाभूषणमत्यधिकमतिविशिष्टं सौन्दर्यं सम्बर्द्धयति। तासां चारुत्वस्य सम्बर्द्धनं भवति आकर्षणमत्याह्लादकत्वं याति निसर्गत्वं चंगत्वं लालित्यञ्च सर्वानाहरन्ति। सुष्ठुशोभाविलसितयुवतिजनानामक्षीषु कज्जलं विशालोन्नतपीनस्तनीनां गलेषु रत्नजटितहारावष्यरधिकं शोभां समुम्मिलन्ति। विदूषकरस्याभिमतस्य प्रतिपादनं करोति—

निसग्गचंगस्स वि माणुसस्स सोहा समुम्मीललादि भूसणेहिं[१]।
मणीण जच्चाण वि कंचणेण विहूसणं लब्भदि कावि लच्छी।।

द्वितीयजवनीकान्तरे विविधवस्त्राभूषणालंकारालंकृतायाः निसर्गरमणीयनायिकायाः शरीरलावण्यस्यानिर्वचनीयत्वस्य वर्णनं कृतमस्ति। मण्डिका तिलकिता भूषिता तोषिता च कर्पूरमञ्जरी कंचनमयबालिका (पाञ्चालिका गुड़िया) अनिर्वचनीयं रूपलावण्यं विभर्ति। राजा—विचक्षणयोः संवादादेव विभूषणविभूषितयाः नायिकायाः सौन्दर्यवर्णनं कृतमस्ति[२]।

**दोलारूढा**—दोलायां हिन्दोलयन्ती कर्पूरमञ्जरी अपूर्वसौन्दर्ययुक्ता प्रतिभाति। पूर्णिमाचन्द्रस्य शोभायुक्ता सा। दोलारूढां तां दृष्ट्वा सहसा विदूषकः कथयति—भोः दृश्यतां पूर्णिमाचन्द्रः। दोलारूढा कर्पूरमञ्जरी सर्वसुन्दरीणां सौन्दर्यमपहरति मुखमण्डलं मलिनं करोति कान्तिरूपज्योत्स्नाजलेन आकाशमण्डलं प्रक्षालयति। वर्णयति रसिकः नायकः—

विच्छाअंतो णअररमणीमंडलस्साणणाइं
पच्छालंतो गअणकुहरं कंतिजोण्हाजलेण।
पेच्छंतीणं हिअअणिहिदं णिद्दलंतोय दप्पं
दोलालीलासरलतरलो दीसए से मुहेंदू[३]।।

---

१. कर्पूरमञ्जरी २.२५।
२. कर्पूरमञ्जरी, पृ. १०३-१११ पर्यन्तम्।
३. कर्पूरमञ्जरी २.३०।

शशिमुख्या हिन्दोलनं कस्य मनमोहनं न भवति—

रणंतमणिणेउरं झणज्झणंतहारच्छडं
कणक्कणिदकिंकिणी मुहरमहेलाडंबरं।
विलोलवलआवलीजणिद मंजुसिंजारवं
ण कस्स मणमोहणं ससिमुहीअ हिंदोलणं[1]॥

**विरहव्यथिता**—नायकस्य विरहेनसा रूपपुतल्लिका अतिपीड़िता जाता। एकस्मिन्स्थले निवसतः नायकस्य दर्शनपि न भवति सम्मिलनस्य का सम्भावना। स्वदुस्कृतस्यैव परिणामभूतमित्यं घटनं भवतीति स्वीकरोति सा। विचक्षणा कर्पूरमञ्जरीविरहावस्थावर्णनपरकश्लोकं लिखितवती नायकवियोगे तस्याः स्थितिः, चिन्तनीया जाता। सुभगवियोगे दिवसनिशाम्यां सह तस्या श्वासदण्डाः दीर्घाः जाताः। सा दीर्घमुच्छ्वसतीति। कथमपि दिवसनिशा अतिवाह्यन्ते शरीरकार्श्यात् मणिनिर्मितकंकणैः सह तस्याः अश्रुधाराः भूमौ पतन्ति। शरीरलतया सह जीवनस्याभिलाषाऽपि परिक्षीणा जाता—

सह दिवसणिसाहिं दीहरा सासदंडा
सहमणिवलंएहिं वाहधारा गलंति।
तुह सुहअ विओए तीअ उब्बिबिरीए
सह अ तणुलदाए दुब्बला जीविदासा[2]॥

नायकवियोगावस्थायां शीतलचन्दनमपि सन्तापयति चन्द्रः कष्टं ददाति पीड़यति च। तस्या हास्यं स्मृतिविषयकं जातम्—

णीसासा हारजट्ठीसरिसप्पसरणा चंदणुच्छोडकारी
चंदो देहस्स दाहो सुमरणसरणा हाससोहा मुहम्मि।
अंगाणं पंडुभावो दिअहससिकलाकोमलो किं च तीए
णिच्चं बाहप्पवाहा तुह सुहअ! कए हांति कुल्लाहि तुल्ला[3]॥

ज्योत्स्ना उष्णा जाता। चन्दनरसः गरलत्वं यातः। हारः कष्टकरः रात्रिपवनः शरीरसन्तापकरश्च—

---

१. कर्पूरमञ्जरी २.३२; २. कर्पूरमञ्जरी २.९।
३. कर्पूरमञ्जरी २.१०।

परं जोण्हा उण्हा गरलसरिसो चंदणरसो
खअक्खारो हारो रअणिपवणा देहतवणा।
मुणाली वाणाली जलइ अ जलद्दा तणुलआ
वरिट्ठा जं दिट्ठा कमलवअणा सा सुणअणा[१]॥

**विवाहवेशोपगता**—विवाहवेशविभूषिता कर्पूरमञ्जरी देहान्तरसंस्थिता शृङ्गारलक्ष्मीव प्रतिभाति। राजा विवाहवेशोपगतां कर्पूरमञ्जरीं दृष्ट्वा तस्याः रूपसौन्दर्यं वर्णयति—तस्य कथनस्यानुवादः। एषा शरीरिणी मकरध्वज-पारिध्वजिका (पालयित्रिका) देहान्तरेण संस्थिता शृङ्गारसलक्ष्मीव। शृङ्गाररसवर चापयष्टिः। दिवससञ्चारिणीपूर्णिमाचन्द्रिचन्द्रिका। अपि च गुणगणामाणिक्यमञ्जूषा रत्नमय्यञ्जनशलाका रत्नमयपुत्तलिका। तथा चैषा रत्नकुसुमनिष्पन्ना मधुलक्ष्मी[२]।

तस्या रूपरेखा सौन्दर्यसरणिः प्रतीयते यथा कामदेवस्य भुवनजयपताका। वर्णयति रूपरसलोलुपः—

भुवनजयपडाया रूअरेहा इमीए
जहतहणयणाणं गोअरं जस्स जादि।
वसइ मअरकेऊ तस्स चित्ते विचित्ते
वलइअ धणुदंडो पुंखिदेहिं सरेहिं[३]॥

विवाहावसरे करग्रहणकाले तस्याः सुन्दर्याः प्रथमकरसंस्पर्शेन नायकः रोमाञ्चितः जात। यथा त्रपुषमुग्धफलेषु केतकीकुसुमगमर्भदलावलीषु च कण्टकाः भवन्ति तादृशैव कण्टकाः ललितयुवत्याः संस्पर्शेन नायकशरीरे जाताः सन्ति।

जे कंटआतिउसमुद्दफलेसु सन्ति
जे केअई कुसुमगब्भदलावलीसु।
फंसेण णूणमिह मज्झ सरीरदिण्णा
ते सुंदरीअ बहला पुलअंकुराली[४]॥

अन्ते मङ्गलप्रसङ्गे भरतवाक्ये वा सट्टकसमापनकालेऽपि वा राजा तस्याः सौन्दर्यशोभाप्रतिपादकविशेषणद्वारा शोभां वर्णयति—सा पूर्णशशाङ्कमण्डलमुखी शृङ्गारसञ्जीवनी च—

---

१. कर्पूरमञ्जरी २.११;
२. कर्पूरमञ्जरी, पृ. २५१-२५२।
३. कर्पूरमञ्जरी ४.२०;
४. कर्पूरमञ्जरी ४.२१।

लद्धापुण्णससंकमण्डलमुही सिंगारसंजीविणी[१]।

**नायिकालंकाराः**—नायिकासु यौवनसम्बन्धीकतिपयस्वाभाविकसात्त्विक-गुणानामुपस्थितिः सम्भाष्यते। ते स्वाभाविक-सहज-शरीरक्रियागुणा एवं नायिकालङ्काराः। नायिकायाः शोभा संवर्धकाः गुणा एव **अलङ्क्रीयते अनेनेति अलङ्कारेति** व्युत्पत्तिनिष्पन्नाऽलङ्काराः। शरीरज-स्वभावज-अयत्नजादि अलङ्काराः।

१. शरीरजालंकाराः—भावहावहेलादयः शरीरजालंकारा नायिकाशरीरे उत्पन्नत्वात्।

१.१. भावः—'भू-सतायाम्' धातोः णिचि अचि च कृते भावशब्दस्य सिद्धिः जायते। भावयति चिन्तयति पदार्थानिति भावः। भवतीति भावः। मानसविकारः स्त्रीणां यौवनकाले स्वभावजा क्रियाभावः। भावयति जनयति रसज्ञचित्तेषु आकर्षणमिति भावः। निर्विकारात्मकचित्ते प्रथमविकृतिः भावः धनञ्जयस्योक्तिरियम्—

निर्विकारात्मकात्सत्त्वाद् भावस्तत्राद्यविक्रिया[२]।

विश्वनाथोऽपि भणति—

निर्विकारात्मके चित्ते भावः प्रथमविक्रिया[३]।

नवयौवनारूढायाः कर्पूरमञ्जर्याः निर्विकारे मनसि नायकं अवलोक्य प्रथमोविकारः जायते, तदा नायकस्योपरि कटाक्षपातं करोति। तां किं ति एदस्स महिलासहिदस्स वि दिट्ठी मं बहुमण्णेदि। इति त्र्यस्त्रं वीक्षते[४]।

१.२. हावः—ह्वेञ्-आह्वाने धातोः घञि प्रत्यये कृते 'हाव' इति निष्पत्तिः। आह्वानं हावः। स्त्रीणां युवतिजनानां वा शृङ्गारभावजा क्रिया हावेति। सुन्दरशोभायौवनसम्पन्नयुवतीनां स्त्रीणां वा विलासादयः शृङ्गारभावजाः क्रियाः हावशब्देनोच्यते। हूयन्ते रागिनोऽत्र—

युवानोऽनेन हूयन्ते नारीभिर्मदनानले।
अतो निरुच्यते हावस्ते विलासादयो मताः॥

---

१. कर्पूरमञ्जरी ४.२३; २. दशरूपकम् २.३३।
३. साहित्यदर्पणम् ३.९३।
४. कर्पूरमञ्जरी, पृ. ६३, भारतीय विद्या प्रकाशन।

सट्टकस्यारंभे एव शरीरभावजा हावरूपा क्रियेयं विलसति। नायिका हावक्रियया रसिकानां चेतांसि चोरयति अथवा तेषां चेतांसि एव अधिकरोति। स्नानैकशाटिकां ध्यानविमानेनानीतां सहजस्वाभाविकप्रथमावतीर्णयौवनक्रिया-युक्तां नायिकां दृष्ट्वा वर्णयति। सा सर्वेषु रसिकहृदयेषु प्रवेष्टुं समर्था—

एक्केण पाणिणलिणेण णिवेसअंती
वत्थंचलं घणयणत्थलसंसमाणं।
चित्ते लिहिज्जदि ण कस्स वि संजमंती
अण्णेण चंकमणओ चलिअं कडिल्लं[१]॥

विदूषकदृष्ट्या सा सौन्दर्यसर्वस्वमिव प्रतिभाति। श्रवणपर्यन्तपरिव्याप्त-तिर्यक्कटाक्षेण नायकस्य चित्तमाह्लादयति—

जं मुक्का सवणंतरेण तरला तिक्खा कडक्खच्छडा
भिंगाहिट्ठिद केदअग्गिमदलद्दोणी सरिच्छच्छवी।
तं कप्पूररसेण णं धवलिदो जोण्हाइ णं णहाविदो
मुत्ताणं घणरेणुण व्व छुरिदो जादो म्हि एत्थं तरे[२]॥

१.३. हेला—तुदादिगणीय-हिल-भावकरणे धातोः घञ् प्रत्यये कृते हेला इति भवति। स्त्रीणां शृङ्गारभावजा क्रियाविशेषः। सुरते प्रौढेच्छा हेला। नायिकासु शृङ्गारविषयिनी चेष्टाः स्पष्टमेव प्रतीयन्ते। नायकेन सह मिलनेच्छा कामेच्छा वा हेलायास्थितिः। नायिका कूर्परमञ्जरीनायकेन सह मिलितुं विकलिताऽस्ति। केतकीकुसुमपत्रसम्पुटे एणनाभिमसीवर्णेन श्लोकयुगलं लिखित्वा नायकं प्रति प्रेषयति। तल्लेखं विचक्षणा नायकं ददाति। नायकः प्रसार्य वाचयति। श्लोके पूर्वकृतं पापं स्मरति यत् नायकेन सह सम्मेलनं वाधते।

हंसि कुंकुमपंकपिंजरतणुं काऊण जं वंचिओ
तब्भत्ता किल चक्कवाअघरणी एसत्ति मण्णंतओ।
एदं तं मह दुक्कअं परिणअ दुक्खाण सिक्खावणं
एक्कत्थो वि ण जासि जेण विसअं दिट्ठी तिहायस्स वि[३]॥

अत्र नायकेन सह नायिकाया उत्कत्सङ्गमेच्छा स्पष्टमेवाभिण्यञ्जितमस्ति। नायकस्य वियोगे तस्याः जीविताशाः विदुर्बला जाता—

---

१. कर्पूरमञ्जरी १.२७;　　२. कर्पूरमञ्जरी १.२९।
३. कर्पूरमञ्जरी २.८।

सह दिवस णिसाहिं दीहरा सास दंडा
सह मणिवलएहिं वाह धारा गलंति।
तुह सुहअ विओए तीअ उब्बिं बिरीए
सह अ तणुलदाए दुब्बला जीविदासा[१]।।

एवं कर्पूरमञ्जरी सर्वाङ्गसुन्दरी शृङ्गारसञ्जीवनी अद्भुतरूपशोभा-सौभाग्ययुक्ता च।

## विदूषकः कपिञ्जलः

१. प्ररोचना—भारतीयनाट्यपरम्परायां विदूषकस्य महत्त्वपूर्णं स्थानमस्ति विविधप्रकारहास्यव्यङ्ग्येन नाट्यमञ्चे प्रफुल्लितवातावरणस्य हास्यरसस्य मनोरञ्जनस्य च सृजनं करोति। नायकसहायकेषु पीठमदविटचेटमालाकारादिषु विदूषकोऽन्यतमः यतोहि स नायकस्याकारणसहायकः सार्वकालिकसहयोगकरः कथासूत्राणां फललाभपर्यन्तं गन्तुं महत्त्वपूणं स्थानभाजकः हास्यकरश्च।

२. व्युत्पत्तिः-पर्यायश्च—वि उपसर्गपूर्वक-दूषवैकृत्ये-दिवादिगणीयधातोः णिचि ण्वुलि च कृते विदूषकशब्दस्य सिद्धिर्भवति। तत्पर्यायशब्दाः यथा—चाटुवटु-वासन्तिक-केलिकिल-वैहासिक-प्रहासी-प्रीतिद-रञ्जक-अभीकपरद्वेषी कण्टकादयश्च।

३. परिभाषा—विदूषयति आत्मानमिति विदूषकः। अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः। स च शृङ्गारसहायः। यथा साहित्यदर्पणे—

शृङ्गारस्य सहायाः विटचेट विदूषकाद्याः स्युः।
भक्ता नर्मसु निपुणा कुपितवधूमानभञ्जनाः शुद्धाः[२]।।

नाट्यशास्त्रे विदूषकस्य परिभाषाभाषिताऽस्ति—

वामनो दन्तुरः कुब्जो द्विजिह्वो विकृताननः।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः[३]।।

दशरूपकाभिमतानुसारं हास्यकारी विदूषकः—'हास्यकृच्च विदूषकः'[४]। अस्य विकृताकारवेषादित्वं हास्यकारित्वेनैव लभ्यते। साहित्यदर्पणदृशा स हास्य भोजननिपुणः कलहप्रियः अङ्गकार्यादिवैकृत्यैः हास्यकारकश्च—

---

१. कर्पूरमञ्जरी २.९; २. साहित्यदर्पणम् ३.७७।
३. नाट्यशास्त्रम् ३५.५७; ४. दशरूपकम् २.९।

कुसुमवसन्ताद्यभिधः कर्मवपुवेशभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः[१]॥

एवमुद्विन्यस्तपरिभाषानां विश्लेषणेन विवेचनेन चाद्योविन्यस्तरूपेण विदूषकगुणानां सङ्ग्रहणं भवति—१. उच्चवंशोत्पन्नः ब्राह्मणश्च, २. हास्यकलानिपुणः, ३. कलहप्रियः, ४. विकृताङ्गवेशभूषाधारकः, ५. गोष्ठ्यां प्राणसञ्चारकः, ६. नायकसहायकश्च नर्मसचिवश्च।

कर्पूरमञ्जरीसट्टकस्य विदूषकः कपिञ्जलः ब्राह्मणवंशोत्पन्नः नाट्यपरम्परा प्रथित विदूषकगुणसम्पन्नश्च। हास्यरसाभिव्यञ्जनकुशलोऽयं कपिञ्जलः। कपिरिव जलति प्रसन्नयति लोकानिति कपिञ्जलः जीव्य सभागोष्ठ्यामुपस्थितसभ्यानां प्रसन्नतां करोतीत्यर्थः कं सुखकारकं शब्दं पिञ्जलयति ध्वनतीत्यर्थः सुखमनोरञ्जकशब्दैराह्लादकरो भवति। सट्टके प्रवेशप्रभृतिरेव स गोष्ठ्यां शब्दवैकृत्येन हास्यमुत्पादयति। तस्य वाक्यम् हास्यकरमस्ति—

'भो तुम्हाणं सव्वाणं मज्झे अहं एक्को कालक्खरिओ जस्स मे ससुरससुरो परघरेसु (पंडियघरे) पोत्थअभारं वहंतो आसि[२]'।

अर्थात् भोः! युष्माकं सर्वेषां मध्येऽहमेकः कालाक्षरिकः यस्य श्वसुरश्वसुरः परगृहेषु(पण्डितगृहेषु) पुस्तकभारं वहन्नासीत्।

एवं श्रुत्वा सर्वे हसन्ति। विचक्षणा व्यङ्ग्यवचनं कथयति—तदो कमागदं दे पडिच्चं[३]।

अर्थात् ततः क्रमागतं वंशपम्परागतं ते पाण्डित्यं जडमूर्खत्वमिति।

अत्रान्तरं स विदूषकः कलहं करोति यतोहि स कलहप्रियः। विभिन्नप्रकारेण स विचक्षणां गालिं ददाति—

'आ दा दासीए धूदे भविस्सकुट्टिणि! णिल्लक्खणे! विअक्खणे! ईदिसोहं मुक्खो जो तए वि उवहसीआमि? अण्णं च हे परपुत्तविट्टालिणि रच्छालोट्टणि! भमरटेंटे! टेंटाकराले! कोससदापहारिणि! दुट्टसंघडिदे। परम्परा पंडिच्चस्स मह किं पि दूषणं आसि। पेक्ख अकालजलदवंससंभूदाणं परम्पराए पंडिच्चं अधवा हत्थे कंकणं किं दप्पणेण[४]?

---

१. साहित्यदर्पणम् ३.५०।

२. कर्पूरमञ्जरी, पृ. ३७, भारतीय विद्या प्रकाशन।

३. कर्पूरमञ्जरी; पृ. ३७;    ४. कर्पूरमञ्जरी, पृ. ३८।

१. क्रोधीस्वभावयुक्तब्राह्मणः—सात्यन्तं क्रोधयुक्तः। तस्य ब्राह्मणत्वं सदा जागरितावस्थायामेव तिष्ठति। अपमानस्य सहनं कदापि न करोति। विचक्षणया अपमानिते सति विवादे सति वा क्रोधावेशपूर्वकं वचनं वक्ति। स राजकुलमपि परित्यज्यान्यत्र गच्छति—ईदिसस्स रायकलस्स भद्दं भोदु जहिं चडिआ बंभणेण समं समसीसिआए दीसदि। मइरा पंचगव्वं च एकस्सिं भंडे कीरदि, कच्चं माणिक्कं च समं आहरणे पउं जीअदि[१]। पुनरग्रे कथयति—

ईरिसं राअउलं दूरेण वंदीअदि जहिं दासी बंभणेण समं पाडिसिद्धिं करेदि। ता अज्जप्पहुदि णिअवसुंधराणामबंभणीए चलणसुस्सूसओ भविअ गेहे ज्जेव चिट्ठिस्सं[२]।

गोष्ठीशोभाकारकः—कपिञ्जल गोष्ठीशोभकरो वचनाङ्गहावभावादिभिः सज्जनेषुऽस्ति।

हास्य जनयंति। तस्य विना सभा शून्या रसहीना चक्र जाता। क्रोधितो भूत्वा यदा स सभायाः बहिर्गच्छति तर्हि नायक महिषी च चिन्तसक्तौ जातौ। कथयति देवी—

अज्जउत! कीदिसी अज्जकविञ्जलेण विणा गोट्ठी कीदिसी उण णअणंजणेण विणा पसाहणलच्छी[३]।

राजा अपि एतादृशं कथयति—

कविञ्जलेण विणा कुदो हिअअस्स णित्वुदि[४]।

सार्वकालिकसहयोगतत्परः—आर्यः कपिञ्जल अहर्निशं नायकस्य मनोनुकूल सहाय्यं करोति। राजकुलात् क्रोधितोऽपि स विदूषकः बर्हिगत्वा योगीश्वरं भैरेवानन्दमानयति। स एव भैरवानन्द अत्यद्भुत सिद्धिसम्पन्ननायकस्य चक्रवर्तीपदप्रापकश्च गुरुः। निजध्यानविमानेन अनिन्द्यरूपसौन्दर्ययुक्तां कर्पूरमञ्जरीमानयति महिष्याः विरोधेऽपि नायकेन सह विवाहं कारयित्वा परमफलं परमलक्ष्यमपि साधयति। एतासु घटनासु कपिञ्जल एव प्रेरकः। नायकस्य वियोगकालेऽपि स विविधप्रकारेण सहयोगं करोति नायिकायाः नायेकन सह सम्मिलनमपि साधयति। हिन्दोलनचतुर्थी अवसरे महाराणीद्वारा कर्पूरमञ्जरी हिन्दोलने आरोहयितव्येति ज्ञात्वा स कुशलो विदूषकः

---

१. कर्पूरमञ्जरी, पृ. ४७; २. कर्पूरमञ्जरी।
३. कर्पूरमञ्जरी, पृ. ५०; ४. कर्पूरमञ्जरी, पृ. ५१।

मरकतपुञ्जस्य पृष्ठभागे नायकं संस्थाप्य नायिकां अवलोकायति। हस्तमुद्यम्य कथयति स—भो! दीसदु पुण्णिमाचंदो[1]।

नायकस्य स प्रकृष्टः कार्यसज्जः—कार्यसहायकःनायकोऽपि स्वीकरोति—

नायकः—वअस्स! को अण्णो तुम्हाहिंतो मे कज्ज सज्जो? को अण्णो चंदाहिंतो समुद्दवड्ढणनिट्ठो।

अर्थात् वयस्य! कोऽन्यो युष्मतो मम कार्यसज्जः कोऽन्यश्चन्द्रतः समुद्रवर्धननिष्ठः[2]?

प्रेमव्यापारस्य साफल्यसाधकः—स कपिञ्जलः नायकस्य प्रेमव्यापारस्य पोषकः सफलकारकश्च। नायकस्य प्रेमव्यापारस्याहर्निशं सम्बर्धनं करोति रक्षति च। यदा नायकः नायिकायाः कृते व्याकुलो भवति तदा स नायककष्टनिवारणार्थं सफलोद्योगं करोति।

बुद्धिमान् विदूषकः—सोऽत्यन्तं बुद्धिमानस्ति। नायक अतिव्याकुलावस्थायां पूर्वरात्रिदृष्टनायिकाविषयकस्वप्नस्य वर्णनं करोति तदा स विदूषकः वृथा प्रतिस्वप्नेन तस्य नायकस्य कष्टमपनेतुमुद्यमति कथयति नायकेन—'भो वअस्स! अज्ज मए वि सि विणअं दिट्ठं ति'। कथयित्वा प्रतिस्वप्नस्य वर्णनं कृत्वा नृपस्य कष्टमपाकर्त्तुमुत्सहते।

भोजनभट्टः—स भोजन लोलुपः। वसन्तवर्णनावसरे काव्यप्रसङ्गे वसन्तस्यस्येतादृशं वर्णनं करोति प्रतीयते यत् स भोजनासक्तः। वसन्तर्तौ कीदृशी भोजनसामग्री उत्तमा भवति—निरूपयति स वसन्तवर्णनक्रमे—श्रेष्ठकलमधान्योदनं मथितदधी तक्रञ्च कस्य मनो न मोदते—

फुल्लुक्करं कलमकूरसमं वहंति
जे सिंदुवारविडवा मह वल्लहा ते।
जे गालिअस्स महिसीदहिणो सरिच्छा
ते किं च मुद्धविअइल्लपसूणपुंजा[3]॥

सौन्दर्यबोधनिपुणः—स विदूषकः न केवलं विकृताङ्गवचनादिभिः हास्यमुत्पादयति अपि तु स सौन्दर्यतत्त्वज्ञोऽपि यद्यपि तस्य सौन्दर्य-

---

१. कर्पूरमञ्जरी, पृ. १२५;      २. कर्पूरमञ्जरी, पृ. १२४।
३. कर्पूरमञ्जरी १.१९।

विषयिण्यावधारणा नायकात् पृथगस्ति परन्तु सोऽपि निसर्गरमणीयत्वस्य महत्त्वं स्वीकरोति। नायकः केवलं निसर्गशोभायाः पक्षधरः परन्तु विदूषकदृष्ट्या सौन्दर्यसंवर्द्धने आभूषणानां महत्यावश्यकता। निरूपयति आत्मगतं आकरः—

णिसग्गचंगस्स वि माणुस्स सोहा समुम्मीलदि भूसणेहिं।
मणीण जच्चाण वि कंचणेण विहूसणे लब्भदि कावि लच्छी[१]।।

एवं विदूषकस्य नाट्यपरम्पराकथितसर्वगुणानां सन्धारको ब्राह्मणः कपिञ्जलः स्वकीयविशिष्टप्राञ्जलप्रतिमया सर्वेषां रसिकानां पाठकानाञ्च चेतांसि चमत्करोतीति।

## योगीश्वरो भैरवानन्दः

राजशेखरयुगीनसमाजव्यवस्थायां कौलमतपरम्परा सम्बर्धिता विकसिता सर्वत्राराधिता च। भैरवानन्दः कौलमतसाधकः पञ्चमकार-सम्पूजकाद्भुतसिद्धिसम्पन्नश्च सट्टकस्य सम्पूर्णघटनाक्रमस्य संयोजकः विश्व-सुन्दर्यरद्भुतरत्नस्वरूपायाः कर्पूरमञ्जर्यध्यानविमानेनावतारकः महीषिदीक्षा प्रदायकः नायकनायिकयोरुद्वाहकारकश्च। महाकविः राजशेखररद्भुतसिद्धि-सम्पन्नस्यास्य पात्रस्य साफल्यसहितावतारं प्रथमजवनिकायामेव करोति।

**अत्यद्भुतसिद्धिसम्पन्नयोगीश्वरः**—सट्टकेऽस्मिन् भैरवानन्दस्य प्रथम-परिचयः सिद्धिसम्पन्नयोगीश्वररूपेण भवति। प्रथमजवनिकायामायोजित-राजगोष्ठ्यां विदूषकेन भैरवानन्दस्यागमनं श्रुत्वा महिषी साश्चर्यं कथयति—

'किं सो जणव अणादो अच्चब्भुदसिद्धी सुणीअदि' अर्थात् किं सः, यो जनवचनाद् अत्यद्भुतसिद्धिः श्रूयते (क. पृ. ५३) सिद्धिद्वारैव स नायकस्येच्छानुसारं अपूर्वमहिलारत्नस्वरूपायारद्भुतसौन्दर्ययुक्तायाः नायकायाः ध्यानेनैवावतारणं करोति। (क. पृ. ५९) स्वयमेव स्वकीयसिद्धिविषयिणी घोषणा घोषित-वानस्ति—

दंसेमि तं पि ससिणं वसुहावइण्णं
थंभेमि तस्स वि रविस्स रहं णहद्धे।
आणेमि जक्खसुरसिद्धगणंगणाओ
तं णत्थि भूमिवलए महजं ण सज्झं[२]।।

---

१. कर्पूरमञ्जरी २.२५; २. कर्पूरमञ्जरी १.२५।

कौलमतानुयायी—स योगीप्रवर: कौलमतसमर्थक: गुरुप्रसादप्रापकश्च। मद्यपानेन महिलासह रमणेन च मोक्षस्यावाप्तिर्भवति। केवलं गुरुकृपयैव सर्वसिद्धिस्वरूपमोक्षस्य लब्धि: जायते—

मंताण तंताण ण किं पि जाणे
झाणं च णो किं पि गुरुप्पसादा।
मज्जं पिआमो महिलं रमामो
मोक्खं च जामो कुलमग्गलग्गा[1]॥

बहुदारायुक्त:—स विकृतकौलमतस्याराधक:। यद्यपि तन्त्रसाधना-राधनावसरे ब्रह्मचर्यादियमनियमाणां सम्यक् परिपालनमत्यावश्यकमस्ति परन्तु अयं योगीश्वराविपरीत: मद्यप: मांसमक्षक: नैकदारायुक्तश्च स्वयमेवोद्घोषयति स्वकीयधर्मस्य रमणीयत्वम्—

रंडा चंडा दिक्खिआ धम्मदारा
मज्जं मंसं पिज्जए खज्जए अ।
भिक्खा भोज्जं चम्मखंडं च सेज्जा
कोलो धम्मो कस्सणो भाइरम्मो[2]॥

दम्भयुक्त:—प्रथमावस्थायामेव स दम्भी प्रतीयते। सर्वसाधनामार्गानपास्य स्वकीयंमतमेव सर्वश्रेष्ठमुद्घोषयति। मुक्तिरपि केवलं कौलपरम्परानुसरणेनैव भवति, न ध्यानसाधनावेदाध्ययनादिभि:।

मुत्तिं भणंति हरिबम्ह मुहादिदेआ
झाणेण वेअपढणेण कदुक्किआहिं।
एक्केण केवलमुमादइदेण दिट्ठो
मोक्खं समं सुरअकेलि सुरारसेहिं[3]॥

उदारतागुणयुक्त:—तस्य चरित्रे औदार्यस्य स्थानमस्ति। स उदार: निश्चिन्तश्च। यदा देवी कर्पूरमञ्जरी पञ्चदसदिवसपर्यन्तं स्वान्त:पुरे रक्षितुमिच्छति तदा सहसैव अनुज्ञापयति—'जं भणादि देवी[4]।

---

१. कर्पूरमञ्जरी १.२२;  २. कर्पूरमञ्जरी १.२३।
३. कर्पूरमञ्जरी १.२४;  ४. कर्पूरमञ्जरी, पृ. ७६।

सर्वथापरोपकाररतः—स योगीश्वरः केवलं परोपकारसंलग्नः। नायकनायिकयोः विवाहं निस्वार्थरूपेण कारयति। दसपञ्चदिवसपर्यन्तं कर्पूरमञ्जरी स्वसमीपे संस्थापनं देव्यानुरोधं सहजमेव स्वीकृत्य नायकनायिकयोः सम्मेलनस्य विवाहस्य वा मूलसूत्रं सृजति। यदि घटनेयं न घटिता तर्हि कथासूत्रमत्रैव निरस्तं भवेत्। नायकनायिकयोः संयोगकरणेन स पूज्यस्थानं प्राप्नोति। विदूषकस्योक्तिः—

'भइरवाणंदो उण एदाणं संजोअअरो अच्चिदो महग्घिदो अ'[1]।

नायिकया सह यस्य विवाहो भवति स भाग्यसम्पन्नयुवकावश्यमेव चक्रवर्तीत्वं प्राप्नोतीति जानाति स अतस्मात् नायकं चक्रवर्ती पदप्रतिष्ठापनार्थं सफलसद्योगं करोति।

चतुर्दशीतिथौ पद्मरागमणिमयां गौरीमूर्तिं निर्माय सामहादेवी विभ्रमलेखा भैरवानन्देन दीक्षा गृहिता। दीक्षोपरान्ते गुरुदक्षिणारूपेण स भैरवानन्दः नृपस्य घनसारमञ्जरीत्याख्यातयुवत्यासह विवाहं इच्छति। कथयति सारङ्गिका।

अत्थि एत्थ लाढदेसम्मि चंडसेणो णाम राआ। तस्स दुहिदा घणसारमञ्जरित्ति सा देवण्णेहिं आइट्ठा त्ति—'ऐसा चक्कवट्टि घरिणी भविस्सदिति। तदो सा महाराएण परिणेदव्वा जेण गुरुदक्खिणा दिण्णा भविस्सदि। भट्टा वि चक्कवट्टी किदो होदि'[2]।

घनसारमञ्जरी कर्पूरमञ्जरी एव। महिषीं छलितुमेवेतादृशमाचरितं चक्रवर्तीपदलाभनिमितञ्च।

स सर्वथा सहायको भवति। विवाहावसरे घनसारमञ्जरीमवलोक्य कर्पूरमञ्जरीयमिति भ्रमवशात् महिषी निजभवने एव विवाहसामग्रीं रक्षित्वा आगतास्मि। पुनः तानानेतुं गच्छामि इति कथने स सावधानो भूत्वा सुरङ्गद्वारेणैव कर्पूरमञ्जरीं निजस्थाने संस्थापयतिः—पुत्ति कप्पूरमञ्जरि! सुरङ्गदुवारेण ज्जेव तुरिदपदं गदुअ सट्ठाणे चिट्ठ। देवीआगमणे पुणो आगंतव्वं[3]।

दीर्घप्रयत्नेन नायकस्य विवाहं कारयति चक्रवर्तीपदे संस्थापयति च। विवाहानन्तरं नायकेन पृच्छति—महाराज किं ते पुनरपि प्रियं करोमि। योगीश्वर! कमवरं प्रियं वर्तते इति कृत्यकृत्यो नायकः स्वमनोभावं प्रकटयति—

---

१. कर्पूरमञ्जरी, पृ. ७७; २. कर्पूरमञ्जरी, पृ. २४१-२४२।

३. कर्पूरमञ्जरी, पृ. २४७।

'कुंतलेसरसुआकरफंसप्फारसोक्खसिढिलीकिदसग्गो।
पालएमि वसुहातलरज्जं चक्कवाट्टिपअवीरमणिज्जं[1]'।।

समीक्षा—योगीश्वरः भैरवानन्द अवश्यमेव योगसिद्धियुक्तः। स परोपरकारनिष्ठः स्वार्थं विना फललाभपर्यन्तमुद्यमतिविवाहोपरान्तेऽपि न किञ्चिदपि सांसारिकद्रव्यं गृह्णाति।

## महिषी विभ्रमलेखा

शीलगुणरूपसम्पन्नाभिजात्यवंशीया ज्येष्ठानायिका महारानी विभ्रमलेखाऽस्ति। सा मानिनी कठोरानुशासनकर्त्री नायकशासिका च। तया विना नायकनायिकयोः सम्मेलनमपि न भवितुमर्हति। तस्याकृपाप्रसादेनैव नायकस्येच्छिफलस्य प्राप्तिः।

सट्टकेऽस्मिन् सर्वप्रथमं तस्योपस्थितिः सपरिवारेणं वसन्तशोभावर्णनेन भवति। रङ्गमञ्चोपस्थापनैव सा वसन्तस्य सुन्दरस्वाभाविकवर्णनं करोति सा। प्रथमस्तु परस्परयोः नायकविभ्रमलेखयोः वर्धापनक्रिया भवति—

राजा—देवि! दक्खिणाहिवणरिंदणंदिणि! वड्ढावीअसि इमिणा वसंतारंभेण।

देवी—देव अहं वि तुज्झ पडिवड्ढाविआ भविस्सं[2]।

तदनन्तरं सा वसन्तस्याकर्षकं वर्णनं समुपस्थापयति—

छोल्लंति दंतरअणाइ गए तुसारे
ईसीस चंदणरसम्मि मणं कुणंति।
एण्हिं सुवंति घरमज्झिमसालिआसु
पाअंत पुंजिअपडं मिहुणाइं पेच्छा[3]।।

कर्पूरमञ्जर्याः भगिनी—देवी विभ्रमलेखा कर्पूरमञ्जर्याः मातृस्वसुः पुत्री अत एव भगिनी एव। कर्पूरमञ्जरी दक्षिणापथं विद्यमानस्य कुन्तलदेशस्य नृपतेर्वल्लभराजस्य पुत्रीऽस्ति। देवी कथयति—एहि बहिणिए! आलिंगसु मं[4]।

कर्पूरमञ्जरीमन्तःपुरं नीत्वा तस्याः सम्यक्प्रसाधनं करोति मण्डयति भूषयति टिक्कयति च।

---

१. कर्पूरमञ्जरी ४.२२; २. कर्पूरमञ्जरी, पृ. २५।
३. कर्पूरमञ्जरी १.१४; ४. कर्पूरमञ्जरी, पृ. ७६।

प्रेममिलनस्य प्रणयव्यापारस्य वा बाधिका—सा विभ्रमलेखा नायकनायिकयोः सम्मेलने उत्कटबाधिका प्रकृष्टसाधिकाऽपि च। नायक-नायिकयोः संयोगं बाधयति भैरवानन्दप्रसादादन्ते साधयति च।

परिजनप्रिया—सा परिजनान् समादरयति। सर्वैः सह मधुरं व्यवहारं करोति। विदूषक-विचक्षणयोः कलहप्रसङ्गे क्रोधितोभूत्वा विदूषकः गोष्ठ्याः बहिर्याति तदा तं पुनरावर्तुं यत्नयति सा। गोष्ठ्यां विदूषकस्याभावः तस्याकृते महान् कष्टकरः। सा कथयति—

अज्जउत्त! कीदिसी अज्जकविञ्जलेण विणा गाट्ठी कीदिसी उण णअणं जणेण विणा पसाहणलच्छी[१]।

अर्थात् आर्यपुत्र!

कीदृशी आर्यकपिञ्जलेन विना गोष्ठी।
कीदृशी पुनः नयनाञ्जनेन विना प्रसाधनलक्ष्मी।।

प्रकृतिसंरक्षिका—सा देवी प्रकृत्यानुरञ्जिका तिलकाशोककुरबकवृक्षानां कर्पूरमञ्जरीद्वारा दोहददानं कारयित्वा तेषां संरक्षणं करोति।

शङ्काशीला—सा अहर्निशँ नायिकानायकोयोरूपरि शङ्कां करोति। विवाहावसरेऽपि घनसारमञ्जरीं दृष्ट्वा 'घनमारमञ्जरी' कर्पूरमञ्जरी एव इति शङ्कयित्वा विवाहसामग्रीं कृत्वेति छलेन पुनः कर्पूरमञ्जरी द्रष्टुं गच्छति।

भैरवानन्दीक्षिता—सा भैरवानन्देन दीक्षां गृह्णाति। गुरुदक्षिणारूपेणैव भैरवानन्दानुरोधात् घनसारमञ्जर्याः सह नायकस्य विवाहं कारयति। सा घणसारमञ्जरी कर्पूरमञ्जरी एव ज्ञात्वा प्रसन्ना जाता।

सट्टकस्य साफल्यपूर्वकं समाप्तिः भवति—

देवी रोसकसाअ माणसवई णो होइ सावत्तए
लद्धा पुणससंकमंडलमुही सिंगार संजीवणी।
संजाआ अवि चक्कवट्टिपअवी किं अण्णमब्भत्थणं
सव्वं तुज्झ अणुग्गहेण भरिअं जं माणु से लब्भइ[२]।।

## महीतलसरस्वती विचक्षणा

विचक्षणा अन्तःपुरस्य प्रधानसेविका देव्या प्रियसखी च। सा वाक्पटुयुक्ता विलक्षणप्रतिभासम्पन्ना कविगुणललिता च। नायकस्य फलप्राप्त्यर्थं

१. कर्पूरमञ्जरी, पृ. ५०; २. कर्पूरमञ्जरी ४.२३।

सा बहुमूल्योद्योगं करोति। नृपद्वारा विचक्षणायाः तद्ज्येष्ठबहिन्याश्च काव्यप्रबन्धनप्रशंसिते सति विदूषकोपहसति। नायकः कथयति—किं भण्यते कवित्वे तव ज्येष्ठभगिनिका खल्वेषा? तदनन्तरं विदूषकः भगति—एषा विचक्षणा महीतलसरस्वती एतस्याः पुनर्ज्येष्ठभगिनिका त्रिभुवनसरस्वती[१]।

काव्यकलाकोविदा—काव्यकलायां विशिष्टप्रतिभाविलसिता सा वसन्तोत्सववर्णनप्रसङ्ग नायकमहादेवी गोष्ठ्यामुत्कृष्टकाव्यस्य वाचनं करोति। वसन्तस्य वर्णनमित्थमस्ति—

जे लंकागिरिमेहलाहिं खलिदा संभोअरिवन्नोरई
फारप्फुल्लफणावलीकवलणे पत्तादरिद्दत्तणं।
ते एण्हि मलआणिला विरहिणीणीसास संपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ[२]।।

नायकः प्रशंसति विचक्षणाकृतकाव्यम्—

सच्चं विअक्खणा विअक्खणा चदुरत्तणेण उत्तीणं विचित्तदाए रीदीण। ता किं अण्णं कइचूडामणितणे ठिदा एसा[३]।

सा वाक्योक्ति निपुणा। कलहानन्तरं विदूषकस्य प्रस्थाने सति नायकेन पुनरावाहिते च सा निषेधयति—मा अणुसंधेध। अणुणअकक्कसोक्खु कविंजलो बंभणो। सलिलसित्तं विअ सणगुणगंठी दिढं (चिरं) गाढअरो भोदि। णं दंसणीअं दीसदु[४]।

नायकनायिकयोः प्रेमव्यापारे का प्रकृष्टदौत्यकार्यं कुशलतापूर्वकं सम्पादयति। केतकीदलसंपुटे एणनाभिमसीवर्णशोभितं-श्लोकयुगलयुक्तं प्रेमपत्रमानयति—

एणणास्मिसिवण्णसोहिणा तं सिलोअजुअलेण[५]।

स्वयमेव सा कर्पूरमञ्जरी-विरहावस्थाविनिवेदकस्य श्लोकस्य विरचनं कृत्वा नायकं ददाति नायकः तं वाचयति च—

---

१. कर्पूरमञ्जरी, पृ. १०१; २. कर्पूरमञ्जरी १.२०।
३. कर्पूरमञ्जरी, पृ. ४४; ४. कर्पूरमञ्जरी, पृ. ५१।
५. कर्पूरमञ्जरी २.७।

सह दिवसणिसाहिं दीहरा सासदंडा
सहमणिवलएहिं वाहधारा गलंति।
तुह सुहअ विओए तोअ उब्बिबिरीए
सह अतणुलदाए दुब्बला जीविदासा[१]।।

नायिकानायकयोरैकान्तिकमिलनस्य व्यवस्थापनं करोति सा। दोलाहिन्दोलनकाले दोहददानसमये च विचक्षणासहयोगेनैव स्वप्रियां पश्यति।

एवं विचक्षणा बहुगुणयुक्ता बुद्धिकौशलसंवलिता काव्यकलाविशिष्टा च। नायकस्य फलालाभे प्रभूतसहयोगं करोति। तस्याः चारित्रिकविन्यासे कविः पूर्णतया सफलो भवति।

## कुरङ्गिका सारङ्गिका च

कुरङ्गिका अन्तःपुरस्य सेविका कर्पूरमञ्जर्यारन्तरङ्गसखी च। तृतीयजवनिकान्तरैव नायिकया सहास्याः प्रवेशः जायते। विरहव्यथितायाः कर्पूरमञ्जर्याः नायकेन सह सम्मेलनं साधयति।

सारङ्गिका महादेव्याः विश्वासपात्रपरिचारिका। चतुर्थजवनिकान्तरे अस्याः प्रवेशः। महादेव्याः सन्देशं नायकं प्रतिनयति विवाहकार्यञ्च कुशलतापूर्वकं सम्पादयति।

एवं चरित्रचित्रणकलायां निपुणो महाकविः राजशेखरः प्रतिभाति। सट्टकलक्षणानुसारं चरित्राणां प्रतिष्ठापने कुशलोऽयं कविः।



१. कर्पूरमञ्जरी २.९।

# भाषाविज्ञानदृष्ट्या भाषाविचारः

**प्रो. शारदा-चतुर्वेदी**
अध्यक्षा, भाषाविज्ञान-विभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



**भाषायाः परिभाषा**

भाषामानवजीवनस्य कृते अत्यावश्यकमुपकरणमस्ति। एतदभावे मानवजीवने विकासस्य प्रक्रिया नैव पूर्यते। मानव इमा भाषा स्वसमाजात् जानाति। समाजाभावे भाषा ज्ञातुं न शक्यते। भाषायाः मानवजीवनस्य च गाढतरः सम्बन्धः अस्ति। स्वकीयान् विचारान् मानवः यदा अन्येषु जनेषु प्रकटयितुमिच्छति तदा भाषामेव सम्प्रयुङ्क्ते। यद्यपि विचाराणां मनसि विद्यमानानां व्यक्तये मनुष्यः भाषातिरिक्तानामन्येषामिङ्गितादीनामपि प्रयोगं कुरुते तथापि तेषु भाषायामिव भावावबोधवैशद्यं न सम्भवतीति। प्रायः भाषाविज्ञाः भाषाभिज्ञान् प्रति भाषयैवव्यवहरन्ति। भाषायां लक्षणं किं स्यात् इत्यत्र किञ्चित् विचारयामः। यदि मानवीय विचार निराकरणाय भाषा इति लक्षणं क्रियते तर्हि इङ्गितादौ व्यभिचारस्य तेषामपि मानवविचार प्रकाशन समर्थत्वात्। स्तनन्धयस्शिशुः रोदनादिभिः भाषातिरिक्तैः साधनैरैव स्वीयान् भावान् मात्रेऽभिव्यनक्ति। मूकोऽपि जलार्थं हस्तमाकुञ्च्य स्वीमां पिपासां व्यञ्जयति। न स भाषामुच्चारयति। रेलपथनिदर्शखः (गार्डः) हरितं ध्वजमुत्छ्रायति। जानन्ति च यानचालाकाः यानमग्रेनेतव्यं न वेति। स्काउट संज्ञकाः जनाश्च ध्वजानां सहयोगेन भाषां विनैव बहुविधानान् ज्ञापयन्ति। विविधैरुपायैः पशवः पक्षिणश्च स्वविचारान् तेषुतेषु प्रसंगेषु प्रकटयन्ति। न च मानवैरिव भाषणशक्तिश्चैरधिगता। तस्मात् अत्र वयम् मानवमनोभावानाम् स्पष्टतया प्रकटनसामर्थ्यवत्वे सति व्यक्तवर्णात्मकशब्दावलिरूपत्वं भाषात्वमिति भाषालक्षणेव भाषाविज्ञानशास्त्रानुगुणमिति वयं मन्यामहे। तथा च लक्षणे आदावेव मानवशब्दनिवेशात् श्वादि भाषानिवृत्तिः। व्यक्त वर्णेत्यादि खतनेन भेरिमूकादि ध्वनीनां व्यावृत्तिः। स्पष्टतया इति कथनेनास्पष्टतया मनोभावाभिव्यञ्जकानां इङ्गितादीनां व्यावृत्तिः।

विद्वांसो भाषाया विविधाः परिभाषाः कुर्वन्ति। डॉ. पी.डी. गुणेमहोदयः 'कम्परेटिव फिलालॉजी' इति पुस्तके भाषायाः लक्षणम् एवं करोति—

'समग्राणां मानव विचाराणां बोधने यत् परमं साधनमस्ति यस्य च मानवः स्वेच्छानुसारेण पुनरावृत्तिं कर्तुमपि शक्नुयात् सा भाषा' इति।

'Language in its wides sense means, therefore, the sumtotal of such signs of our thoughts and feelings as are capable of external perception and as could be produced and repeated at will'.

ए.ए. कार्डिनर महोदयोऽपि मानवविचाराभिव्यञ्जकं व्यक्तं ध्वनिसङ्केतमेव भाषां मनुते।

'The common definition of speech as the use of articulate sound symbols for the expression of thought'.

एवमेव अन्योप्येको विद्वान् भाषायाः व्यक्तध्वनिसङ्केतैरेव मानव-विचाराणामभिव्यक्तिं ब्रूते।

'Language is expression of human thoughts by meas of speech, sounds or articulate sounds'.

डिक्शनरी ऑफ लिंग्विस्टिक इति कोष ग्रन्थे मोरियो पाई फ्रेंक ग्यानोर नामानौ विद्वांसौ एवं परिभाषां कुरुतः।

'A system of communication by sound, i.e. through the organ of speech and hearing among human being of a certain group of community using vocal symbols possessing arbitrary conventional meanings'.

सार्थकाः विश्लेषणयोग्याः मानवोच्चारिताः ध्वनयः भाषाया इति उच्यन्ते। यैर्ध्वनिभिः मानवाः स्वीयान् विचारान् (भावान् वा) अभिव्यञ्जयन्ति इति।

इदानीं भारतीयभाषाविदुषां भाषालक्षणविषये मतानि लिख्यन्ते।

भाषा शब्दः संस्कृतस्य भाष धातोः अ प्रत्ययेन निष्पद्यते। 'भाष्यन्ते अनया इति भाषा' इति विग्रहः। भाषा इति नाम्नैव व्यक्तध्वनिसमूह एव भाषा इति स्वत आयाति। डॉ. मंगलदेवः तदुलनात्मकभाषाशास्त्रे इति ग्रन्थे भाषालक्षणमित्थं प्रतिपादयति—यथा चेष्टया व्यापारेण वा मानवः स्वोच्चारणोपयोगि शरीरावयवैरुच्चारितेभ्यो व्यक्तशब्देभ्यः स्वकीयान् विचारान् प्रकटयति सा भाषा इति।

भाषारहस्ये इति पुस्तके डॉ. श्यामसुन्दरदासः 'मनुष्याः परस्परं प्रयुज्यमानसांसारिकवस्तूनां विषये स्वीयानामिच्छानां मतीनाञ्च आदान-प्रत्यादानानि यैर्व्यक्तध्वनि सङ्केतैः कुर्वन्ति सा भाषा' इति व्याजहार।

डॉ. बाबूराम सक्सेना सामान्यभाषाविज्ञानमिति पुस्तके 'यैर्ध्वनि चिह्नैर्मनुष्याः परस्परं विचाराणाम् आदान-प्रत्यादानं कर्वन्ति सा भाषा इत्यवादीत्।

भोलानाथ तिवारी भाषाविज्ञान इति पुस्तके निश्चितैः प्रयत्नैर्मनुष्याणां मुखात् विश्लेषणाध्ययनयोर्योग्यान् सार्थकध्वनि समूहान् भाषां मेने। एवं लक्षण प्रतिपादनेन मानवजीवने भाषाया महत्त्वमपि दर्शितं भवति। तेषां एषां भाषालक्षणानां वर्णनेन एष निष्कर्षः फलति—

१. मानवजीवनस्य सम्यक् विकासाय भाषाज्ञानम् अनिर्वायम्।

२. भाषा मानवविचाराणामभिव्यक्तये सर्वोत्तमं साधनम्।

३. यद्यपि जगति मानवविचाराभिव्यक्तये भाषेतराण्यपि बहूनि साधनानि सन्ति। तथापि तानि सर्वाणि भाषेव स्पष्टतया विचाराभिव्यक्तये समर्थनानि न भवन्ति इति भाषैव सर्वोत्तमं साधनं स्वविचारबोधनाय स्वयं विचारबोधाय च। भाषेतरेभ्यः साधनेभ्यः क्रियमाणा भावाभिव्यक्तिः प्रायः अपूर्णा अनिश्चिता भ्रामिका संशयोत्पादिका च भवति। तस्मात् भावाभिव्यक्तये भाषा परमोत्तमं साधनामिति दिक्।

**भाषाया विविधरूपाणि**

एतावता ग्रन्थेन भाषायाः लक्षणं वर्णितम्। भाषापदं विविधरूपवतीनां भाषाणां कृते प्रयुज्यते। भाषायास्तानि रूपाणि भाषाविज्ञानसिद्धान्तानुसारेण संक्षिप्य इहि वर्ण्यन्ते।

१. **सामान्यभाषा**—कस्यापि देशस्य राष्ट्रस्य प्रान्तस्य जातेर्वा व्यवहारोपयोगिनी या भाषा भवति सा सामान्य भाषेति व्यपदिश्यते। यथा— हिन्दी, बंगाली, फारसी, सिंधी, अंग्रेजी इत्यादयः। मुख्यतया सामान्य भाषामेव बहवो जनाः भाषापदेन व्यवहरन्ति।

२. **उपभाषा (बोली, Patois)**—समाजविशेषस्य, ग्रामविशेषस्य-गृहविशेषस्य वा या भाषा सा उपभाषा इत्युच्यते। इमामेव स्थानीयां भाषामित्यपि वदन्ति। एकस्मिन्नेव क्षेत्रेऽपि जनास्तत्र जातिभेदेन वर्गभेदेनअन्यैश्च

एव विधैरेव भेदैर्वा स्वल्पांशेन परस्परं भिन्ना भाषाः वदन्ति। एता एव भाषा उपभाषारूपेण मान्याः भवन्ति। एकस्याः एवमूलभाषाया अवान्तर-भेदरूपाः कयाचन दृष्ट्या सरूपाः अन्ययादृष्ट्या विरूपाश्च इमा उपभाषाः सर्वासु भाषासु उपलभ्यन्ते।

**विभाषा (Dialect)**—उपभाषापेक्षया विस्तृतक्षेत्रसम्बन्द्धा साहित्यवती परिमार्जिता च या भाषा सामान्यभाषातः काञ्चन न्यूनतां वहन्ती भवति सा विभाषा पदेन् प्रोच्यते एकस्या विभाषाया अधीनस्था बह्व्य उपभाषा भवन्ति। ताश्च उच्चारणादिषु समानत्वेन अश्रूयमाणआ अपि एकभाषात्वेनेव उपभाषाः क्रमशो व्यापकतां प्राप्य विभाषतां लभन्ते।

उपभाषाणां महत्त्व प्राप्तौ इमानि अधोलिखितानि कारणानि सम्भवन्ति। यथा—

१. बह्वीषु उपभाषासु अन्यासां लोपान्तरं या एका उपभाषा अवशिष्यते सा मूलभाषायाः रूपं प्राप्य महत्त्वपूर्णं पदं लभते। उदाहरणार्थ ब्राहुईभाषां मुणअडाभाषां वा उपस्थापयामः।

२. साहित्यलेखनेन अन्येन येन केनापि कारणेन वा यदा उपभाषा विभाषा वा अतीव लोकप्रियतां लभते तदा सा आत्मनः तदस्य उन्नतिं कृत्वा राष्ट्रभाषा पदमलङ्करोति। परमं महिमानं च प्राप्नोति। उदाहरणार्थं ब्रजभाषामुपस्थापयामः।

३. कस्यापि राज्यस्य व्यवहारे प्रयोगेणापि भाषायाः महिमा वर्धते। उपभाषामेव क्रमशः विभाषात्वं भाषात्वं वा लभन्ते। पुरा अवधी नाम्नी उपभाषा राज्याश्रय प्राप्या एव भाषात्वं प्राप्तवती।

४. धर्मप्रचारकर्मणि सहयोगदानेनापि रामकृष्णादि धर्मपुरुषमहात्म्य-वर्णनेन प्रजावध्यो भाषयोरिव महत्त्वं भवति।

५. यस्याः उपभाषाः प्रभावः समाजे अधिको भवति सा उपभाषा भाषेति पदमारोहति। अत्र उदाहरणार्थं आंग्ल भाषां ग्रहीतुं शक्या। सा आरम्भे साधारणी भाषा आसीत्। तद् भाषाभाषिणां प्रभावः विशेषे सा अचिरेण सर्वेषां देशानां सम्पर्कभाषा अभवत्। क्वचित् केषाञ्चन तद्भाषाभिज्ञजनानां प्रभाववशादपि उपभाषा भाषापदं प्राप्नोति यथा बंगभाषा।

रामकृष्णपरमहंस-विवेकानन्द-रवीन्द्रनाथटैगोराणां प्रभावे विशिष्टं स्थानं प्राप्तवती।

वस्तुतः अद्यत्वे भाषावैज्ञानिकाः भाषा शब्दं Standard Language अर्थात् स्तरीयभाषा इत्यर्थे एव प्रयुञ्जते। तस्मात् अस्मिन् ग्रन्थे भाषापदेन साहित्यकी शिष्टभाषा एव भाषेति पदेन गृह्यते। एतादृशीं भाषां शिक्षिताः एव व्यवहरन्ति। इदानीं टकसालीभाषा आदर्शभाषेति वा इयं व्यवह्रियते।

वह्व्यः विभाषाः कारणविशेषेण स्वसदृशीभिः अन्याभिः विभाषाभिः सम्मानिताः स्वीयं विभाषात्वं विहाय भाषात्वं लभन्ते। भाषा उपभाषानां विभाषानां शब्दकोषात् अपेक्षितान् शब्दान् गृहीत्वा स्वकीयं शब्दभण्डारं विभूषयन्ति यथा विजयीराजा विजितेभ्यः राजभ्यः करं गृहीत्वा स्वकोषं वर्धयते।

पुरान् इदानीं भारतराष्ट्रभाषात्वेन स्वीकृता हिन्दीभाषा भारतस्य काचन प्रान्तीय विभाषा उपभाषा वा अभूत्। यदा प्रभृति इयं राष्ट्रभाषात्वमलभत तदा प्रभृति अन्य विभाषानां शब्दान् आदाय स्वीयं शब्दकोषं अतिसमृद्धमकरोत्।

**साहित्यभाषा सामान्यभाषा च**—यद्यपि मुख्यतया भाषाविज्ञानशास्त्रे भाषाविभाषोपभाषारूपाणां त्रिविधानां भाषास्वरूपाणामेव विवेचनं दृश्यते तथापि सामान्यभाषा साहित्यभाषा इत्युभयप्रकारेणापि भाषानां विभाजनं क्रियते। सेयं साहित्यभाषा सामान्यभाषातः किञ्चिदभिन्ना शिष्टैः कतिपयैरैव व्यवह्रियमाणा सामान्यभाषापेक्षया स्थिरा च भवतु। एषा साहित्यभाषा निरन्तरं व्याकरण-कोशादिभिः नियन्त्रिताः स्वतन्त्रतया स्वीयस्वाभाविकमार्गेण गन्तुमक्षमाः कृत्रिमेव राजते। अस्यां साहित्य भाषाणामिव परिवर्तनशीलतापि न भवति। अनयोः साहित्यसामान्यभाषयोः स्थैर्यास्थैर्यकृत्रिमाकृत्रिमत्वे एव भेदके तत्त्वे।

**भाषोपभाषयोर्वैषम्यम्**—

१. भाषा व्यापिका भवति। उपभाषा च भाषाव्याप्या भवति। अतः एकस्याःक्षेत्रे बह्व्यः उपभाषाः भवितुमर्हन्ति। उपभाषायां क्षेत्रे तदन्तरगततया भाषा न तिष्ठन्ति।

२. एकभाषान्तरगतानां उपभाषाणां व्यवहारकर्तारः परस्परं विचारान् बोद्धुं बोधयितुम् च शक्नुवन्ति। अर्थात् उपभाषाणां परस्परम् अत्यन्तं भेदो भवति। परन्तु एक भाषायाः वेत्ता जनः अन्यां भाषां जानीयादेव इति नियमोनास्ति। यथा-हिन्दी, भाषान्तरगतानां अवधी-खडी-ब्रजादीनां उपभाषाणां व्यवहर्तारः, परस्परं अभिप्रायं जानन्ति तथा फ्रेन्चजर्मनयोः व्यवहर्तारः परस्परम् अभिप्रायाभिज्ञा न भवन्ति।

३. मुख्यभाषायाः प्रयोगः शिक्षणकार्येषु शानव्यवस्थायां साहित्य-रचनासु च भवति। उपभाषानां तु प्रयोगः सामान्यजनानां दैनिकव्यवहारेषु एव प्रायो भवति। यद्यपि अद्यत्वे हिन्दीभाषायाः उपभाषात्वेन स्वीकृतानां ब्रजावध्यादिभाषाणामपि उत्कृष्टं साहित्यं मिलति। तथापि उत्कृष्टसाहित्योपलब्धिरेव मुख्यभाषायाः लक्षणमिति निश्चित्य वक्तुं न शक्यते तथापि प्रधानतया यस्य क्षेत्रस्य या मुख्यभाषा भवति। तस्यामेव तस्यदेशस्य विशिष्टं साहित्यं उद्भवति।

**राष्ट्रभाषा**—समग्रस्य राष्ट्रस्य व्यवहाराय या राष्ट्रभाषा भवति सा भाषा पेक्षया व्यापिका भवति यथा भारते गुर्जर-बंग-महाराष्ट्र प्रभृदयः भाषाः भाषात्वेन स्वीकृताऽपि राष्ट्रभाषात्वेन न स्वीक्रियन्ते। भाषाः तस्य राष्ट्रस्य क्षेत्रमेकं व्याप्नोति, राष्ट्रभाषातु पूर्णं राष्ट्रं व्याप्नोति।

निष्कर्षतः भाषाविषये इदं वक्तुं शक्यते—नानाविचाराणाम् अभिव्यक्तिसाधनं भाषा। प्रथमतः भाषायाः उदयः उपभाषारूपेण भवति। सैव उपभाषा क्रमशः विकासं प्राप्य विभाषा-भाषा-राष्ट्रभाषादिरूपेण व्यवह्रियते।

## भाषायाः प्रकृतिः

### भाषा कथम् अर्ज्यते?

मानवीयस्वाभाविकप्रवृत्तिषु भाषाज्ञानप्रवृत्तिरपि अन्यतमा अस्ति। यद्यपि शिशुत्वं जहति बालके भाषाज्ञानप्रवृत्तिः स्वभावतो विकसति तथापि अश्रूयमाण भाषाज्ञान प्रवृत्तिः तस्मिन्न जायते। यद्यपि मनुष्येषु भाषणशक्तिः भाषकजनान् दृष्ट्वा तत्छब्दान् श्रुत्वा च विकासमाप्नोति। तस्मादेव एषा भाषणशक्तिः परम्पराप्राप्ता भवति तथापि भाषां ज्ञातुमिच्छता जनेन स्वयमपिप्रयासः कर्त्तव्यो भवति। तस्मात् भाषां पैतृकसम्पत्तिरूपां न मन्यामहे। तस्मात् भाषा परम्पराप्राप्ता अपि तात्कालिक समाजप्राप्ता च भवति।

'Language therefore is more or less traditional and social. It should not be supposed, as is sometimes done, that it is inherited as a race characteristic'.

'A child can acquire any other language in much the same way as it does it mother-tongue'.

भाषा यद्यपि परम्परया प्राप्यते तथापि तामर्जयितुमपि दृढः प्रयासः कर्त्तव्यो भवति। लघुर्बालकः परस्परं व्याहरतिः स्वमातापितृप्रभृतीन् जनान् दर्शं

दर्शं तेषां वचांसि श्रावं प्रयासेन भाषां जानाति। स च अचिरेण अनवरत प्रयासेन अनुदिनं नूतनान्, शब्दान् जानन् तेषा अर्थानपि परिचिनोति।

वस्तुतः भाषामानवानामर्जितं धनमेव भवति इत्येव मन्तव्यं, यतो हि बहुषु स्थलेषुमानवाः स्वजातीयां प्राचीं स्वीयां भाषां परिस्थितिवशात् विहाय विजातीयामन्यामेव भाषां व्यवहरन्ति। यदि भाषा पारम्परिकी सम्पत्तिरिव स्यात् तर्हि स्व परम्पराविरुद्धाम् नूतनां भाषां अचिरेण ज्ञातुं जनाः कथं शक्नुयुः?

**भाषा अर्जितसम्पत्तिः**

भाषाशिक्षणस्य प्रक्रिया सर्वदा प्रचलति। जन्मनः आरभ्य मरणपर्यन्तं भाषाशिक्षण कार्यं नावरुद्ध्यते। एवं एवं निरन्तरमर्ज्यमानत्वात् भाषा अर्जिता सम्पत्तिरित्युच्यते। मातापितरौ अन्ये वा यथा स्वकीयं वित्ताधिकं स्व पोषितेभ्यः तेभ्यः स्वोत्तराधिकारिभ्यः स्वेच्छया प्रयच्छन्ति तथा इदं भाषासम्पत्तिः दातुं न शक्यात्। इयं तु भाषा पितृ प्रभृतिभ्यः लब्भ्यमानाऽपि लब्धुरेव प्रयासे परम्परातोलभ्यते तदिदं वैषम्यं इतर सम्पदभ्यः भाषासम्पदः। अन्यच्च-कश्चनजनः स्वप्रतिभामाहात्म्यात् तामेव भाषामचिरेण अन्यस्तु चिरेण कश्चन् एकामपि भाषां सम्यङ् न जानाति अन्यश्च अनेकाः भाषाः सम्यग् जानाति। एतद्वयमपि भाषाया अर्जितसम्पत्तित्वे गमकम्।

**भाषा निरन्तरं परिवर्तते**

प्रयत्न-स्थानस्वरादीनां वाग्यन्त्रां च परिवर्तनेन भाषायामपि परिवर्तनो भवति। एकाएव भाषा गच्छता कालेन शनैः शनैः अन्यामेव काञ्चन् नूतनान् स्थितिं लभते। अवस्था विशेषवशात् वाग्यन्त्र स्थिति परिवर्तनेन भाषापरिवर्तनमनुदिनमनुभूयते। भाषोपभाषाविएभाषादि भाषाभेदाः। भाषायाः परिवर्तनशीलतामेव व्याहरन्ति। केषाञ्चन जनानां मध्ये व्यवह्रियमाणा डाइलेक्ट इति अवधीयमाना भाषा अपि क्रमेण विभाषात्वं (सब-डाइलेक्ट) प्राप्य शनैः भाषात्वं (लैंग्वेज) प्राप्नोति।

एतत्सर्वं भाषाया परिवर्तनशीलत्वे प्रमाणम्। भाषायाः स्वरूपं सर्वदा परिवर्तनशीलमेव भवतीत्यत्र न सन्देहगन्धः। भाषा परिवर्तनमध्ये एव जीवतीति कस्यचन कथनं न विवादमर्हति। तस्मादेव अनुभवमूलीकामुत्तरभारतीयानां 'चारकोस में बदले पानी आठ कोस में बानी' इतीमाम् लोकोक्तिम् श्रुणुमः'।

**भाषाणामेकस्मिन् नियमे स्थापनम् अतिकठिनम्**

इमामेव व्यक्ति परिवर्तनशीलां भाषाप्रवृत्तिं विज्ञाय प्राचीनकालादेव सर्वासु भाषासु पूर्वैरर्जितानां विविध विद्यानां ज्ञानं उत्तरकालोद्भवानां न

स्यादितिभिया बहुविधानां व्याकरण नियमान् संगृह्य भाषास्थैर्याय महान्तः व्याकरण ग्रन्थान् निर्मितवन्तः। तादृश प्रयासे भारतीयाः संस्कृतज्ञाः सर्वाधिका अग्रगामिनः।

तथापि बहुलं छन्दसि इत्यादि निर्देशैः भाषायाः स्वतन्त्राः प्रवृत्तिर्दुर्निरोधा इत्यपि स्व्यकार्षुः। महाभाष्यकारः पतञ्जलिरपि, शब्दापशब्दयोः विवेचन प्रसङ्गेः—'भूयासोऽपशब्दः अल्पीयान् शब्दः'। 'एकैकस्य शब्दस्य बहवोऽपभ्रंशाः'। तद्यथा गौरित्यस्य गावी, गोणी, गोता, गोपोतलिका इत्येवमादयोऽपभ्रंशाः इति। व्याकरणानुशिष्टशब्दापेक्षया जनजिह्वागतभाषाशब्दाः अधिका इति स्वीकृत्य भाषा सर्वदा इदमित्थंतया नियमेषु निरोधयितुं न शक्यते इति प्रकारान्तरेण प्रकटयामास।

**भाषा सरलां रीतिमनुसरति**

नित्यं परिवर्तनशीला सैषा भाषा स्वपरिवर्तनविधौ सारल्यमेवानुसरति। सति सम्भवे मानवः स्वल्पैरेवाक्षरैः स्वविवक्षितं प्रस्तोतुमिच्छति। तद् यथा गृहेषु बालकानां नामानि संक्षिप्य उच्चार्यन्ते। संयुक्तव्यञ्जनानां मध्ये स्वरप्रदाने संयुक्तव्यञ्जनोच्चारणक्लेशः परिह्रियते; यथा धर्म इति स्थाने धरम, कर्म इति स्थाने करम, इत्यादीन्युदाहरणानि। तथैव इदानीं हिन्दीभाषाया आंग्लभाषातः समागतानां संयुक्तव्यञ्जनवताम् स्टेशनादिशब्दानां टेशनादिरूपेण उच्चारणमपि अत्रोदाहरणतां याति।

**भाषास्वरूपविषये निष्कर्षः**

सेयं भाषा परम्परागतापि प्रयासपूर्वकमर्जनं विना नैव लभ्यते। यद्यपि भाषायाः अर्जनं व्यक्ति, करोति, तथापि नैषा, वैयक्तिकी सम्पत्तिः। यस्तु सर्वदा सामाजिकत्वं न जहाति। सेयं निरन्तरं परिवर्तनशीलत्वात् अस्या निश्चितमन्तिमं रूपमिदमित्थंतया नैव वक्तुं शक्यम्। भाषायाः प्रवाहः स्वभावतः काठिन्यमपहाय सारल्यमनुसरति। प्रयत्नलाघवं भाषासु प्रामुख्येन दृश्यते।

**भाषापरिवर्तनसामान्यकारणानि**

सांसारिकवस्त्वन्तराणीव भाषापि परिवर्तते। परिवर्तनमेव भाषाया उन्नतेर्मूलम्। समयानुसारेण मानवानां विचाराः परिवर्तन्ते। भाषा विचाराणामभिव्यञ्जिका भवति। विचाराणां परिवर्तनात् भाषायामपि परिवर्तनं भवति। मानवभाषा मानवशरीरावयवेषु कृताधारा भवति। एते सावयवाः वयोऽनुरूपं परिवर्तन्ते। परिवर्तितावयवैरुच्चार्यमाणा भाषापि परिवर्तिता परिलक्ष्यते। यद्यपि भाषाप्रवाह अविच्छिन्नतया निरन्तरमनुवर्तते तथापि सैष

प्रवाहः क्रमिकं परिवर्तनं न जहाति। कस्यामपि भाषायां युगपत् महत् परिवर्तनं न भवति। यथा मानवशरीरे अनुक्षणं जायमानं परिवर्तनं न परिलक्ष्यते तथा अत्रापि मन्तव्यम्।

**वस्तुतो न कापि भाषा स्थिरा**

स्वकीयभाषायां श्रद्धातिशयमादधाना केचन संस्कृतलैटिनादिभाषाः स्थिराः सर्वदैकरूपाः इति वदन्तो लभ्यन्ते। न तेषां विचारः समीचीनः। यद्यपि भारतीया संस्कृतभाषा बहोः कालात् एकरूपैव लभ्यते तथापि तत्र सम्यक् विचारे सति सा एकरूपता गलति मद्रबंगादिजनैः इदानीमुच्चार्यमाणा संस्कृतभाषा नेदानीमपि एकरूपतामातिष्ठति। पुराकाले कीदृशं संस्कृतमासीत् इति वक्तुं न शक्यते। इदानीं मद्रादिदेशेषु देशभेदेन विविधतया समुच्चार्यमाणं संस्कृतं सर्वमपि प्राचीनमेवेति, वक्तुं न शक्यते। तस्मात् परिवर्तनं संस्कृते जातमेवेति मन्तव्यम्। एवमन्यत्राप्यनुसन्धेयम्।

**भारतीयभाषात्रैविध्यम्**

सर्वासां जातीनां कालभेदेन भाषा भिद्यन्ते। भारतेपि प्राचीन मध्यकालिक आधुनिकभेदेन त्रिविधाः भाषाः स्वीकृताः। तत्र प्रचीना वैदिकलौकिकभेदभिन्ना संस्कृतभाषा। तस्यां वैदिकग्रन्थाः रामायणमहाभारत काव्यादयश्च दृश्यन्ते। मध्यकालिकभाषासु पालि-प्राकृतापभ्रंशाः बहुविधाः दृश्यन्ते। तुलसीकृत-रामचरितमानसमारभ्य एतद्कालपर्यन्ता भाषा आधुनिक भाषा इत्युच्यन्ते। एतासु तिसृषुभाषासु प्रतिभाषं भिन्नं वैशिष्ट्यं दृश्यते। प्राचीन-भारतीयार्यभाषासु धातुप्रातिपदिकेषु संयुज्यमानप्रत्ययानां दृढः संश्लेषः अविनाभावेन वा दृश्यते। इयं विशेषता इदानीं संश्लेषणात्मकता इत्युच्यते। यथा करोति, जिगमिषति इत्यादौ। प्रकृतिप्रत्ययौ पृथक्करणं सर्वथा अशक्यम्।

माध्यकालिकभारतीयार्यभाषापि तामेव प्राचीनां संश्लेषणात्मकतां प्रायो न जहाति। मध्यकाले आर्यभाषासु प्रातिपदिकरूपाणां धातुरूपाणाञ्च न्यूनता अभूत्। व्यञ्जनानां क्लिष्टसंयोगाः सरलसंयोगे परिवर्तिताः। यथा—संस्कृतगत धर्म-मृत्युशब्दौ पालिभाषायां धम्म-मच्चु रूपतामवापतुः संस्कृतापेक्षया पालिभाषायां स्वरबाहुल्यं दृश्यते। यथा—संस्कृते यदि शब्दः प्राकृते जई। आर्यपुत्रशब्दस्य अज्जउत्तं रूपेण परिवर्तते आधुनिकार्यभाषासु प्रकृतिप्रत्ययोः दृढस्संश्लेषः श्लथति। व्याकरणे वाक्यविज्ञाने च आधुनिकभाषासु महत् परिवर्तनं लक्ष्यते। देशान्तरभाषाशब्दानां बहूनां प्रवेशोऽपि बहुधा दृश्यते।

**लौकिकवैदिकसंस्कृतयोः भेदाः**

प्रथमतः वैदिकं संस्कृतमासीत्। तत्रकालक्रमेण जायमानानि परिवर्तनानि लौकिकसंस्कृते दृश्यन्ते। वेदे धातुरूपाणां शब्दरूपाणाञ्च आधिक्यमासीत्। लौकिकसंस्कृते तु तथा नास्तु। यथा—

| **वैदिकभाषा** | **लौकिकभाषा** |
|---|---|
| मर्त्यासः, मर्त्याः | मर्त्याः |
| देवासः, देवाः | देवाः |
| अग्नौः, अग्ना | अग्नै |
| पूर्वेभिः, पूर्वैः | पूर्वैः |
| देवेभिः, देवैः | देवैः |
| वैदिकभाषा (धातु रूप) | लौकिकभाषा (धातुरूप) |
| इमसि, इमः | इमः |
| स्मसि, स्मः | स्मः |
| यातन, यात | यात |
| शये | शेते |
| ईष्टे, ईशे, ईशते | ईष्टे |
| श्रुधि, शृणुधि, शृणुहि, शृण | शृणु |

ऋग्वेदे लौकिक तुमुन् प्रत्ययस्य स्थाने असे, तवै, अध्यै इत्यादयः अन्येपि प्रत्ययाः भवन्ति। तस्मात् सिद्धयति लोके भाषापेक्षया वैदिकभाषा क्लिष्टा रूपबाहुल्यवती च।

वेदेषु बहुधा प्रयुक्ता अपि शब्दाः लोके न प्रयुज्यन्ते। यथा—

| | | |
|---|---|---|
| दर्शत | = | दर्शनीय, सुन्दर |
| दृशीक | = | सुन्दर, दर्शनीय |
| रपस् | = | चोट, दुर्बलता, रोग |
| अूमर | = | बुद्धिमान |
| मूर | = | मूर्ख |
| ऋदूदर | = | कोमलाशय, दयालु |
| अक्तु | = | रात्रि, अन्धकार |

क्वचिच्च वैदिकशब्दानां लौकिक संस्कृते अर्थपरिवर्तनं दृश्यते। यथा—

| **शब्दः** | **वैदिकार्थः** | **लौकिकसंस्कृतार्थः** |
|---|---|---|
| अदाति | शत्रुता, कृपणता | शत्रु |
| वध | कोई भयंकर हथियार | मार डालना |
| मृडीक | कृपा, अनुग्रह | शिवस्य नाम |
| न | जैसे, नहीं | नहीं |
| अरि | ईश्वर, धार्मिक, शत्रु | शत्रु |
| क्षिति | निवास-स्थान, गृह | पृथिवी |

एवमेव सर्वज़ातीयभाषासु कालभेदेन भाषाः विद्यन्ते। यथा आङ्गलभाषा एव प्राचीनकाले लैटिनरूपेणासीत्।

**भाषापरिवर्तनकारणानि**

भाषापरिवर्तने शारीरिक-मानसिक-भौतिक-भौगोलिक-सांस्कृतिक-सामाजिकादीनि बहूनि कारणानि भवन्ति। तेषु कानिचन आभ्यान्तराणि अन्यानि च बाह्यानि। एतद्वयं साक्ष्यादसाक्ष्याद्भेदेनापि व्यवहर्तुं शक्यम्।

**आभ्यन्तराणि कारणानि**

आभ्यान्तरकारणत्वं नाम स्वाभाविकतया भाषाजन्मसामर्थ्यवत्त्वम्। वक्तृषु एव यानि कारणानि उत्पद्यन्ते तानि आभ्यान्तराणि। यानि च अन्यत्र उत्पत्तिं लब्ध्वा वक्तॄन् प्रभावयन्ति तानि बाह्यानि।

(क) **प्रयोगाधिक्यम्**—इदमपि भाषापरिवर्तने मुख्यं कारणम्। एक एव शब्दः बहोः कालात् पुनः पुनः बहुभिरुद्धाष्यमाणः स्वतः रूपभेदं लभते। यथा उपाध्यायशब्दः पाध्याय = पाध्या = पाध्ये = अझा = ओझा = झा इत्यादि रूपेण परिवर्तमानो दृश्यते। शताब्दीशब्दः सदी सदि रूपेण परिवर्तमानोऽपि अत्र उदाहर्तुं शक्यः।

(ख) **बलाघातः**—यस्मिन् अर्थे शब्दस्य अर्थान्तरापेक्षया बाहुल्येन प्रयोगोभवति सोऽर्थ एव तस्य शब्दस्य वाच्यतया अवशिष्यते। अन्ये अर्थाः तस्य शब्दस्य नावतिष्ठन्ति। अत्र निदर्शनं अरि शब्दः। पुरा अरि शब्दः ईश्वर-धार्मिक-निवासस्थान-शत्रुरूपेषु अर्थेषु प्रयुज्यते स्म। स किल शब्दः गच्छता कालेन अन्यानर्थान् विहाय शत्रुरूपमेवार्थमेव अभ्यधात्।

(ग) **प्रयत्नलाघवः**—अल्पीयसा प्रयासेन अधिकानर्थान् उपस्थापयितु-मीहते इदमेव प्रयत्नलाघवमिति वोच्यते। प्रयत्नलाघवः लाघवं किल

ध्वनिलोपागम, समीकरण, विषमीकरण वर्णव्यत्ययादिरूपेण बहुधापरिवर्तते। इदमेव भाषापरिवर्तनस्य मुख्यमाभ्यन्तरकारणम्।

(घ) **शारीरिकभेदः**—जनानां शरीरसंस्थानानि प्रायेण भिद्यन्ते। प्रतिजनं तदन्तरगतध्वनियन्त्राणि नित्यं परिवर्तन्ते। तस्मात् शारीरिककारणेनापि भाषायां बहूनि परिवर्तनानि जायन्ते इति नित्यमनभूतचरम्। एतत्कारणेनैव-बालयुवकवृद्धानां भाषा भिद्यन्ते।

(ङ) **सम्यगनुकरणसामर्थ्याभावः**—इदमपि भाषापरिवर्तने कारणतां भजते। गुप्त-मिश्रशुक्लादयः हिन्दीभाषायां प्रयुज्यमानाः संयुक्तवर्णोपधाशब्दाः आङ्ग्लभाषाभाषिभिः आकारान्ततया मिश्रा-गुप्ता इत्यादिरूपेण प्रयुज्यमाना दरीदृश्यन्ते।

## बाह्यकारणानि

(क) **भौतिककारणम्**—भौतिककारणे मुख्यतया स्थानभेदः आयाति। व्यवहर्तुः जीविकोपार्जनसाधनं स्थानस्य शीतोष्णादि आधिक्यं इत्यादीनि च भौतिककारणानि भाषाभेदं जनयन्ति। यथा पर्वतीयानां समतलीयानाञ्च मध्ये एकैव भाषा रूपभेदं लभते। एवमेव बंगभाषायां स्तानभेदात् अकारः ओकारतया उच्चार्यते। कासुचित् दाक्षिणात्यभाषासु राजस्थानभाषायाञ्चद्वित्वस्य प्रवृत्तिः नूनं भौतिककारणादेव।

(ख) **विजातीयसम्पर्कः**—भिन्नभाषिकजनसमर्पार्कादपि भाषापरिवर्तनं बहुत्र दृष्टचरम्। यथा—क़, ग़, ज़ इत्यादयः जिह्वामूलीय अध्ययनः हिन्दी भाषायामपि संक्रातः। यथा च स्टेशन कोटादयः शब्दाः आङ्गलभाषाशब्दाः पूर्णरूपेण हिन्दीभाषायामपि प्रयुज्यमाना दृश्यते।

(ग) **राजनैतिककारणम्**—एतेनापि भाषाणां विकासह्रासौ भवतः। यादृशाः शासकाः भवन्ति तादृशीमेव भाषां ते प्रचारयन्ति। यथा अशोकादिभिः राजभिः पालिभाषायाः प्रचारः कृतः। यवनकाले फारसीभाषायाः आङ्गलकाले च आङ्गलभाषायाः प्रचारः समभूत्।

सांस्कृतिक-धार्मिक-सामाजिककारणैश्च समये-समये भाषाणां परिवर्तनानि भवन्ति। एवञ्च सर्वाः भाषाः परिवर्तनशीलाः इति सिद्धम्। परिवर्तनमेव तासां प्रकृतिः। वैयाकरणाः भाषानां प्रवाहं रोद्धुं यतन्ते। परन्तु भाषाप्रवाहो नावरुद्ध्यते, यथा पाणिनीयव्याकरणेन संस्कृतभाषायामवरुद्धायामपि हिन्द्यादयः भाषा तत एव प्रसूताः इति दिक्।

●

# काव्यमीमांसाप्रकाशे राजशेखरकाव्यपरिशीलनम्

**डॉ. बालकृष्णशर्मा**
साहित्यविभागाध्यक्षः
शासकीयसंस्कृतमहाविद्यालयः
ग्वालियरम् (म.प्र.)



प्राचीनसमये संस्कृतसाहित्ये विश्वकोशसदृशग्रन्थानां प्रणयनस्य परम्परा आसीत्। एते ग्रन्थाः यद्यपि शास्त्रविशेषमधिकृत्य प्रणीताः सन्ति परन्तु प्रणेतृपाण्डित्यहेतोः तत्र बहूनां शास्त्राणां विषयवस्तु समाविष्टमस्ति। तद्यथा पातञ्जलमहाभाष्यं कामसूत्रमर्थशास्त्रं शारीरकभाष्यं नाट्यशास्त्रम् इत्यादयः ग्रन्थाः। एतादृग्ग्रन्थप्रणयनपरम्परायां राजशेखरप्रणीतस्य काव्यमीमांसाग्रन्थस्य गणना भवति। यद्यपि ग्रन्थोऽयं काव्यशास्त्रग्रन्थेषु परिगण्यते अथवा काव्यशास्त्रमधिकृत्य प्रणीतोऽस्ति तथापि ग्रन्थस्यास्य विषयवस्तुनि विविधविषयाः समाहिताः सन्ति। अयं ग्रन्थः स्वपूर्णरूपे बहुविशालः आसीत्। परन्तु वर्तमानसमये अस्य केवलं प्रथमाधिकरणमेवोपलभ्यते। अस्मिन् प्रथमाधिकरणविषयवस्तुन्यपि बहवः विषयाः विवेचिताः सन्ति येन केवलम्प्रथमाधिकरणमपि विषयवस्तुदृष्ट्या परममहत्वपूर्णमस्ति। अस्मिन् प्रथमाधिकरणे अष्टादशाध्यायाः सन्ति येषु विविधविषयाः विवेचिताः सन्ति। तत्र प्रथमेऽध्याये शास्त्रसङ्ग्रहाख्ये काव्यपुरुषोत्पत्तिः काव्यविद्यायाः प्रवचनञ्च ग्रन्थाध्यायनिर्देशश्चेति विषयाः प्राधान्येन वर्णिताः। द्वितीयेऽध्याये शास्त्रनिर्देशाख्ये शास्त्राणां निर्देशः विद्यते। तृतीयेऽध्याये काव्यपुरुषोत्पत्तिवर्णनं चतुर्थेऽध्याये पदवाक्यविवेकः पञ्चमेऽध्याये काव्यपाककल्पः षष्ठेऽध्याये पदवाक्यविवेकः सप्तमेऽध्याये पाठप्रतिष्ठावर्णनम् अष्टमेऽध्याये काव्यार्थ-योनिवर्णनं नवमेऽध्याये अर्थव्याप्तिवर्णनं दशमेऽध्याये कविचर्याराजचर्या-वर्णनम् एकादशेऽध्याये शब्दहरणं द्वादशेऽध्याये शब्दार्थहरण-कविप्रभेद-प्रतिबिम्बकल्पविकल्पसमीक्षणम् इति विषयाः त्रयोदशाध्याये अर्थहरणेष्वालेख्य-

प्रख्यादिभेदाः चतुर्दशाध्याये जातिद्रव्यक्रियासमयस्थापनावर्णनं पञ्चदशाध्याये गुणसमयस्थापनावर्णनं षोडशाध्याये स्वर्गपातालीयकविरहस्यस्थापनावर्णनं सप्तदशाध्याये देशविभागवर्णनम् अष्टादशाध्याये च कालविभागवर्णनमिति विषयाः विवेचिताः काव्यमीमांसायाः प्रथमाधिकरणे। अस्याधिकरणस्याभिधान-मस्ति कविरहस्यमिति। तात्पर्यमिदं यत् कविनिष्ठवैशिष्ट्यानि काव्यसम्बद्धानि वर्णितानि सन्ति प्रथमाधिकरणेऽस्मिन्।

वस्तुतः काव्यसमीक्षणाय द्विविधप्रवृत्तिः भवति समालोचकानां वा काव्यरसिकानां वा। प्रथमा प्रवृत्तिः कविनिष्ठतया भवति द्वितीया च काव्यनिष्ठतया अथवा प्रथमा प्रवृत्तिः व्यक्तिनिष्ठतया द्वितीया च वस्तुनिष्ठतया। यदा कविनिष्ठतया व्यक्तिनिष्ठतया वा काव्यालोचने भवति प्रवृत्तिस्तदान्यानि तत्त्वानि विवेचनीयानि भवन्ति यदा च काव्यनिष्ठतया वस्तुनिष्ठतया वा भवति काव्यालोचने प्रवृत्तिस्तदान्यानि तत्त्वानि विवेचनीयानि भवन्ति। तद्यथा व्यक्तिनिष्ठतया कविनिष्ठतया वा प्रतिभा शब्दार्थहरण-कविसमय-काव्यपाकप्रभृतिविषयाः विवेचनीयाः भवन्ति वस्तुनिष्ठतया काव्यनिष्ठतया वा शब्दार्थ-रस-गुण-दोषालङ्कारादयः विषयाः विवेचनीयाः भवन्ति। अनया दृष्ट्या यदा काव्यमीमांसाविषयवस्तुविवेचनं क्रियते तदा प्रतिभाति यदयं ग्रन्थः कविनिष्ठतया व्यक्तिनिष्ठतया वा विरचितोऽस्ति। अतएव एषः ग्रन्थः कविशिक्षायाः ग्रन्थः कथ्यते न तु काव्यसमीक्षायाः। तात्पर्यामिदं यद् राजशेखरः काव्यशास्त्रविषये कविशिक्षापक्षपाती प्रतिभाति न तु काव्यशिक्षायाः आग्रही। अर्थात् राजशेखरमते कविशिक्षा प्रधानं भवति काव्यशिक्षा चानुषङ्गिकम्। अयमेव हेतुरस्ति यद् राजशेखरस्य काव्यमीमांसाग्रन्थः कविशिक्षासम्प्रदायग्रन्थोऽस्ति। मम्मटादीनामाचार्याणां काव्यप्रकाशादयः ग्रन्थाः काव्यशिक्षायाः काव्यसमीक्षायाः वा ग्रन्थाः सन्ति। एवमयं निष्कर्षः प्राप्यते यत् राजशेखरमते कविशिक्षा भवति कवीनां कृते परिशीलनीया। कविशिक्षापरिशीलनेन विना न कोऽपि कविः श्रेष्ठकाव्यं रचयितुं समर्थो भवति। यदा राजशेखरः सर्वेषां कवीनां काव्यानि उद्दिश्य एवमनुशासनं करोति तदा आपाततः एव प्रतिभाति यत् तस्य काव्यानां परिशीलनप्रसङ्गेऽपि तथ्यमिदमवश्यमेवावधेयम्।

महाकविराजशेखरः दृश्यकाव्यानां प्रणेता अस्ति। तस्य चत्वारि दृश्यकाव्यानि प्रख्यातानि सन्ति तानि च बालरामायणम् बालभारतम्

विद्धशालभञ्जिका कर्पूरमञ्जरी च। एतेषु दृश्यकाव्येषु काव्यमीमांसावर्णित-सिद्धान्तानां परिशीलनमत्राभीष्टमस्ति। यतो हि राजशेखरः काव्यमीमांसायां कविशिक्षायाः विवेचनं कृतवान् अतः कविशिक्षादृष्ट्यैव तस्य दृश्यकाव्यानां परिशीलनं समुचितं प्रतिभाति। तत्राधोलिखितशीर्षकेषु काव्यमीमांसाप्रकाशे राजशेखरकाव्यपरिशीलनं कर्तुं शक्यते—

१. राजशेखरस्य रचनासु शब्दार्थहरणविचारः
२. राजशेखरस्य रचनासु कविसमयवर्णनम्
३. राजशेखरस्य रचनासु काव्यपाकविवेचनम्
४. राजशेखरस्य रचनासु देशकालविभागवर्णनम्
५. राजशेखरस्य रचनासु कविप्रतिभापरिपाकविवेचनम्

**१. राजशेखरस्य रचनासु शब्दार्थहरणविचारः**

प्रायः कवयः स्वपूर्ववर्तिकाव्येभ्यः शब्दार्थहरणं कुर्वन्ति। यतो हि काव्यरचनाभ्यासाय पूर्ववर्तिकवीनां काव्यानामपि पुनःपुनः परिशीलनं क्रियते। तद्यथा मम्मटोऽभिदधाति—

'काव्यानां च महाकविसम्बन्धिनाम् आदिग्रहणादितिहासादीनां विमर्शनात् व्युत्पत्तिः। काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रयः'[१]।

ध्वन्यालोककारः आनन्दवर्धनः पूर्वकविवर्णितार्थेषु रसपरिग्रहणद्वारा नवत्वानयनं वर्णयति। तद्यथा—

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः[२]॥

आनन्दवर्धनः अग्रे पूर्ववर्तिकवेः वर्णनेन सह परवर्तिकवेर्वर्णनस्य सादृश्यं वर्णयन् तस्य त्रिविधत्वं प्रतिपादयति। तद्यथा—

संवादो ह्यसादृश्यं तत्पुनः प्रतिबिम्बवत्।
आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्[३]॥

---

१. काव्यप्रकाशे १.३ वृत्तौ; २. ध्वन्यालोके ४.४।
३. ध्वन्यालोके ४.१२।

तात्पर्यमिदं यत् कवयः स्वपूर्ववर्तिकाव्येभ्यः शब्दार्थहरणं कुर्वन्ति। इयं प्रवृत्तिः न सर्वथा दोषाय। एतस्मादेव कारणात् आचार्यराजशेखरः काव्यमीमांसायां शब्दार्थहरणमधिकृत्य विस्तरेण चर्चां कृतवान्। शब्दार्थहरणस्य स्वरूपं निरूपयन् राजशेखरः ब्रूते—

'परप्रयुक्तयोः शब्दार्थयोरुपनिबन्धो हरणम्'[१]।

स शब्दार्थहरणस्य सहजतां सुन्दरतां च निरूपयन् वदति—

'उक्तयो ह्यर्थान्तरसङ्क्रान्ता न प्रत्यभिज्ञायन्ते स्वदन्ते च तदर्थास्तु हरणादपि हरणं स्युः इति यायावरीयः'[२]।

नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः।
स नन्दति विना वाच्यं यो जानाति निगूहितुम्[३]।।

काव्यमीमांसायाः अस्य सिद्धान्तस्य परिपालनं राजशेखरः स्वरूपकेषु सम्यक्तया करोति। तद्यथा सः बालरामायणे स्वपूर्ववर्तिकवेः भवभूतेः महावीरचरितनाटकात् प्रचुरतया शब्दार्थहरणं करोति। एवमेव कालिदासकाव्येभ्योऽपि राजशेखरः प्रचुरतया शब्दार्थहरणं करोति। अत्र द्वित्राण्युदाहरणानि प्रस्तूयन्ते। तद्यथा—'पाणौ कार्मुकमक्षसूत्रवलयम्'[४] इत्यादिमहावीरचरितवचनस्य हरणं बालरामायणे 'हस्तालम्बितमक्षसूत्रवलयम्'[५] इत्यादिरूपे विद्यते। एवमेव 'पुत्रसङ्क्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम्'[६] इत्यादिमहावीरचरितकथनस्य हरणं बालरामायणे 'वृद्धो दशरथः सोऽयमुपास्ते गृहमेधिताम्'[७] इत्यादिरूपे कृतमस्ति। इत्थम्प्रमाणितम्भवति यत् काव्यमीमांसायां राजशेखरः यस्य शब्दार्थहरणसिद्धान्तस्य वर्णनं करोति तस्योदाहरणानि बालरामायणे प्रचुरतया मिलन्ति। अनेन वक्तुं शक्यते यद् बालरामायणस्य परिशीलनं काव्यमीमांसाप्रकाशे यदा भवति तदा राजशेखरस्य सिद्धान्तानां वैशद्येन प्रतीतिर्भवति। इयं स्थितिः तस्यान्यकाव्येष्वपि मिलति।

---

१. काव्यमीमांसायां कविरहस्ये एकादशाध्याये।
२. तत्रैव; ३. तत्रैवाग्रे।
४. महावीरचरिते १.१८; ५. बालरामायणे १.५३।
६. महावीरचरिते ४.५१; ७. बालरामायणे ६.३०।

## २. राजशेखरस्य रचनासु कविसमयवर्णनम्

आचार्यराजशेखरः काव्यमीमांसायाः चतुर्दशाध्याये पञ्चदशाध्याये षोडशाध्याये सप्तदशाध्याये च कविसमयवर्णनं विस्तरेण कृतवान्। इदं वर्णनं राजशेखरस्य मौलिकवर्णनमस्ति। सः कविसमयस्य परिभाषामेव ददाति— 'अशास्त्रीयमलौकिकञ्च परम्परायातं यमर्थमुपनिबध्नन्ति कवयः स कविसमयः'[१]।

अस्य कविसमयस्य विविधवर्गान् निरूप्य राजशेखरः सर्वेषामुदाहरणानि प्रस्तौति। अयं कविसमयः प्रथमं त्रिधा भवति। तद्यथा—

'स च त्रिधा स्वर्ग्यो भौमः पातालीयश्च'[२]।

भौमः पुनः जातिद्रव्यगुणक्रियारूपतया चतुर्धा। एतेऽपि पुनः प्रत्येकं त्रिधा असतो निबन्धनात् सतोऽप्यनिबन्धनात् नियमतश्च। अग्रे राजशेखरः विस्तरेण सर्वेषामुदाहरणपुरस्सरं वर्णनं करोति। अनेन वर्णनेन प्रमाणितम्भवति यत् सः कविसमयम्प्रत्याग्रही वर्तते। अनया दृष्ट्या यदा तस्य काव्यानां परिशीलनं क्रियते तदा प्रतिभाति यत् सः स्वकाव्येषु कविसमयानां प्रचुरतया यथावसरं निबन्धनं कृतवान्। एतेषां सम्यक् परिशीलनं काव्यमीमांसाप्रकाशे एव कर्तुं शक्यते। तद्यथा कर्पूरमञ्जर्या मलयानिलस्य मलयाचले च चन्दनवृक्षस्य वर्णनं द्रष्टव्यमस्ति—

ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव[३]।।

एवमेव राजशेखरस्यान्यकाव्येषु काव्यमीमांसाप्रकाशे कविसमयानां निबन्धनस्य परिशीलनं कर्तुं शक्यते। वस्तुतः राजशेखरः कविसमयानुशासने दत्तावधानो दृश्यते काव्यमीमांसायाम्। अतः तस्य विन्यासः राजशेखरकाव्येषु स्वाभाविकः एव। यावत् पर्यन्तं काव्यमीमांसावर्णितकविसमयस्य परिशीलनं न क्रियते तावत् पर्यन्तं राजशेखरकाव्येषु निबद्धानां कविसमयानां

---

१. कविरहस्ये चतुर्दशाध्याये; २. तत्रैवाग्रे।

३. कर्पूरमञ्जर्याम् २.२०।

याथातथ्यपरिज्ञानं न सम्भवति। अतः काव्यमीमांसाप्रकाशे राजशेखरकाव्येषु कविसमयपरिशीलनम् अपेक्षितम्भवति।

## ३. राजशेखरस्य रचनासु काव्यपाकविवेचनम्

आचार्यराजशेखरस्य काव्यमीमांसाग्रन्थः काव्यपाकानां विशदविवेचनाय प्रसिद्धोऽस्ति। अत्र सः विस्तरेण विविधकाव्यपाकानां सोदाहरणं विवेचनं प्रस्तौति। येन प्रतिभाति यद् राजशेखरः काव्यपाकाग्रही वर्तते। सः काव्यमीमांसायां कविरहस्ये पञ्चमेऽध्याये पिचुमन्दपाक-बदरपाक-मृद्वीकापाक-वार्ताकपाक-तिन्तिडीकपाक-सहकारपाक-कमुकपाक-त्रपुसपाक-नालिकेरपाकेति नवधा पाकविवेचनं करोति। पाकस्वरूपनिरूपणं कुर्वन् राजशेखरः वदति— 'तस्माद्रसोचितशब्दार्थसूक्तिनिबन्धनं पाकः'[१]।

सः मृद्वीका-सहकार-नालिकेरपाकानामुपादेयतां प्रतिपादयति पिचुमन्द-वार्ताक-क्रमुक-पाकानां हेयताञ्च निरूपयति। अन्ये त्रयः पाकाः मध्यमाः। मृद्वीकादिपाकानां दर्शनं महाकवीनां काव्येषु भवति। अस्मिन् प्रसङ्गे राजशेखरः कवीनां विविधवर्गान्निरूपयति। प्रथमं तावत् शास्त्रकविः काव्यकविः उभयकविरिति स त्रिधा। शास्त्रकविः पुनः त्रिधा। तद्यथा—

'यः शास्त्रं विधत्ते यश्च शास्त्रे काव्यं संविधत्ते योऽपि काव्ये शास्त्रार्थं निधत्ते'[२]। काव्यकविः अष्टधा भवति। तद्यथा—रचनाकविः शब्दकविः अलङ्कारकविः उक्तिकविः रसकविः मार्गकविः शास्त्रार्थकविरितिभेदैः। एते गुणाः यत्र कवौ एकत्र मिलन्ति सः महाकविः भवति। महाकवेः काव्ये मृद्वीका-सहकार-नारिकेलरूपसरस-मधुरपाकानां दर्शनं भवति। अनया दृष्ट्या यदा राजशेखरमहाकवेः काव्यानां परिशीलनं क्रियते तदा प्रतिभाति यत् तस्य रूपकेषु विविधपाकानां सद्भावोऽस्ति। बालरामायण-बालभारत-कर्पूरमञ्जरी-विद्धशालभञ्जिका इति सर्वेषु दृश्यकाव्येषु राजशेखरनिरूपितविविधपाकानां निदर्शनानि मिलन्ति। नालिकेरपाकस्य प्राचुर्येण प्राप्तिर्भवति तस्य काव्येषु।

## ४. राजशेखरस्य रचनासु देशकालविभागवर्णनम्

राजशेखरः काव्यमीमांसायां सप्तदशाध्याये देशकालविभागवर्णनम् तथाष्टादशाध्याये कालविभागवर्णनं विस्तरेण कृतवान्। काव्यरचनासु प्रायः

१. कविरहस्ये पञ्चमाध्याये।

२. काव्यमीमांसायाः कविरहस्ये पञ्चमाध्याये।

कवयः प्रसङ्गानुसारं देशकालवर्णनं कुर्वन्त्येव परन्तु काव्यशास्त्रिणः काव्यशास्त्रनिबन्धेषु प्रायः अनयोः वर्णनं न कृतवन्तः। एषः राजशेखरः एवास्ति यः देशकालविभागवर्णनं समुचितरूपेण कृतवान्। सः भूलोकस्य द्वीपान् समुद्रान् च जम्बूद्वीपस्य वर्षाणि वर्षगिरीन् च भारतवर्षस्य नवभेदान् आर्यावतस्य पञ्चविभागान् च वर्णितवान्। अस्मिन् वर्णने जनपदानां पर्वतानां नदीनां द्रव्याणां च यथार्थवर्णनं मिलति। दिशां वर्णनमपि राजशेखरः कृतवान्। एवम्प्रतिभाति यत् दिक्कालदेशादिवर्णने वर्तते राजशेखरस्य विशेषाग्रहः। एतस्मादेव कारणात् तस्य काव्येषु दिक्कालदेशादीनां प्रसङ्गानुसारं मञ्जुलवर्णनं मिलति। अनया दृष्ट्या यदा तस्य काव्यानां परिशीलनं क्रियते तदा तत्र देशकालविभागानां वर्णनं यथावसरं सुष्ठुरूपेण मिलति। तद्यथा उत्तरापथ-पूर्वदेश-पश्चाद्देश-दक्षिणापथ-मध्यदेशविभागानां यथावसरं वर्णनं मिलति। काव्यमीमांसायां तु राजशेखरः कान्यकुब्जं केन्द्रीकृत्य देशविभागानां यथावसरं वर्णनं कृतवान्। एवमेव देशविभागानामवस्थितिमपि प्रसङ्गवशादनेकत्र सूचितवान् राजशेखरः स्वकाव्येषु। बालरामायणनाटकस्य दशमाङ्के राघवानन्दाख्ये राजशेखरः रामस्य लङ्कातः अयोध्याप्रत्यागमनवर्णनव्याजेन द्रविडान्ध्रमहाराष्ट्रलाटमालवोज्जयिनीपाञ्चालमहोदयप्रयागवाराणसीमिथिलादिदेश-भागान् सुन्दरतया वर्णयति। अतः प्रमाणितम्भवति यत् काव्यमीमांसायां यथा राजशेखरः भूभागानां वा देशभागानां वा प्रदर्शनं कृतवान् तथैव स्वकाव्येषु तेषां निबन्धनमपि कृतवान्।

## ५. राजशेखरस्य रचनासु कविप्रतिभापरिपाकविवेचनम्

आर्चायराजशेखरः काव्यमीमांसायां कविप्रतिभायाः वर्णनं मौलिकतया विस्तरेण च कृतवान्। कवेः विविधरूपाणां तेषां विविधभेदानां कविप्रकृतीनां वा सम्यक्विधिना निरूपणं कृतं राजशेखरेण। सः काव्ये कविप्रतिभापरिपाकम् अपेक्षते। कविप्रतिभापरिपाकं विना काव्ये सौन्दर्याधानं न सम्भवति। 'गुणवदलङ्कृतञ्च वाक्यमेव काव्यम्'[१] इति काव्यलक्षणं कथयता राजशेखरेण काव्ये प्रतिभाजन्यगुणालङ्कारविन्यासः परमावश्यकः इति प्रतिपादितः। कवेः कृते काव्यरचनायै सहजा प्रतिभा आहार्यप्रतिभा चेत्युभावेवापेक्षे भवतः। अनया दृष्ट्या यदा तस्य रूपकाणां परिशीलनं क्रियते तदा प्रतिभाति यत्तेषु पदे पदे

---

१. काव्यमीमांसायां कविरहस्ये षष्ठाध्याये।

कविप्रतिभावैष्ट्यिं विराजते। तद्यथा बालरामायणे सीतास्वयंवर-यन्त्रजानकीप्रभृतिप्रसङ्गेषु कवेः प्रतिभायाः परिपाकः दृष्टिगोचरः भवति।

एवम्प्रकारेण संक्षेपे वक्तुं शक्यते यत् काव्यमीमांसायां येषां सिद्धान्तानां तत्त्वानां वा निरूपणं राजशेखरेण कृतमस्ति तेषां परिपालनं स्वकाव्येषु यथावसरं कृतं तेन। विशेषरूपेण रीतीनां वैदर्भीगौडीपाञ्चालीनां विविधपाकानां विविधदेशविभागानां कविसमयानां शब्दार्थहरणस्य कालविभागानामृतूनाञ्च वर्णनसौन्दर्येण कवेः प्रतिभायाः परिपक्वता परिलक्ष्यते इति राजशेखरः सिद्धान्तरूपेण प्रयोगमाध्यमेन च सुष्ठु प्रतिपादयतीति शम्।



# स्वाध्यायस्वरूपं माहात्म्यं च

**डॉ. अरुणकुमारमिश्रः**
श्रीमाता-वैष्णोदेवी-श्राईन-बोर्ड
गुरुकुल-चरणपादुका-कटरा
जिला–रियासी, जम्मू-कश्मीरः



**स्वाध्यायोऽध्येतव्यः[१] (तैत्तिरीयारण्यकम्- २.१५)**

'चोदनालक्षणोऽर्थो धर्मः' इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' इत्येतदन्तं जैमिनिप्रोक्तं सूत्रजातं धर्मविचारशास्त्रम्। तदेतस्य प्रथमाधिकरणस्य विषयः। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिरक्षरग्रहणमात्रपर्यवसायीति केचिन्मन्यन्ते। अपरे त्वेवमाहुः—अर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते। अर्थज्ञानं विचारमन्तरेण न सम्भवति। ततो विधिविचारशास्त्रस्य प्रयोजकमिति।

तत्रैवं संशयः—इदं विचारशास्त्रं विधिप्रयुक्त्या नाऽऽरम्भणीयम्? उताऽऽरम्भणीयमिति।

तत्र अर्थज्ञानायाध्ययनस्य विधिरिति वदन् वादी प्रष्टव्यः—

१. किम् अत्यन्तमप्राप्ताध्ययनं विधीयते? किं वा पक्षेऽप्राप्तमवघातं वाधिगम्यते? इति।

२. नाऽऽद्यः—'विमतं वेदाध्ययनमर्थज्ञानहेतुः, अध्ययनत्वाद् भारताध्ययनवद् इत्यनुमानेनैव विधिनिरपेक्षेण प्राप्तत्वात्। तर्ह्यस्तु द्वितीयः पक्षः। अवघातवन्नियमविधित्वसम्भवात्। यथा नखैर्घातेन वा तण्डुलनिष्पत्तिसम्भवात्पक्षेऽप्राप्तोऽवघातो विधिनाऽवश्यं कर्तव्य इति नियम्यते, तथा लिखितपाठेन गुरुपूर्वकाध्ययनेन वाऽर्थज्ञानसम्भवात्पक्षेऽप्राप्तमध्ययनं विधिना नियम्यत इति चेत्, न, वैषम्यात्। अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः, नान्यथा।

---

१. जैमिनीयन्यायमाला, प्रथमोऽध्यायः, धर्मजिज्ञासाप्रकरणम्, श्लो. ३०-३२, पृ. ११।

३. दर्शपूर्णमासापूर्वमवघातस्य नियमहेतुः। अत्र तु लिखितपाठजन्ये-नैवार्थज्ञानेन क्रत्वनुष्ठानसिद्धेरध्ययनस्य नियमहेतुर्नास्ति। अतो द्विविधविध्यसम्भवादर्थज्ञानार्थं विचारशास्त्रारम्भस्य वैधत्वं नास्ति। तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत्, स्वर्गार्थमक्षरग्रहणमात्रं विधेयमिति वदामः। अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः।

४. 'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति सूत्रेण विश्वजिदादिवत् श्रूयमाणमप्यधिकारिणं सम्पादयितुं तद्विशेषणं स्वर्गफलं युक्त्या स्थापितम्। तद्वदध्ययनेऽप्यस्तु। एतदेवाऽभिप्रेत्योक्तम्—

विनाऽपि विधिना ज्ञानलाभान्नहि तदर्थता।
कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत्।।

सति 'वेदमधीत्य स्नायात्' इति शास्त्रमनुगृह्यते। अस्मिंश्च शास्त्रे ाध्ययनसमावर्तनयोर्नैरन्तर्यं प्रतीयते। त्वत्पक्षे तु—अधीतेऽपि वेदे धर्मविचाराय कुल एवाऽधिवासः कर्तव्यः। तथा सति तन्नैरन्तर्यं बाध्येत। तस्माद्विचारशास्त्रस्य त्वाभावात्पाठमात्रेण[1] स्वर्गादिसिद्धेः, समावर्तनशास्त्राच्च धर्मविचारशास्त्रं नाऽऽरम्भणीयमिति पूर्वपक्षः।

अत्रोच्यते—यदुक्तं लोकसिद्धत्वान्नाऽप्राप्तविधिरिति, तत्तथैवाऽस्तु। नियमविधित्वं तु न वारयितुं शक्यम्। यथा दर्शपूर्णमासजन्यं परमापूर्वमवघात-नियमजन्यस्याऽवान्तरापूर्वस्य कल्पकम्, एवमत्राऽप्यशेषक्रतुजन्यमपूर्वजातं क्रतु-ज्ञानसाधनाध्ययननियमजन्यस्याऽपूर्वस्य कल्पकं भविष्यति। नियमादृष्टानङ्गीकारे च श्रूयमाणो विधिरनर्थकः स्यात्। न च विश्वजिन्न्यायेन स्वर्गार्थत्वं युक्तम्, दृष्टफलेऽर्थज्ञाने सम्भवत्यदृष्टस्य कल्पयितुमशक्यत्वात्। अत एवोक्तम्—

लभ्यमाने फले दृष्टे नाऽदृष्टपरिकल्पना।
विधेस्तु नियमार्थत्वान्नाऽऽनर्थक्यं भविष्यति[2]।।

शास्त्रदीपिकायामप्यस्मिन्सन्दर्भे उक्तम्—अनेन सूत्रेण प्रारिप्सितस्य शास्त्रस्य श्रोतृप्रवृत्तिसिद्धये धर्मज्ञानं प्रयोजनं कथ्यते। यदा हि धर्मजिज्ञासा कर्तव्येत्युक्त्वा शास्त्रमारभ्यमाणं दृश्यते, तदा नूनमिदं शास्त्रं धर्मज्ञानप्रयोजकमित्यवगम्यते। विदितं तावत्प्रयोजनम्। सम्बन्धोऽपि शास्त्रस्य प्रस्तावहेतुर्वक्तव्यः। यथा शास्त्रान्तरेषु शिष्यप्रश्नानन्तर्यादिसम्बन्धः प्रस्तावको वर्ण्यते, तथेहापि शास्त्रारम्भे प्रयोजकानां

---

१. शास्त्रदीपिका, पृ. ३०; २. उद्धृतं जै.न्या., पृ. १३।

सम्बन्धानामन्यतमो वक्तव्यः—अनेन सम्बन्धेनेदं शास्त्रमायातमिति। अन्यथा ह्यसम्बद्धप्रलपितं स्यात् सत्यम्। इह तु य एवायं प्रयोजनेन सह शास्त्रस्य साध्यसाधनसम्बन्धः, स एव शास्त्रस्य प्रस्तावको नान्यः। भवति हि साधनत्वमेव साध्यार्थिनः साधने प्रवृत्तिहेतुः। स चायं सम्बन्धः प्रयोजनोक्त्यैवार्थाज्ज्ञायत इति न सूत्रकारेण पृथगुक्त इत्यदोषः। सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति। परिहरति—सत्यमिति। यदैवास्य शास्त्रस्येदं प्रयोजनमित्युक्तं तदैव तयोर्धर्मज्ञानविचारयोः साध्यसाधनभावलक्षणः सम्बन्धोऽर्थादुक्तो न चार्थात्प्राप्त इति सूत्रकारा अक्षरैर्निबध्नन्ति। असूचकत्वेन सूत्रत्वप्रसङ्गादित्यर्थः। अयमाशयः—नास्य शास्त्रस्य शिष्यप्रश्नानन्तर्यादिरूप-सम्बन्धो हेतुः। लोकहितैषिणा जैमिनिना स्वयमेव धर्मज्ञानसाधनीभूतस्य शास्त्रस्यारब्धत्वात्। अतः साध्यसाधनसम्बन्ध एवात्र। स च सम्बन्धिनोरभिधाना-देवार्थाज्ज्ञात इति भाष्यकारोऽप्येनमेव सम्बन्धं 'धर्मः' प्रसिद्धो वा स्यादप्रसिद्धो वेत्यादिनाऽऽक्षेपसमाधानाभ्यामुपपादयिष्यति। अतो न सम्बन्धान्तरगवेषणा कार्येति भावः। स एवेत्यनेन क्रियानन्तर्यगुरुपर्वक्रमरूपसम्बन्धान्तरानिराकरणम्। तथा हि काणादे तन्त्रे शिष्यप्रश्नक्रियानन्तर्यरूपः सम्बन्धो दर्शितः। गुरुपर्वक्रमात्मकश्च सम्बन्धो यथात्रैव कैश्चिदुक्तः। तद्यथा—ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, स च वशिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये, स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवानिति।

क्वचित्तु ब्रह्मा महेश्वरो वा प्रजापतये मीमांसां प्रोवाच प्रजापतिरिन्द्रायेन्द्र आदित्यायेत्येवमादि पाठान्तरम्।

तदत्र क्रियारूपस्तावत्सम्बन्धो न वाच्यः, निष्प्रयोजनत्वात्। न ह्येवंरूपसम्बन्धसद्भावासद्भावयोः श्रोतॄणां शास्त्रप्रवृत्तौ निवृत्तौ वा शास्त्रगोचरे ज्ञाने वा कश्चिद्विशेषः। तथा गुरुपर्वक्रमरूपोऽपि सम्बन्धो निष्फलो निर्हेतुकश्च। न ह्यस्मिन्सम्बन्धे किञ्चित्प्रमाणमस्ति। अतः सप्रमाणकः सप्रयोजनश्च सम्बन्धो वाच्यः। स च साध्यसाधनत्वरूप एव युक्त इति भावः। नन्वत्र सूत्रकृतैवाथशब्दं प्रयुञ्जानेनाध्ययनक्रियानन्तर्यलक्षणस्य शास्त्रसम्बन्धस्योक्तत्वात्कथमुच्यते सूत्रकारेण न पृथगुक्त इति। उच्यते—अत्राथशब्दोऽध्ययनजिज्ञासाक्रिययोरेव सम्बन्धमाह न शास्त्रस्य प्रयोजनेन सह, ते च क्रिये शास्त्रादत्यन्तभिन्ने। ननु जिज्ञासापदेनैव विचाररूपा शास्त्रशब्दवाच्या क्रियोपात्तैव कथमुच्यते शास्त्रादत्यन्तभिन्नेति। मैवम्, जिज्ञासापदस्य ज्ञानेच्छारूपक्रियावाचकस्य मीमांसापर्यायत्वाभावात्। श्रोतृक्रिया हि

ज्ञानेच्छारूपा जिज्ञासा, वक्तृक्रिया तु विचारात्मिका मीमांसा, कुतस्तयोरैक्यम्। कथं तर्हि जिज्ञासाशब्दस्य मीमांसायां प्रयोगः, उभयोरपि सम्प्रत्ययान्तत्वसाम्येनैकार्थत्वभ्रमादिति ब्रूमः। अयमत्र विवेकः—विषयोऽप्यत्र ज्ञाप्यजन्यभेदेन द्विविधः। ज्ञाप्यो धर्मः, जन्यस्तावज्ज्ञानम्।

सम्बन्धस्तु धर्मेण सह शास्त्रस्य ज्ञाप्यज्ञापकभावलक्षणस्तज्ज्ञानेन सह जन्यजनकलक्षणः, धर्मज्ञानमवान्तरप्रयोजनं परमप्रयोजनम् चाभ्युदयनिःश्रेयसे, तत्कामोऽधिकारीत्यनुबन्धचतुष्टयं श्रोतृप्रवृत्तिसिद्ध्यर्थं सूत्रकारेण श्रुत्यर्थाभ्यामुक्तम्। लोकानुग्रहश्च शास्त्रप्रस्तावे कारणम्।

अत्रेदं चिन्त्यते—किमध्ययनानन्तरं धर्मजिज्ञासया गुरुगृहेऽवस्थातव्यम्, उत गुरुगृहात्समावर्तितव्यमिति। यदि हि स्वाध्यायाध्ययनविधिना धर्ममात्रार्थमध्ययनं स्वर्गाद्यर्थेन विधीयते, ततस्तन्मात्रेणैव शास्त्रार्थस्य समाप्तत्वात् 'अधीत्य स्नायात्' ति स्मृतिवचनबलेन च समावर्तितव्यमिति[1]।

**दाध्ययनस्य फलम्**

'अथास्य स्वाध्यायादिकरणे फलं तु स्वयं श्रुत्यैव दर्शितम्'। अथातः स्वाध्यायप्रशंसा। प्रिये स्वाध्यायप्रवचने भवतः। युक्तमना भवति। अपराधीनोऽहरहरर्थान् साधयते। 'सुखं स्वपिति'। परमचिकित्सक आत्मनो भवति। इन्द्रियसंयमश्च एकारामता च। प्रज्ञावृद्धिः। यशोलोकप्राप्तिः। प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणानभिनिष्पादयति। ब्राह्मण्यं प्रतिरूपचर्यां यशोलोकपङ्क्तिम्। लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्ति—

'अर्चया च दानेन चाज्यतया चावध्यतया च'[2]।

याज्ञवल्क्यशिक्षायामप्युक्तम्[3]—

वेदाध्ययनकाले एकाग्रतां विधाय ऋक्संहितां, यजुर्वेदमन्त्राणामथवा साम्नाम् अर्थज्ञानसमुपेतं त्रिवारं पदक्रमपाठरूपेणाभ्यस्य सर्वविधैः पापैः प्रमुच्यते। अतो यज्ञं वेदेति याज्ञिकः (पारस्करगृह्यसूत्रे उक्तम्—'कामं तु याज्ञिकस्य')। सरहस्यामित्यत्र उपनिषत्समर्थकः। एतेनेदमायातं यद् उपनिषत्प्रतिपादक-

---

१. शास्त्रदीपिका, अ. १, पा. १, अ. १, पृ. ५।

२. शत.ब्रा. ११.५.७.१।

३. ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः।
साम्ना वा सरहस्यां च सर्वपापैः प्रमुच्यते॥३१॥ (याज्ञ.शि., पृ. ३०)

ब्राह्मणभागसहिताम् इत्यर्थः। चकारप्रयोगात्—वेदाथर्वपुराणानि सेतिहासानि शक्तितो ग्राह्यम्। सङ्क्षेपेण वेदे सर्वाणि शास्त्राणि समाहितानि सन्ति।

याज्ञवल्क्यस्मृतावपि उक्तम्[1]—

वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियान्वितम्।
न स्पृशन्तीह पापानि महापातकजान्यपि।।

मिताक्षराकारेण विज्ञानेश्वरेणोक्तम्—

यत् 'तच्चाऽकामकारविषयम्'। ऋषिवरा वशिष्ठप्रमुखा अपि एवमेव कथयन्ति[2]—

यद्यकारि शतं साग्रं कृतं वेदश्च धार्यते।
सर्वं तत् तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम्।।

न वेदबलमाश्रित्य पापकर्मरतिर्भवेत्।
अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत्।।

संहिता-पद-क्रमपाठानां विशिष्टं फलं भवति। संहितायामध्ययनरतं पुरुषं सूर्यलोकम्, संहिताप्रोक्तमन्त्राणां विशेषपदपाठेन चन्द्रलोकमधिष्ठानम्। संहितायाः पूर्वोत्तरपदयोर्विहितसन्धिपाठः (क्रमपाठः) ब्रह्मपदं प्रापयति। तीर्थराजप्रयागवत् संहिता-पद-क्रमाणां सावधानतया पठनशीलस्य गङ्गादित्रिवेणीस्नानतुल्यं फलं प्रददाति[3]।

चदुर्दशपाठदोषा भवन्ति—

१. शङ्कितम्—अयं वा अन्यो वा वर्ण इति संशयं मनसिकृत्य पठनम्।
२. भीतम्—भयेन पठनम्।
३. उद्घुष्टम्—रोषेण, रोदनेन, क्षोभेण वा समपेक्षितबलादधिक-बलेनोच्चारणम्।
४. अव्यक्तम्—अस्पष्टतयोच्चरितम्।
५. अनुनासिकम्—अननुनासिकाक्षरस्यापि नासिकयोच्चारणम्।

---

१. याज्ञ.स्मृ., प्रायश्चित्ताध्यायः, श्लो. ३१०, पृ. ५१३।
२. याज्ञ.शिक्षा., पृ. ३१।
३. याज्ञ.शि. ३२-३३, पृ. ३२।

६. काकस्वरम्—निष्पीड्योच्चैरुच्चारणम्।

७. मूर्ध्निगतम्—अत्युच्चैः पूर्णबलेनोच्चारितम्।

८. स्थानविवर्जितम्—शिक्षाशास्त्रोपदिष्टस्थानविरहेणोच्चारणम्।

९. विस्वरम्—सहाध्येतॄणां समानस्वरतां परित्यज्योच्चारणम्। समपेक्षित-मन्द्रादिस्वरविरहेण उदात्तादिस्वरप्रदर्शनाभावेन वा उच्चारणम्।

१०. विश्लिष्टम्—समपेक्षितैकप्राणयोगेऽपि विश्लिष्योच्चारणम्।

११. विरसम्—रुक्षोच्चारणं माधुर्यविरहेण।

१२. विषमाहतम्—चर्वणक्रियाप्रदर्शनमुखेन वर्णानामुच्चारणम्।

१३. व्याकुलम्—शोकभयादिनिमित्तेन, स्वभावतो वा धैर्यविरहेण चित्त-विक्षेपानुमानज्ञापकवृत्त्योच्चारणम्।

१४. तालहीनम्—तालशब्दोऽत्र अवसानार्थः साधीयान्, ततश्च समपेक्षितावसानविरहितोच्चारणम्[1]।

---

१. सम्प्र.प्रबो.शि. १४-१६, पृ. ४-५।

# पण्डितराजजगन्नाथः–श्रीकृष्णभक्तः

**डॉ. शरच्चन्द्रद्विवेदी**
प्रवक्ता (अंशकालिकः)
रानीपद्मावतीतारायोगतन्त्रादर्शसंस्कृतमहाविद्यालयस्य
शिवपुरम्, वाराणसी



रसगङ्गाधरनाम्नः अलङ्कारशास्त्रस्य ग्रन्थस्य प्रसिद्धो रचनाकारः पण्डितराजजगन्नाथः खीष्टाब्दसप्तदशशताब्द्यामुत्पन्नः तैलङ्गब्राह्मण आसीत्। यस्मिन् ग्रामे स उत्पन्नस्तं विद्वांसः 'मुंगंड' ग्राम इति 'मुनिखण्डग्राम' इति च वदन्ति। ग्रामोऽयं पूर्वगोदावरीमण्डले वर्तते। जगन्नाथस्य शैशवे वयसि तत्पिता पेरुभट्टः लक्ष्मी नाम्ना पत्न्या समं काशीं गत्वा तत्रैवोवास। पेरुभट्टः काश्यां नैकेभ्यो विद्वद्भ्यो विद्याग्रहणमकरोत्, तथाहि—ज्ञानेन्द्रभिक्षोः वेदान्तशास्त्रम्, महेन्द्रपण्डितान्न्यायवैशेषिकदर्शने, खण्डदेवात् पूर्वमीमांसाम्, शेषोपाह्ववीरेश्वरपण्डितात् च महाभाष्यमधीतवान्। जगन्नाथः स्वपितुरेव प्रायो सम्पूर्णशास्त्राण्यगीष्ट। पितुर्गुरुः शेषवीरेश्वरोऽप्यस्य गुरुरासीत्।

पण्डितराजस्य जगन्नाथस्य कः सम्प्रदायः आसीदिति जिज्ञासायामिदम्प्रथमतया आचार्याणां पण्डितबलदेवोपाध्यायानां मतमुद्धर्तुं समीचीनमिति प्रतिभाति। ते तं पण्डितराजजगन्नाथं परमवैष्णव इति मन्यन्ते, समर्थितश्च तैः तस्य परमवैष्णवत्वमेभिः शब्दैः—

'पण्डितराज जगन्नाथ परमवैष्णव थे। इसका परिचय वृद्धावस्था में मथुरा निवास के अतिरिक्त उनकी भक्तिमयी कविताओं से भी विशेष रूप से मिलता है'। (संस्कृत साहित्य का इतिहास, पृ. ३६०)

परमाचार्यैरुपाध्यायवर्यैः पण्डितराजस्य वैष्णवेषु सम्प्रदायेषु विशिष्टाद्वैत-सम्प्रदायदीक्षितत्वं शुद्धाद्वैतसम्प्रदायदीक्षितत्वं वेति न स्पष्टतां नीतम्। अस्माकमेके सुहृदः अन्यः एकः आचार्यः पण्डितराजं विशिष्टाद्वैत-

सम्प्रदायदीक्षितं कथितवन्तः, यतः पण्डितराजेन रसगंगाधरे प्रतिवस्तूपमालङ्कार-विचारप्रसङ्गेन 'आलुवन्दारुस्तोत्रस्य' पद्यमिदमुदाहृतम्—

तवामृतस्पन्दिनि पादपंकजे निवेशितात्मा कथमन्यदिच्छति।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं हि वीक्षते।।

नैतावदेव, पण्डितराजः 'पाण्डित्यवीरस्य' उदाहरणरूपं पद्यमिदं प्रस्तौति—

अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवताऽपि वा।
अयमस्मि पुरो हयाननस्मरणोल्लंघितवाङ्मयाम्बुधिः।।

अत्र 'हयानन' इत्यनेन हयग्रीवो भगवानभिप्रेतः। हयग्रीवं भगवन्तं विष्णोरवतारभेदमामनन्ति। हयग्रीवस्य भगवत् उपासना श्रीवैष्णवसम्प्रदाये निश्चयतया भवति। तत्र च स भगवान् श्लोकेनानेन उपश्लोक्यते—

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे।।

अपि च, पण्डितराजस्य कानिचित् पद्यानि श्रीवैष्णवसम्प्रदायस्य महाकवेर्वेदान्तदेशिकस्वामिनः पद्यानां बन्धच्छायां स्पृशन्ति प्रतीयन्ते, यथेदमेव यमुनास्तुतिरूपममृतलहरीगतं पण्डितराजस्य पद्यम्—

दानान्धीकृतगन्धसिन्धुरघटा गण्डप्रणालीमिलद्-
भृङ्गालीमुखरीकृताय नृपतिद्वाराय बद्धोऽञ्जलिः।
त्वत्कूले फलमूलशालिनि मम श्लाघ्यामुरीकुर्वतो,
वृत्तिं हन्त मुने प्रयान्तु यमुने वीतज्वरा वासराः।।

वेदान्तदेशिकस्वामिवर्याः एवमाहुः—

दुरीश्वरद्वारबहिर्वितार्दिकादुरासिकायै विहितोऽयमञ्जलिः।
यदञ्जनाभं निरपायमस्ति मे धनञ्जयस्यन्दनभूषणं धनम्।।

अपि च पण्डितराजः सूर्यस्तुतिरूपायाः सुधालहर्या अन्त्यं पद्यमेवं प्रस्तुतवान्—

'ऊर्ध्वं पापावलिभ्यः स्थित इति जगदे यस्य वेदैरुदाख्या
निन्युः कप्यासनाभं खलु सह चरतां नेत्रयोः पुण्डरीकम्'।

इत्यादि। अत्र 'कप्यासनाभमिति प्रयोगो' विचारणीयः। छान्दोग्योपनिषदि १.१.७—'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद'। अत्र शाङ्करभाष्यम्—'तस्यैवं सर्वतः सुवर्णवर्णस्याप्यक्ष्णोर्विशेषः। कथम्? तस्य यथा कपेर्मर्कटस्याप्यासः कप्यासः, आसेरूपवेशनार्थक्यकरणे छाञ्, कपिपृष्ठान्तो येनोपविशति। कप्यास एव पुण्डरीकमत्यन्ततेजस्वि, एवमस्य देवस्याक्षिणी। उपमितोपमानत्वान्न हीनोपमा। अत्र श्रीवैष्णवाचार्या व्याख्यानादस्मादसहमतिं भजमानाः सन्ति यथा वेदान्तदेशिकस्वामिवर्यैः स्तोत्ररत्नस्थस्य द्वादशतमस्य पद्यस्य टीकायामेवं लिखितम्—छान्दोग्यस्थं लिंगमाह कः पुण्डरीकनयन इति।

अयमभिप्रायः—'तस्य यथाकप्यासं पुण्डरीकमेवमक्षिणी' इति तत्रैव पुण्डरीकनयनत्वोक्तेः पुरुषोत्तमस्यैव च तत्रादित्यो वाऽन्यो वा तादृशः शङ्कनीयः। यद्यपि द्रमिडभाष्ये 'तस्य यथा कप्यासम्' इत्यादेः षडर्थाः प्रोक्ताः, तथाप्यौचित्यात् त्रय एव स्वीकर्तव्याः तथा चोक्तम्—वेदार्थसंग्रहे-गम्भीराम्भः समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षः। वयन्तु, एवं पण्डितराजस्य तर्कैरेभिः श्रीवैष्णवसम्प्रदायदीक्षितत्वं कल्पयितुं शक्यमपि, तर्केष्वेषु न द्रढीयस्त्वमित्यनुभवामः, यतः रसगङ्गाधरे आलुवन्दारुस्तोत्रस्य नामोल्लेखः तद्गतस्य तवामृतस्यन्दिनी'त्यादेः पद्यस्योद्धरणञ्च पण्डितराजस्य श्रीवैष्णवसम्प्रदायदीक्षितत्वसाधने सर्वथा शिथिलस्तर्कः। वस्तुतः पद्यमिदं परमशैवैरप्पयदीक्षितैः 'कुवलयानन्दे' समुद्धृतम्, तत एवादाय पण्डितराजैः पद्येऽस्मिन् विचारः कृतः। कुवलयानन्दकाराणामप्पयदीक्षितानां श्रीवैष्णव-सम्प्रदायदीक्षितत्वं यथाऽनेन पद्यस्यास्य उद्धरणमात्रेण न साधयितुं शक्यम्, तथा पण्डितराजस्यापि।

किन्तु पाण्डित्यवीरस्योदाहरणप्रसङ्गेन प्रस्तुतं 'अपि वक्षि (वक्ति) गिरांपतिरि'त्यादि पद्यं यत्किंचित् पण्डितराजस्य श्रीवैष्णवसम्प्रदाय-दीक्षित्वसाधकं दृढतरं प्रमाणमिति वक्तुं शक्यम्। तत्रापि प्रश्न एष समुपस्थातुं शक्यः, यत् पद्यमिदं किं स्वगतमेव हयाननस्मरणोल्लंघितवाङ्मयाम्बुधित्वमिति निर्दिष्टमिति? यद्यपि नैकानि पद्यानि स्वस्य पाण्डितस्य गर्वसंवलितानि भामिनीविलासादौ दृश्यन्ते, तथैव पद्यमिदमप्यात्मन एव पाण्डित्यस्य सूचकं स्यात्। वस्तुतः, विष्णोरवतारत्वेन मते भगवति हयानने विशेषेण

श्रद्धाभावोल्लेखि पद्यमिदं पण्डितराजस्य केवलं वैष्णवत्वमेव द्रढयति। न तु श्रीवैष्णवसम्प्रदायदीक्षित्वम्। इतरे तर्का अपि न तथा दृढा इति शक्यते वक्तुम्, यथा वेदान्तस्वामिनामेकेन पद्येन पण्डितराजस्य पद्यस्यैकस्य समान-बन्धच्छायावत्त्वम्। अनेन द्वयोः सम्प्रदायैकत्वं साधयितुं कथञ्चिदपि न शक्यम्। शङ्कराचार्याणामपि कानिचित् पद्यानि पण्डितराजस्य पद्यानि समानाभिप्रायाणि समुद्धर्तुं शक्यानि। स्वविरोधिनामपि पद्येभ्यः कदाचित् स्वकवित्वस्य स्पर्शविशेषेण किमपि वैशिष्ट्यमुत्पादयितुं समानार्थसंवलितानि पद्यानि कवयो निर्मान्ति। 'कप्यास'शब्दस्य पण्डितराजेन कृतः प्रयोगास्तु शाङ्करभाष्य-मेवानुधावति। अन्यथा तेन सूर्यस्तुतिप्रसङ्गतः तस्य निर्माणं न कृतं स्यादिति मन्ये। श्रीवैष्णवसम्प्रदायानुगतानां वेदान्तदेशिकस्वामिनां मते तु विष्णुस्तुतिपरोऽयं मन्त्रः, न त्वादित्यस्तुतिपरः। अस्तु अस्माकं परिकल्पनानुसारेण तु पण्डितराजः शुद्धाद्वैतवादिनां श्रीवल्लभाचार्याणां सम्प्रदाये दीक्षित आसीत् इति। यद्यपि नास्माभिः एकतरपक्षपातिनी मतिरवलम्बितुं शक्यते, अस्माकमपि अनुमानं हेत्वाभासवर्जितमिति न शक्यं वक्तुम्, तथापि सुधियां पुरः काश्चिद् युक्तयः उपस्थायितुं वयमपि प्रवर्तामहे।

पण्डितराजोऽपि महाराणाजगत्सिंहस्य सभायामासीदिति प्रसिद्धिः। अनेन कृष्णभट्टस्य पण्डितराजस्य च समकालिकत्वं सिद्धम्। पण्डितराजोऽपि स्वनाम्ना समं भट्ट इति लिखतिस्म। तस्य पितृचरणा अपि पेरुभट्टा इत्यासन्नेव। चित्रमीमांसाखण्डनस्य पुष्पिकासु तन्नाम जगन्नाथभट्ट इति निर्दिष्टमुपलभ्यते—

'इति श्रीभट्टभट्टारकपेरुभट्टात्मजेन पण्डितराजाभिधानेन जगन्नाथभट्टेन निर्मिते चित्रमीमांसाखण्डन उपमाप्रकरणदोषाः'।

यथा वल्लभाचार्याणां सम्प्रदाये हरि-हर-लक्ष्मी-सूर्यादीनां देवानां अपि विषये न काचिद् भेदमूल्य दृष्टिर्मन्ये भवति, न तथा श्रीवैष्णवसम्प्रदाये दृश्यते। यद्यपि तेषां हृदि कश्चन शिवद्वेषो न भवति, तथापि भगवतः शिवस्य नामोल्लेखमपि न चिकीर्षन्ति। पण्डितराजस्तु हरिहरादीन् देवान् प्रति अभक्तिभेदेनास्थां प्रकटयति। सत्यमेवं श्रीकृष्णरूपे परब्रह्मणि तस्य द्रढीयसी काचिदास्थेत्यत्र न कोऽपि विचिकित्सितुमर्हति। 'करुणालहर्यां' स्वस्य स्तोतव्यस्य देवस्य सम्बोधनं 'गदाग्रज' इत्युल्लिखति पण्डितराजः—

'गदाग्रज! त्वन्मुखफुल्लपंकजं कदा मदक्ष्णोरतिथीभविष्यति'।

इतोऽपि स्पष्टतरं तत्रैव, यथा—

पुरातनानां वचसामगोचरं महेशितारं पुरुषोत्तमं पतिम्।
अपास्य तं त्वां निरपत्रपा सती सती मतिमे कथमन्यमेष्यति।।

तत्रैव—

अपि शर्वपितामहादिभिर्भजनीयः पुरुषोत्तमो हि यः।
तमुपालभमानमुद्धतं धिगिमं मां धिगिमां धियं मम।।

'भामिनीविलासस्य' शान्तविलासे तु स्पष्टमाह पण्डितराजः—

सन्त्येवास्मिन् जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु।
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भि-
श्चित्तारूढं भवति किमपि ब्रह्म कृष्णाभिधानम्।।

(शान्तविलास-११)

'शान्तविलास' एव पण्डितराजेन साध्यवसानरूपकसमाश्रयणेन भगवान् श्रीकृष्णः क्वचित् तमालद्रुम इति वर्णितः, क्वचित् काऽपि कादम्बिनी इत्युक्तः क्वचिच्च कृष्णेत्यक्षरयोरपूर्वं माधुर्यं संस्तुतम्। प्रायः शुद्धाद्वैतिनः पुष्टिमार्गीया यमुनां प्रति विशेषेण भक्तिं प्रकटीकुर्वन्ति। पण्डितराजेन 'अमृतलहरी' यमुनास्तुतिरूपा निर्मिता। यमुना च तेन 'श्रीकृष्णनित्यप्रिये' इत्युक्ता। यमुनायास्तटे कदा मुक्तो भवेयमिति कामनाऽपि तेन प्रकटीकृता—

'पायं पायमपायहारि जननि! स्वादु त्वदीयं पयो,
नायं नायमनायनीमकृतिनां मूर्तिं दृशोः कैशवीम्।
स्मारं स्मारमपारपुण्यविभवः कृष्णेति वर्णद्वयं
चारं चारमितस्ततस्तव तटे मुक्तो भवेयं कदा।।

पण्डितराजेन यमुनावर्णनरूपं किमपि गद्यकाव्यं गद्यपद्यमयं चम्पूकाव्यं वा लिखितमित्यनुमातुं शक्यम्, यथा तेन 'रसगङ्गाधरे तृतीयस्य काव्यस्य लक्षणस्य प्रस्तुवानेनोक्तम्—यथा यमुनावर्णने—'तनयमैकगवेषणलम्बीकृत जलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी'। गङ्गालहर्यां 'विष्णोः पदं ददाना' (११) गङ्गा स्तुता।यथास्थानं कपालिप्रभृतीनां

देवानां शक्तेः सीमाऽपि पण्डितराजेन निर्दिष्टाः। भामिनीविलासस्य प्रास्ताविकविलासे स्पष्टमाह पण्डितराजः—

किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छामतिः।
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः।।

(प्रास्ताविकविलासः-८६)

इत्यादिरपि शक्यते तस्य कल्पयितुं द्वैतपराङ्मुखत्वम् भगवद्विष्णुसाम्मुख्यञ्च। पण्डितराजेन 'मधुपुरीमध्ये हरिः सेवते' इत्यभिदधानेन स्वीया हरिनिष्ठा विशेषेण समर्थिता। पण्डितराजः वल्लभाचार्यसम्प्रदाये कस्मादाचार्याद् दीक्षां गृहीतवानिति क्वचिदपि तेन न निर्दिष्टम्। एतदेव प्रमाणीभवति यदयं वैष्णवमतानुयायी आसीदिति सिद्धम्।



# रससम्मतचतुर्वादविमर्शः

**डॉ. राजकुमारमिश्रः**
प्रवक्ता, साहित्ये
हरियाणा-संस्कृत-विद्यापीठम्
बघौला, पलवलः, हरियाणा



इह हि अपारे काव्यसंसारे कवीनां कृते वर्तते किमपि रसतत्त्वोन्मेषवैशिष्ट्यम्। मम्मटाचार्यो हि सद्यः परिनिर्वृतिधामत्वात् परमरमणीयं रसं निरूपयति—

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।।
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः[1]।।

लोके दृश्यत एव नवयौवनोद्वलितचित्तवृत्तीनां यूनां कामिनीनां च मिथो मनोहररूपावलोकनेन सौन्दर्यादिगुणश्रवणेन वा प्रीतिर्जायते। ततस्तल्लावण्यादिभिश्चन्द्रिकोपवनधीरसमीरादिभिश्चोद्दीपिता सा प्रीतिरभिलाषस्वरूपेण परिणमते, सैव प्रीतिः रतित्वेन समुपगम्यते काव्योद्यानोत्फुल्लसुमसंरक्षकैर्विद्वत्तल्लजमूर्तिभिः। एवं भूतायां रतौ प्रियसमागमोपायमाचरतोः प्रिययोश्चिन्ताग्लानिशङ्काविषादादयो जायन्ते। ततो मिथः प्रीतिव्यञ्जिकाः चेष्टाः प्रादुर्भवन्ति। ततः कदाचित्काकतालीयन्यायेन स्वतः दूतीसम्प्रेषणादिना वा समागमः सम्पद्यते। तत उत्तरोत्तरं सा रतिः प्रवणायते। चिन्तादयोऽप्यपगच्छन्ति। सैवात्युत्कटतां गता द्रवीभूते चित्ते प्रतिबिम्बते। यदुक्तम्—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि[2]।।

इयमेव वासना रतिसन्निभा चित्ते चिरम् अवतिष्ठते। इयं वासना जातुचिद् जन्मान्तरजाऽपि बोद्धुं शक्या। यथा द्रवीकृतायां लाक्षायां निक्षिप्तो

---

१. का.प्र. ४.४२; २. गीता २.६७।

रागः पुनः पृथक् कर्तुं न क्षम्यते तथैवास्त्यवस्थितिर्रसस्य तदीयवासनायाश्च। अतो हि केन साधनविशेषेण रसो निष्पद्यत इति भरतीयम्मतमवतार्यते—

'विभावानुभावव्यभिचारि-संयोगाद्रसनिष्पत्तिः'।

पूर्वं हि ललितसूत्रेऽस्मिन् समावेशितानां विभावानुभावव्यभिचारिणां स्वरूपं किमिति? जिज्ञासा तरलोत्तरङ्गिता जायते। एतस्माद्धेतोः कोऽयं विभाव इति विविच्यते।

**विभावः**

**रसोद्बोधे विभावाद्याः कारणान्येव ते मताः** अर्थाद् रसप्रतीतौ विभावाः कारणत्वेन समुपगम्यन्ते रसासेवनगृहीतव्रतैः। यो हि स्थायीभावम् आस्वादयोग्यं निर्माति सः विभावः। **विभावयति रत्यादीन् आस्वाद-योग्यतां नयतीति विभावः**। दशरूपककारो धनञ्जयाचार्य इत्थं प्रकटयति विभावम्—

ज्ञायमानतया तत्र विभावो भावपोषकृत्।
आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा[१]।।

अयञ्च विभावः आलम्बनोद्दीपनभेदेन द्विविधः। यं याञ्चावलम्ब्य रसोत्पत्तिर्जायते स आलम्बनविभावः। यथा शकुन्तलां निर्वर्ण्य दुष्यन्तचित्ते रतिभावो जागर्ति। अतो ह्यत्र शकुन्तला आलम्बनविभावोऽस्ति येन च पुनः कारणेन रत्यादिभाव उद्दीप्यते स उद्दीपनविभावत्वेन विज्ञायते कोविदकवनकलाकलापकुशलमिलिन्दप्रखरमानसैः। यथा शृङ्गाररससन्दर्भे मलयमारुतम्, निरभ्रचन्द्रिका, कोकिलरवादयः।

**अनुभावः**

**रत्यादिस्थायीभावान् अनुभावयतीति अनुभावः**। आचार्यो महेश्वरतर्कालङ्कारो ब्रूते **अनुभावस्तत्कार्यम्**। आचार्यो धनञ्जयो वक्ति—

'अनुभावो विकारस्तु भावसंसूचनात्मकः'।

साहित्यदर्पणकाराचार्यविश्वनाथो लक्षयत्यनुभावमित्थम्—

उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः[२]।।

अर्थस्तु स्पष्ट एव। अनुभावो भरतमुनिना स्वपाणिपल्लवोद्भाविते नाट्यशास्त्रग्रन्थरत्ने लक्षितो यथा—

---

१. सा.द. ३,१४; २. सा.द. ३,१३२।

वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते।
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः[१]॥

अर्थाद् यो वाचिकाभिनयेनाङ्गिकाभिनयेन वा रत्यादिस्थायीभावस्य आन्तरिकाभिव्यक्तिरूपं बाह्यरूपेऽनुभावयति स अनुभावः।

**व्यभिचारिभावः**

अर्थाद् **रत्यादीन् स्थायिनः कार्ये सञ्चारयन्ति मुहुर्मुहुरभिव्यञ्जयन्तीति सञ्चारिणः**। यथा पारावारे कल्लोला उत्तिष्ठन्तः पतन्तश्च भवन्ति तथैव यो भावो मूलस्थायीभावे सञ्चरति यश्चास्थिरो भवति असौ खलु व्यभिचारित्वेन समुपगम्यते—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥

तदनु प्रसङ्गेऽस्मिन् पण्डितमुकुटायितपण्डितेन्द्रपण्डितराजजगन्नाथो वक्ति स्वरचितसाहित्यशास्त्रग्रन्थकदम्बकान्यतमे रत्नभूते रसगङ्गाधरे—यानि सह चरन्ति तानि व्यभिचारिपदेन व्यपदिश्यन्ते—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'।

इत्येतत्सूत्रं तुर्य्यैर्भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्तपादाचार्यादिभिराचार्य्यैर्निर्भरं व्याख्यातम्। पूर्वं लोल्लटीयम्मतमेव विव्रियते[२]।

इह लोल्लटमते संयोगनिष्पत्तिशब्दयोरर्थत्रयं गृह्यते।

१. विभावैः साकं स्थायिभावानां सम्बन्ध उत्पाद्य-उत्पादकभावः, तेन च रसस्य निष्पत्तिरित्यस्यार्थ उत्पत्तिरिति।

२. अनुभावैः समं स्थायिभावानां गम्यगमकभावसम्बन्धः, तेन च रसस्य निष्पत्तिरित्यस्यार्थः प्रतीतिरिति।

३. व्यभिचारिभावैः सह स्थायिभावानां पोष्यपोषकभावसम्बन्धः, तेन च रसस्य निष्पत्तिरित्यस्यार्थः पुष्टिरिति।

अत एव व्याख्यायां 'जनितः' 'प्रतीतियोग्यः कृतः' तथा 'उपचिते'ति पदानि अकारिषत व्याख्यात्रा लोल्लटभट्टेन। अतः एतत्सम्बन्धबलेन निष्पन्नो

---

१. ना.शा. ७,५।

२. विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः, अनुभावैः कटाक्ष-भुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिः निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि।

रसः सीतादिविषयकः रामादावनुकार्ये एव साक्षात्सम्बन्धेन विभावादि-प्रतिपादककाव्यशब्दाऽभिधया वा प्रतीयते। नायकसन्निभवेषविन्यासाभि-नयादिकर्तरि नटे च तत्तुल्यरूपतानुसन्धानवशादसन्नपि आरोप्यमाणः सहृदयानां साश्चर्यानुभवश्चमत्कारहेतुरिति। इदञ्च मतं मीमांसकमतम्, उत्पत्तिवादश्चापि कथ्यते।

**निष्कर्षः**

यथाऽसत्यपि सर्पे सर्पवदवलोकनाद् दाम्नो भयमुदेति, विधूननादिकञ्च जायते तथा सीताऽनुरागरूपा रतिर्नटेऽविद्यमानाऽपि नाट्यनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सामाजिकानां चमत्कुर्वाणां रसपदवीमधिरोहतीति।

**मतेऽस्मिन् विप्रतिपत्तयः**

सामाजिकेषु रसभावाभावात् सामाजिकानां चमत्कारतो निवृत्तिः। यतो हि अनुकार्ये मुख्यरूपेणोत्पत्तिर्भवत्येव तदभिनयमहिम्ना अनुकर्तरि नटेऽपि तथा सम्भवेत्। परञ्चाऽत्र सामाजिके कथन्तावद्रस उत्पद्येत इति न कोऽपि विचारो व्याख्यात्रा भट्टलोल्लटेन अस्तीर्यत।

**श्रीशङ्कुकमते**

शङ्कुकेन रसः अनुमेयत्वेन स्वीकृतः। एतन्मते सूत्रस्य रत्यादेः विभावादिभिः सह संयोगाद् अनुमाप्यानुमापकभावरूपसम्बन्धाद् रसस्य रत्यादेः निष्पतिरनुमितिरित्यर्थः। लोके हिं दृश्यन्ते चतुर्धा प्रतीतयः, ताश्च सम्यग्-मिथ्या-संशय-सादृश्यप्रतीतिभेदात्। तथा हि 'राम एवायम्' इति रामत्वायोगव्यवच्छेदिका प्रतीतिः, 'अयमेव रामः' इत्यन्यव्यवच्छेदिका प्रतीतिः सम्यक् प्रतीतिः'न रामोऽयम्' इत्युत्तरकाले बाधे सति रामोऽयमिति या प्रतीतिः सा मिथ्या प्रतीतिः 'रामः स्याद्वा न वा इति संशयप्रतीतिः रामसदृशोऽयम् इति सादृश्यप्रतीतिरिति लौकिकाभ्यः चतसृभ्यः प्रतीतिभ्यो भिन्नया चित्रतुरगादिन्यायेन रामाद्यभिनयकर्तरि नटे 'रामोऽयम्' इति प्रतीतिर्जायते तया प्रतीत्या विषयीकृतो नटः—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलालिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥

संयोगशृङ्गारस्य—

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च।
अविरलविलोलजलदः कालः समुपागतश्चायम्॥

इत्यादिकाव्यानुशीलनमहिम्ना शिक्षाभ्यासाभ्यां सिद्धीकृत-कार्यप्रदर्शनेन नटेन प्रकाश्यमाणैः कृत्रिमैः सद्भिरपि कृत्रिमतयाऽनवभासितैर्विभावादि-शाब्दीव्यवहारप्रसिद्धैः (विभावानुभावसञ्चारिभिः) संयोगाद् अनुमाप्यानुमापक-भावरूपसम्बन्धादनुमीयमानो रत्यादिभावः नटेऽविद्यमानोऽपि स्थायित्वेन नटे सहृदयैः सम्भाव्यमानः स्थायिनामास्वादमयत्वादस्यानुमानस्यान्यानुमान-विलक्षणत्वात् सामाजिकानां चमत्कारप्रतीतिरूपचर्वणया आस्वाद्यमानो रसः। अनुमानाकारश्च ,रामोऽयं सीताविषयकरतिमान् सीताविषयककटाक्षादिमत्त्वाद् यन्नैवं तन्नैवं यथा विरक्त इति।

**मतेऽस्मिन् विप्रतिपत्तयः**

रसानुभवे साक्षात्कारात्मकप्रतीतेरूपपादनम् अनुमानद्वारेण न सम्भवति। अनुमानज्ञानं सर्वदैव परोक्षाधारितमिति न च साक्षात्कारात्मकम्। पुनश्च सा अनुमितिरपि वास्तविकी न प्रत्युत कृत्रिमोपेता। अतो हि न जनयति सामाजिकानां किमपि मनोहरं निर्मलचित्ते स्थानविशेषभावमिति।

**भट्टनायकमते**

भरतमुनिरससूत्रस्य तृतीयो व्याख्याकारो भट्टनायकः सामाजिकेषु जायमानसाक्षात्कारात्मकरसानुभूतेरुपपादनाय कमपि नवीनमेव पन्थानम् अवललम्बे। असौ हि पन्थाः भुक्तिवादेति नाम्ना समुपगम्यते। तस्याशयोऽयं यद् रसनिष्पत्तिर्नाम न अनुकार्ये रामादौ न वा अनुकर्तरि नटादौ। अनुकार्यानुकर्तारौ द्वावेवोदासीनौ तटस्थौ। अतस्तत्र रसानुभूतिर्न सम्भवति। प्रत्युत वास्तविकी रसानुभुतिः, सामाजिकगता भवति। तत्र केनाप्यन्येन व्याख्यात्रा उपपादितम्। भट्टनायकस्य भुक्तिवादो विविधैर्व्याख्यातृभिः सांख्यमतानुयायी सिद्धान्त इत्यङ्गीकृतः। यथा सांख्ये सुखदुःखादयो वस्तुत अन्तः करणधर्मा न वाऽत्मनः परन्तु पुरुषस्य अन्तः करणसम्बन्धमहिम्ना पुरुषे तेषां सुखादीनाम् औपाधिकी प्रतीतिर्जायते तथा सामाजिकैः स्वच्छभावनासम्वलितमानसैरसद्रसो भुज्यते (तेष्वविद्यमानत्वादपि शेषः)।

**निष्कर्षः**

काव्ये नाट्ये चाभिन्नेन भावकत्वव्यापारेण साधारणीकृतो भोजकत्व-व्यापारेण सहृदयैर्भुज्यमानो (विषयीक्रियमाणो) रत्यादिकः स्थायी रस इति।

**शङ्काप्तिः**

भट्टनायकेन सामाजिकगतरसानुभूत्युपपादनाय प्रयत्नपरेण यौ भावकत्वभोजकत्वव्यापारौ प्रत्यग्रतया कल्पितौ, तौ नानुभवसिद्धौ। यद्यपि भोजकत्वं व्यञ्जनाद्वारेण तथापि भावकत्वस्य स्वीकारे गौरवम्। यद्यपि

फलमुखगौरवं न दोषाय, तथापि साधारणीकरणस्य व्यापारान्तरस्वीकारमन्तराऽपि सम्भवात्। भावकत्वं भावना। सा च सहृदयानां व्यापारो न पुनः काव्यस्येति।

**अभिनवगुप्तपादाचार्य्यमतम्**

आचार्याभिनवगुप्तमते स्थायिनो विभावादिभिः संयोगाद् व्यङ्ग्यव्यञ्जकभावसम्बन्धाद् रसस्य निष्पत्तिरभिव्यक्तिरिति सूत्रार्थः।

लोके हि नायकयोर्मिथश्चेष्टां समीक्ष्य तयोर्रत्यादिकस्यानुमाने लब्धपाटवाः सहृदया यदा समुचितशब्दसौष्ठवसंरक्षितवाग्वैदग्धविन्यासभावितसुललितवेशचारु काव्यं अधीयते नाट्यं वा पश्यन्ति तदा काव्येन प्रतिपादितान् नटेनाभिनयद्वारा प्रकाशितान् वा कारणत्वादिकं परिहृत्यालौकिकविभावनादिव्यापारवत्त्वाद् विभावादिव्यपदेशभाजः शकुन्तलादीन् विभावान् चन्द्रोद्यानोद्दीपनविभावान् अश्रुपातादीननुभावान् चिन्तादीन् व्यभिचारिणः निजसहृदयतासहकारेण भावनाविशेषबलेन ते शकुन्तलात्वदुष्यन्तरमणीत्वादिविशेषधर्मरहितान् साधारणीकृतानवगच्छन्ति। ततस्ते सम्भूय (अन्यशास्त्रेष्ववर्णितत्वाद्) अलौकिकं व्यञ्जनाव्यापारं प्रादुर्भावयन्ति। ततो व्यञ्जनया सहृदयानामात्मन आनन्दांशावरणभूतमज्ञानमपसार्यते। ततश्च सहृदयेषु परिमितप्रमातृता (अहमस्मि इमे विभावादयो ममैव नान्यस्येत्यादिरूपा) लुप्यते। ततो वेद्यान्तरस्पर्शशून्याऽपरमितप्रमातृतामाप्तानां सहृदयानां चित्तेषु प्राग्विनिविष्टवासनारूपेण स्थितो रत्यादिस्थायीभावो विभावादिसंवलितः स्वप्रकाशरूपेण निजस्वरूपानन्देन विषयीक्रियमाणो ब्रह्मास्वादमिवानुभावयन्नलौकिकचमत्कारी शृङ्गारादिको रसः।

अत्राभिनवगुप्तेन रस अलौकिकत्वेन समुपबृंहितः। अर्थादसौ लौकिकान्यवस्तुभ्यो भिन्न एवेति। तस्य सत्ता विभावादिजीवितावधिरेव स्थिरीभवति। नो चेद् विभावादिविनाशेऽपि तस्योपस्थितिर्नाम। अतो हि रसो न कस्यापि कार्यः, न च ज्ञाप्यः। अतः कार्यज्ञाप्याभ्यां भिन्नो विभावादिभिर्व्यञ्जितः चर्वणीयश्च एवायं रसः। किञ्च—

ब्रह्मास्वादसहोदरोऽमृतघटः सञ्जीवनो जीवन-
स्यालोकं परिभावयन् गुणबलात्संवित्प्रहर्षावहः।
स्वाच्छन्दोद्भवबोध्यकार्यरहितो योऽयं रसोऽलौकिकः
सोऽयं मङ्गलमातनोतु सततं साहित्यसारालयः[१]॥

●

१. लेखकेन विरचितम्।





श्रीमत्पण्डितमालवीयविदुषा श्रीविश्वविद्यालयो
योऽयं स्थापित एष तत्रभवता दोषज्ञलीलाकरः।
काशीराजवरैः कुलाधिपतिभिः स्वीयैः कराम्भोरुहैः
मान्यश्रीरघुनाथशर्मविदुषे वाचस्पतिर्दीयते।।



# गुरुवर्याणां पं. रघुनाथशर्मणां संस्मरणम्

**डॉ. नरेन्द्रकुमारतिवारी**
प्रवक्ता
लक्ष्मीराजदेवी-(इण्टर-कालेज) उत्तरमाध्यमिकविद्यालयः
बलिया



नमामि तं श्रीरघुनाथनाथं गुरुं वरेण्यं परमं प्रकाशम्।
अलङ्कृता येन स्वजन्मनोर्वी ज्ञानस्वरूपं मुनिपुङ्गवं च॥

छाताविहारी शिवदो गुरुर्यो विमुक्तसङ्गश्च जितेन्द्रियश्च।
शास्त्रेषु पारङ्गतयोगिराजो ददातु विद्यां भवमुक्तिहेतोः॥

संस्कृतवाङ्मयाकाशे द्युमणिरिव पण्डितप्रवरः स्वनामधन्यो विद्वन्मुकुटमणिर्योगिराजः श्रीरघुनाथशर्ममहाभाग इति सर्वविदितमेव। वेदान्तव्याकरणन्यायमीमांसासाहित्यधर्मशास्त्रादिविषयेषु पारङ्गतोऽयं महात्मा चतुर्विधसंन्यासिभेदेषु परमहंसः श्रेष्ठो योगी इति निश्चितम्। अयं खलु बलियाजनपदस्य छातानामके ग्रामे जन्म लब्ध्वा स्वविद्ययाऽलौकिकपाण्डित्येन च संस्कृतवाङ्मयमलञ्चकार। विद्वद्वरेण्योऽयं विश्वप्रसिद्धस्य काशीहिन्दूविश्वविद्यालयस्य संस्थापकस्य विभिन्नविद्याविदुषः पं. मदनमोहनमालवीयस्य पं. दुर्गादत्तपरमहंसस्य च गुरोः सर्वतन्त्रस्वतन्त्रस्य वेदान्तप्रतिमूर्तेः अवधूतस्य श्रीमतः काशीनाथशर्ममहाभागस्य पुत्र आसीत्। माता सुभद्रादेवी अतिदृढव्रता पतिप्रिया, सुशीला गृहकर्मणि सुदक्षा चेति।

अस्य महापुरुषस्य जन्म वैक्रमे षट्पञ्चाशदधिकैकोनविंशततमे संवत्सरे आषाढमासस्य एकादश्यां तिथौ अभवत्। दसवर्षपर्यन्तं छाताग्राम एव उषित्वा विद्याध्ययनार्थं स्वपितुः पार्श्वे हरिद्वारं जगाम। तत्रैव हरिद्वारे पिता संस्कृताध्यापक आसीत्। स दिव्यतेजस्वी अग्निहोत्री सत्यवक्ता जितेन्द्रियो ब्रह्मवेत्ता महामुनिश्च गुरुवरस्य श्रीशर्मणो गुरुः आसीत्। इत्थं पिता एव गुरुः, अध्यापकश्च आसीत्। हरिद्वारे षट्वर्षपर्यन्तं व्याकरणन्यायवेदान्तधर्मशास्त्रादीन् अधीत्य पित्रा सह विद्वत्सेवितां काशीपुरीम् आजगाम, यत्र पिता उदासीनसंस्कृतविद्यालये अध्यापकत्वेन नियुक्तो जातः।

काश्यां निवसन् अयं गुरुवर्यो व्याकरणे आचार्यपरीक्षामुत्तीर्य मीमांसा-सांख्यवेदान्तादिविषयेषु सम्यग् ज्ञानं प्राप्य पितुः सेवया च काश्यां मान्यो विद्वान् अभवत्। विद्याबलेन श्रीगुरोर्नियुक्तिः संन्यासिसंस्कृतविद्यालये वेदान्तशिक्षकपदे जाता। ततः परम् एकदैव ब्रह्मविद्यासंस्कृतविद्यालये माडवारीसंस्कृतविद्यालये च नियुक्तोऽयं वन्दनीयो गुरुः।

पितुराज्ञया अस्य महानुभावस्य विवाहः 'केशरीदेव्यया' सह सञ्जातः। सा च पतिव्रतपरायणा तपस्विनी आसीत्। तस्याः तिस्रः कन्याः समुत्पन्ना इति। दुर्भाग्येन तस्यां केशरीनामभार्यायां मृतायां पितुरादेशानुसारेण 'बच्चीदेव्यया' सह पुनर्विवाहो विहितः। तस्यां षट्पुत्राः समुत्पन्नाः। अमेरिकादेशे हूनूलोनू-विश्वविद्यालये भाषाविज्ञानस्याचार्योऽध्यक्षश्च वर्तते यो भारतवर्षेऽपि सम्मानितोऽयं पं. रमानाथशर्मा गुरुवर्याणां प्रथमः पुत्रः। द्वितीयश्च पं. भवनाथपाण्डेयोऽस्ति, यो वनविभागे उच्चाधिकारी आसीत्। चिकित्साधिकारी पं. सोमनाथपाण्डेयः तृतीयः पुत्रः, पं. मुक्तिनाथपाण्डेयः प्रवक्ता अस्ति लक्ष्मीराजइण्टरविद्यालये। महातपा साधुगुणसम्पन्नो बहुज्ञोऽतिधार्मिकः मितभाषी विद्वान् य इदानीं सम्पूर्णानन्द-संस्कृतविश्वविद्यालये वाराणस्यां प्राचीनराजशास्त्रार्थशास्त्रविभागे अध्यक्षः आचार्यः प्रतिकुलपतिश्च वर्तते। अयं पण्डितप्रवरः डॉ. नरेन्द्रनाथपाण्डेयः परमगुरोः पञ्चमः पुत्रः अस्ति। षष्ठश्च विद्याविनयादिगुणसम्पन्नोऽविमुक्तनाथपाण्डेयः यः सम्पूर्णानन्द-संस्कृतविश्वविद्यालये अनुसन्धानविभागे सहायको वर्तते।

पितरि शिवलोकं गते मातरि च पतिलोकमयं गुरुवर्यः धैर्यं नात्यजत्। विपत्काले समापन्ने सर्वशास्त्रविशारदो विद्वत्छ्रेष्ठो बहुविचार्य पितुः शिवस्य मातुः ललितादेव्याश्च सेवां गङ्गास्नानं नित्यं च समारभे। ललितापूजनपूर्वकं पार्थिवार्चनपुरःसरं च यावज्जीवनं पूर्णिमाव्रतं चक्रे। विद्याप्रभावात् महानुभावः राजकीयसंस्कृतविद्यालये नियुक्तो जातः। यदायं विद्यालयो वाराणसेयसंस्कृत-विश्वविद्यालयरूपेण प्रवर्तितः तदा गुरुदेवो वेदान्तविभागाध्यक्षपदमलञ्चकार। यद्यपि गुरोः सेवाकालस्य निर्वृत्तिः पञ्चषष्ट्युत्तरैकोनविंशे ख्रीष्टाब्दे सञ्जाता, तथापि यावज्जीवनं छात्रान् अध्यापकान् विदुषः साधूंश्च पाठयामास।

विदुषां छात्राणां च ज्ञानलाभाय लोकमङ्गलहेतवे च अनेके ग्रन्था गुरुणा लिखिताः सन्ति। ते यथा—गणपतिस्तवः, वायुस्तवः, सूर्यस्तवः, कृष्णस्तवः, रामस्तवः, सन्ततिस्तवः, लक्ष्मीस्तवः, सुन्दरच्छायं शीतलाशतकम्, अपराजिता-शतकम्, उमाशतकम्, चित्रनिबन्धावलिः, पराम्बाकुसुमाञ्जलिः, वाक्यपदीयपाठ-भेदनिर्णयः, पार्वतीपरिणयं नाम काव्यं दर्शनबिन्दवश्चेत्यादयः स्वतन्त्रग्रन्थाः। हिन्दीभाषया 'अहमर्थविवेकसमीक्षा' विशिष्टो ग्रन्थो विद्यते। वाक्यपदीयं नाम महाग्रन्थस्य विश्वविश्रुता अम्बाकर्त्री-टीका एतेषामेव महापुरुषाणामस्ति, या विदुषां छात्राणां च कृते अत्यन्तोपयोगिनी अलौकिकी चास्ति। व्याकरणमहाभाष्यस्य चित्सुखीति विशिष्टस्य ग्रन्थस्य च सम्पादनं भवद्भिः कृतमस्ति।

'धम्मपद'नामग्रन्थस्य आचार्यशङ्करमतानुसारी टीका अलौकिकी अस्ति। वस्तुत: आचार्यशङ्करेणापि भक्तिमाहात्म्यं विशदरूपेण वर्णितम्। बौद्धानां महायान-सम्प्रदाये ज्ञानस्य स्थाने भक्तेरुपयोगो कथ्यते। गुरो: मतं यत् शङ्करमतबौद्धमतयो: सामान्यमन्तरं न तु मूलतो भेद इति। वस्तुत: सर्वे सम्प्रदाया एकमेव सत्यं प्रकटयितुं प्रयत्नरता: सन्ति। अन्यानि च अनेकानि पुस्तकरत्नानि मुद्रितान्य-मुद्रितानि च सन्ति। काशीहिन्दूविश्वविद्यालयेन संस्कृतविश्वविद्यालयेन च अयं महाभागो 'वाचस्पति:' इत्युपाधिना अलङ्कृत:। उत्तरप्रदेशस्य संस्कृत-अकादमीति संस्था 'विश्वसंस्कृतभारती' इत्युपाधिना अलङ्कृतवती। राष्ट्रपतिपुरस्कारेण पुरस्कृतोऽयं गुरुवर: 'पद्मश्री:' इति उपाधिनापि पुरस्कृतो जात:।

स निरन्तरमविरामगत्या दुर्गाराधनां ध्यानं च कुर्वन् निशीथे विशेषरूपेण ध्यानमकरोत्। भक्तिबलेन एकदा सानुजस्य भगवतो रामचन्द्रस्य दर्शनं कृत्वा वार्तामपि कृतवान्, एवं कृतकृत्यो जात:। ध्यानस्य विषये गुरोर्निर्देशनमस्ति यत् चिरकालं रूपध्यानं न कर्तव्यम्। तेन विकृति: सम्भाव्या इति। आत्मचिन्तनं च सदैव कर्तव्यम्। 'काश्यां मरणान्मुक्ति:' इति विषये सोऽकथयत्—शिरसि ब्रह्मरन्ध्रे ज्ञानभूमिर्विद्यते योगिनां कृते इयमेव काशी अस्ति। यतो हि 'काशृ दीप्तौ' धातो: काशीशब्दो निष्पद्यते, यत्र ज्ञानमस्ति तत्रैव काशी इति। योगिनां प्राणवायु: ब्रह्मरन्ध्रेण निर्गच्छति, अत: योगिनां मृत्युस्तु सदा काश्यामेव भवति, तेषां मुक्तिर्भवत्येव। तेषां कृते सम्पूर्णपृथ्वी काशी अस्ति, अपरायत् काशी दृश्यते सापि क्रमश: ज्ञानदा शिवा चास्ति, यत: ज्ञानान्मुक्तिर्भवति अत: पूर्ववदपरापि काशी परम्परया शिवा मुक्तिदा चास्ति।

एकदायं योगी योगबलेन पितुरावाहनं चक्रे, शिवलोकग: पितापि समागत्य कञ्चित्कालं चर्चां कृतवान्। किञ्चिद्विचार्य गुरुवर्य: एकं महाभाष्यस्य प्रश्नं पृष्टवान् यं श्रुत्वा पित्रा कथितं यत् कैयटे पादटिप्पण्यां लिखितमस्ति, पश्य। गुरु: दुर्गाया: परमो भक्तो पूर्णमनोरथश्चासीत्। सुषुप्तौ दुर्गया सार्द्धं यदा कदा चर्चापि श्रुता आसीत्। तेनानुभवपूर्वकं कथितं यद् दुर्गाराधनेन देवगन्धर्वसिद्धानां दर्शने गति: जायते। यदतिक्रान्तमनागतं च तत्सर्वं मातृभक्त्या ज्ञायते दृश्यते च।

एकदा विद्वत्सभायामेकेन एका समस्या प्रस्तुता। तेनोक्तम्—यदि भवन्त: सर्वे संस्कृतज्ञा: सन्ति, तर्हि समस्येयं प्रपूर्यताम्—समस्या अस्ति 'जरातोवतादोशनम्'। अथ चेयमाकर्ण्य अन्ये सर्वे उक्तवन्त: 'नेयं संस्कृतं नैव संस्कृतम्' सम्भवं न हि अस्या: पूरणम्। ततो गुरुणा उक्तं 'संस्कृतमेवास्ति अस्ति संस्कृतं समाधानं च सम्भवम्, मया चेयं पूर्यते' इति कथयित्वा क्षणं विरम्य उक्तवान्—

पूर्वतो यद्गतं वृद्धिमेकान्ततो यद्भटैरुद्भटैर्नैव सम्बाधितम्।
तन्महारोगवाताहतं साम्प्रतं जीर्यते हा जरातोवतादोऽशनम्।।

समस्यापूर्तिरूपश्लोकस्यायं भावः—अत्र शरीरस्य नश्वरता कथिता। आरम्भकाले शरीरमिदं वृद्धिमेति, बलाधिक्यत्वादभिमानस्यापि वृद्धिर्भवति, वार्द्धक्ये रुग्णता आयाति, अन्ते मृते च श्रृगालकुक्कुरादीनां च भोजनं भवतीति प्रदर्शितम्। शब्दब्रह्मविदः परमगुरोः अलौकिकीयं समस्यापूर्तिः।

जीवने तेन यदाचरितं तत्सर्वं भगवदर्पणपूर्वकमेव। समर्पणभावत्वाद् भगवतः सदा सर्वतोभावेन च कृपादृष्टिरासीत्, यया कदापि स विचलितो नाभवत्। गुरोः कृते धामगमनं न आवश्यकमासीत्, यतः तीर्थादिरूपसोपानं तु पूर्वमेव पारं गतवान् आसीत्, अतः जीवने तीर्थाटनं तेन न कृतम्। छाताग्रामे वसन् मातृसदनमेव तीर्थसदृशमकरोत्। जीवनस्यान्तिमे काले तेनोक्तं यत् पुण्यो मार्गो दृश्यते मया, अस्मत्कृते तत्र प्रतीक्षाऽपि अस्ति, न मम कापि चिन्ता नैव कष्टं यतो हर्षशोकादिमुक्तोऽहं यथाविधि संन्यस्तोऽहम् इति। ईशामसीहप्रवर्तिते नवासीत्युत्तरैकोनविंशे संवत्सरे जूनमासस्य एकोनत्रिंशतारिकायां सर्वतोभावेन काश्यां पुत्राणां समक्षं पुत्रस्याङ्के स्थित्वा चित्तवृत्तीनां निरोधनं कुर्वन् योगबलेन ब्रह्मरन्ध्रमार्गेण नश्वरं शरीरं त्यक्त्वा शिवलोकं जगाम। तत्क्षणमेव संस्कृतवाङ्मयाकाशस्य रविः अस्तं गत इति विद्वद्वर्यैः स्वीकृतम्।

संस्कृतविद्वद्वर्येषु गुरुवर्याणां महती प्रतिष्ठा विद्यते। भाषाप्रौढि-व्याकरणपाटवं च गुरोः विपश्चितो रञ्जयति। मनोभावानां वर्णने तु अद्वितीयोऽयं महाभागः। अस्य महाविभूतेः शिष्याणां गणना नैव कर्तुं शक्यते, तथापि अतिमुख्यशिष्याणां नामस्मरणं क्रियते—पं. रामप्रसादत्रिपाठिमहाभागो यः संस्कृत-विश्वविद्यालये व्याकरणविभागाध्यक्ष आसीत्। पं. देवस्वरूपमिश्रः पूर्वकुलपतिः संस्कृतविश्वविद्यालये आसीत्। पं. भागीरथप्रसादत्रिपाठी, पं. श्यामनारायण-पाण्डेयः, पं. हरिश्चन्द्रमणित्रिपाठी, पं. व्रजवल्लभद्विवेदी, पं. नृत्यगोपालदासः, पं. रामशङ्करभट्टाचार्यः, पं. ठाकुरप्रसादमिश्रः, अमेरिकायाः जार्ज-कार्डोना, पं. महादेव-उपाध्यायः, पं. जगन्नाथ-उपाध्यायः, पं. रामयत्नशुक्लः, पं. व्रज-विहारीचतुर्वेदश्चाभवन्। एते शिष्याः स्वस्वविषयेषु मूर्धन्याः लोके शास्त्रप्रचारका बभूवुः।

अद्य नित्यवन्द्यः ऋषिकल्पः परमगुरुः पं. रघुनाथशर्मा अस्माकं मध्ये पार्थिवशरीररूपेण न दृश्यते, तथापि यशःकायेन तु समक्षं वर्तते, विदुषां हृदि सदैव तिष्ठति, तं गुरुं भूयो भूयो नमाम्यहम्—

शिष्याणां महती माला गणनं सम्भवं नहि।
नमामि गुरुणा सार्द्धं धन्यां शिष्यपरम्पराम्॥

इत्यनेन गुरुं नत्वा देव्यै च प्रणम्य विरमामि।

●

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **"वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२ (उ.प्र.)"** इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **"सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२ (उ.प्र.)"** इति सङ्केतेन विधेयः।

●

